श्रीकृष्णयज्वप्रणीता

# मीमांसापरिभाषा

पण्डितराज **श्रीशैलताताचार्य** कृताभ्यां

**परिष्कारः - अक्षरार्थ**

इति व्याख्याभ्यामुपेता

*सम्पादकः*

***डा. चक्रवर्ति रङ्गनाथः***

डि.टि. स्वामिप्रकाशनम्, तिरुपतिः

**2000**

# MĪMĀṀSĀ PARIBHĀṢĀ

of

*Śrī Kṛṣṇayajvan*

with the commentaries

**Pariṣkāra and Akṣarārtha**

of

**Paṇḍitarāja D.T. Tātācārya**

EDITOR

*Dr. C. Ranganathan*

Acharya (Nyaya), M.A. (Sanskrit & Telugu), Vidyavaridhi

*RESEARCH ASSISTANT*

**Rashtriya Sanskrit Vidyapeetha**

Tirupati

D.T. SWAMY PUBLICATIONS, TIRUPATI

**2000**

MĪMĀṀSĀ PARIBHĀṢĀ

Edited by

*Dr. C. Ranganathan*

First Edition - 2000

Copies : 1,000



Price : Rs. 150/-

***This book is published with the financial assistance of Tirumala Tirupati Devasthanams under their Scheme "Aid to Publish Religious Books"***

Copies can be had from :

*Smt. C. Kalyani*

Mother of C. Ranganathan

113, G.S. Mada Street, Tirupati - 517 501 ☎ : 20874

Printed at

**ANNAPURNA GRAPHICS**

53/3, R.S. Gardens, Tirupati-517 507 ☎ : 35006

॥ श्रीः ॥

॥ श्रीरङ्गराजपरब्रह्मणे नमः ॥

श्रीकृष्णयज्वप्रणीता

# मीमांसापरिभाषा

सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे ॥ १ ॥

बालानां शास्त्रसिद्धार्थाक्लेशबोधाय धीमताम् ।
मीमांसापरिभाषेयं क्रियते कृष्णयज्वना ॥ २ ॥

---

*श्री श्रीशैलताताचार्यविरचितः*

## परिष्कारः

वेदात्मना विहङ्गेन बद्धाञ्जलि पणायितम् ।
अधिपेण्णानदीतीरं धाम तन्मे प्रसीदतु ॥

श्रीमच्छास्त्रिमहाशयदयाकणो जयति यत्प्रभावेन ।
वस्त्विति विलोकनीयो विदुषामयमपि जनो जगति जातः॥

प्राच्यनव्यनयतन्त्रसंस्तवात्सेवया च सुधियां स्फुरन्मतिः ।
एष तातयशिरोमणिस्सतां तोषमावहति तन्त्रवेदिनाम् ॥

ननु धीमन्तः स्वयमक्लेशेन भोत्स्यन्ते, तदाह - **बालानामिति** ॥ अपरिचितेदंशास्त्रा य एतदधिजिगांसवो ग्रहणधारणयोः प्रगल्भन्ते, ते

**इह खलु महर्षिजैमिनिना द्वादशलक्षण्यां पूर्वमीमांसायां धर्माधर्मावेवानुष्ठानोपयोगितया विचारितौ। तत्र वेदबोधितेष्ट-साधनताको धर्मः । यथा यागादिः । वेदबोधितानिष्टसाधन-**

---

अत्राधिकारिण इति। धीमतेति केचित्पठनति ॥ **इहेति** ॥ अव्ययसमुदा-योऽयमिह खल्विति वाक्योपक्रमे। यद्वा **इहेति** द्वादशलक्षण्यामन्वेति ॥ कृतज्ञतामनुसन्दानः शास्त्रकारनाम कीर्तयति । **महर्षीति** । **लक्षणम्** अध्यायः ॥ **पूर्वमीमांसायाम्** तदन्तर्गतायामित्यर्थः । सङ्कर्षस्यापि पूर्वमीमांसात्वात् ॥ **धर्मेति** ॥ अस्य प्राधान्येनान्यस्य च तदपवादत्वेन विचारो बोध्यः। अतो न शास्त्रस्यानेकविषयत्वम्। उभयोरपि प्राधान्येनैव। वेदार्थत्वावच्छिन्नस्यैव विषयत्वात्। अत एव प्रथमसूत्रेऽकारप्रश्लेषोऽपीति तु परे। **एवेति** धर्माध्रमायोः प्राधान्येन निरूपणं सूचयितुम्। औपनिषदार्थ-विचारव्यवच्छेदफलकं वा। समानेऽपि वेदार्थत्वे तस्येहाविचार्यत्वात् ॥ **अनुष्ठानेति** ॥ सकलसंशयसमुन्मूलनेन यथा तौ सम्यगनुष्ठानोपयुक्तौ स्यातां तथेत्यर्थः ॥ तदेवमनेन वाक्येन, धर्माधर्मात्मको मीमांसाशास्त्रविषयोऽर्थः स्वप्रतिपिपादयिषितसमस्तपदार्थपरमोद्देश्यभूत इत्येवबोधयन् प्रबन्ध-मात्मीयमवतारयाम्बभूव ॥ **तत्र** धर्माधर्मयोर्मध्ये। **वेदेति** स्मृत्याचारयोर-प्युपलक्षणम्। अन्यथा **तयोश्चे**त्युत्तरग्रन्थासङ्गतेः। अथवा **वेदबोधितेति** वेदप्रयोज्यबोधविषयेत्यर्थकम् । तेन नोक्तानुपपत्तिः । तयोरपि वेदैक-मूलकत्वेन तज्जन्यबोधस्यापि तत्प्रयोज्यत्वाक्षतेः। न वा इष्टसाधनताया-स्साक्षाद्वेदाबोध्यत्वेऽप्यसम्भवः ॥ श्येनेऽपि लक्षणगमनमिष्टमेव ॥ **यागेति** ॥ आदिना दानहोमवत् विहितं द्रव्यमपि गृह्यते। एवमुत्तरत्र निषिद्धं द्रव्यमपि

**ताकोऽधर्मः । यथा कलञ्जभक्षणादिः । तयोश्च वेदः स्मृतिराचारश्च प्रमाणम् । तत्र वेदः स्वतन्त्रप्रमाणम् । वेदमूलकत्वेन स्मृतेः प्रामाण्यम् । आचारस्य तु वेदस्मृत्युभयमूलकत्वेन । स च वेदो द्विविधः - मन्त्ररूपो ब्राह्मणरूपश्चेति । तत्र प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते । प्रयोगोऽनुष्ठानं तत्कालीनेत्यर्थः ।**

---

।। **स्वतन्त्रेति** ।। न तावदत्रान्यानपेक्षं प्रमापकत्वं स्वातन्त्र्यम् । स्वज्ञानमपेक्ष्यैव वेदस्यापि तथात्वात् । नापि प्रमाणान्तरानपेक्षं तत् । श्रवणस्यापेक्षणात् । नापि पुरुषाधीनगुम्भनकत्वाभावः । अशब्दस्याचारस्यापि तथात्वापत्तेः । नापि पुरुषानधीनानुपूर्वीकत्वम् । तस्य शब्दगतनित्यत्वे पर्यवसानात् तस्य च शब्दगतस्वातन्त्र्ये हेतुत्वेन तदनात्मकत्वात् । अतः स्वेतरप्रमाणागोचरपदार्थप्रमापकत्वं स्वेतरशब्दानपेक्षं प्रमापकत्वं वा प्रकृते स्वातन्त्र्यमिति बोध्यम् ।।**वेदेति** ।। दृढकर्तुस्मरणेन, असर्वज्ञानां तत्कर्तॄणामलौकिकेऽर्थे प्रमाणान्तरमुखनिरीक्षणावश्यम्भावेन च न पूर्ववत् स्वातन्त्र्यमिति ।। **उभयेति** ।। स्वातन्त्र्याविरहिण आचारप्रमाणस्य न स्मृतिमात्रमूलकत्वम् । तस्या अप्यस्वातन्त्र्यात् । नापि साक्षाद्वेदमूलकत्वम् । इदानीमाचरितुर्मूलभूतवेदोपलम्भे सामर्थ्याभावेन यः तत्समर्थस्तादृशाचारप्रवर्तकः तदीयतादृशवेदार्थस्मृतेरवश्यमङ्गीकर्तव्यत्वादिति भावः ।।**वक्ष्यत इति** ।। विध्युपजीवितया मन्त्रोपयोगस्य विधिघटितब्राह्मणनिरूपणानन्तरमेव तन्निरूपणस्यावसर इति भावः ।। तर्हि ब्राह्मणरूपो मन्त्ररूपश्चेति विभागक्रमस्समुचित इति चेन्न । ब्राह्मणलक्षणं मन्त्रघटितमिति ज्ञापयितुं

**विधायकं वाक्यं ब्राह्मणम् । ब्राह्मणशेषश्चार्थवादः । तस्य विधेयप्राशस्त्यप्रतीतिजननद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यमिति च वक्ष्यते ।**

**तच्चानेकविधम् - कर्मोत्पत्तिवाक्यम्, गुणवाक्यम्, फलवाक्यम्, फलायगुणवाक्यम्, सगुणकर्मोत्पत्तिवाक्य-**

---

क्रमान्तराश्रयणात् । मन्त्रपदवाच्यत्वेनाभियुक्तप्रसिद्धिविषयत्वरूप-मन्त्रत्वावच्छिन्नभिन्नवेदत्वं हि ब्राह्मणत्वमिति ॥ अत एव '**विधायकं वाक्य**' मिति न ब्राह्मणलक्षणम् । अर्थवादस्य तृतीयविधात्वप्रसङ्गेनोक्त-द्वैविध्यभङ्गापत्तेः । विधायकमन्त्रविशेषे अतिप्रसङ्गाच्च ॥ अत एव च '**मन्त्रब्राह्मणयोर्वेदनामधेयम्**' '**कर्मचोदना ब्राह्मणानि**' '**ब्राह्मण-शेषोऽर्थवाद**' इत्यापस्तम्बोक्तिरपि विध्यर्थवादस्वरूप परिचायनमात्रपरा । अन्यथा विधिवाक्यघटकपदानामिवार्थवादस्यापि विध्यन्तर्भूतत्वेन द्वैविध्यभङ्गविरहेऽपि मन्त्रविशेषेऽतिप्रसङ्गस्य दुर्वारत्वापत्तेरिति ॥ **ब्राह्मण-शेष इति** ॥ विधिवाक्यात्मकब्राह्मणशेषः अर्थवादात्मकं ब्राह्मणमित्यर्थः ॥ अनेन वाक्यद्वयेन ब्राह्मणं द्विविधं विध्यर्थवादभेदादिति विभागोऽभिसंहितः । प्रवर्तनानिवर्तनान्यतरबोधकं वाक्यं विधिः । तद्भिन्नोऽर्थवादः ॥

**तच्च** विधिवाक्यञ्च ॥ **कर्मोत्पत्तीति** । तन्मात्रेत्यर्थः । एवमुत्तरत्राऽपि विना फलाय गुणवाक्यम् ॥ उत्पत्तिः स्वरूपबोधनम् ॥ **गुणेति** । गुणविधायकं वाक्यं गुणवाक्यम् ॥ **फलेति** । तत्सम्बन्धबोधकं वाक्यमित्यर्थः ॥ **फलायेति** । नन्वत्र को गुणः न तावद्गुणत्वजात्यवच्छिन्नः । दध्यादेरतथात्वात् । नाप्यप्रधानभूतः । फलं प्रति कर्मणोऽप्रधानतया

**मित्यादिभेदात्। तत्र येन वाक्येनेदं कर्म कर्त्तव्यमिति बोध्यते, तत् कर्मोत्पत्तिवाक्यम्। यथा 'अग्निहोत्रं जुहोती'ति। अत्र अग्निहोत्रहोमः कर्तव्यतया विधीयत इति कर्मोत्पत्तिवाक्यम्। विहिते कर्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुण-वाक्यम्। यथा 'दध्ना जुहोती'ति गुणवाक्यमिदम्। कर्माङ्गतया**

---

फलवाक्येऽतिव्याप्त्यापत्तेः। उच्यते - क्रियाभिन्नः प्रकृते गुणः। एवमपि गुणवाक्येऽतिव्याप्तिः, होमादिरूपफलाय गुणविधानात्, यदुद्दिश्य प्रवृत्तिः तदेव हि फलम्। कार्यान्तर साधनत्वासमानाधिकरणसाध्यत्वावच्छिन्नं फलमिति तु इन्द्रियपशुवृष्ट्यादीनां फलत्वानापत्तेरसम्भवि। मैवम्। कामशब्दघटितपदबोध्यत्वं प्रकृते फलत्वमिति दिशा फलपदार्थस्य निर्वचनीयत्वादिति ॥ **इत्यादीति**। आदिना कर्मफलोभयबोधकं गुणकर्मफलत्रितयबोधकञ्च वाक्यं परिगृह्यते ॥ **यथाग्नीति। इदमत्र बोध्यम्** -वाक्यादस्मादग्निहोत्रहोमकरणिका भावना विधिविषय इति बोधो भवति। अस्यैवार्थस्य सुखपरिज्ञानाय विशेषणविशेष्यभावं व्यत्यस्याभिलपने विधिविषयीभूतभावनाशब्दाभिधेयकृतिविषयोऽग्निहोत्रहोम इत्यर्थकेन अग्निहोत्रहोमः कर्तव्य इति वाक्येन तदभिलापस्सम्भवतीति ॥ **विधीयत इति** ॥ ज्ञाप्यत इत्यर्थः। **विहित इति**। सप्तम्युद्देश्यत्वार्थिका ॥ एकमन्योद्देशेन विहितं यत्तदेवाङ्गपदाभिधेयमिति व्युत्पादयितुं **तदङ्गतयेति** फलितकथनम् ॥ ननु दधि द्रव्यम्, न गुणः, तदाह। **कर्माङ्गेति**। तथा च पारिभाषिकं गुणत्वमिति भावः ॥ इदञ्च गुणत्वं प्रकृतोदाहरणवाक्यमात्राभि-प्रायेण। सार्वत्रिकं तु क्रियाभेदसमानाधिकरणं विधेयत्वमिति दिशा

**विहितत्वमेव दध्यादेर्गुणत्वम् । अत्र होमस्योद्देश्यत्वं नाम मानान्तरप्राप्तत्वे सति विधेयान्वयितया निर्देश्यत्वम् । तस्यैव मानान्तरप्राप्तस्य पुनः कथ्यमानत्वरूपमनुवाद्यत्वं दध्यादिगुणान्वयितया प्राधान्यञ्च । दध्यादेस्तु मानान्तराप्राप्तत्वादत्रैव विधेयत्वं होमसाधनत्वाच्च होमापेक्षया गुणत्वं पुरुषेणानुष्ठीयमानत्वच्चोपादेयत्वं चेति । अत्र मानान्तरप्राप्तत्वं मानान्तरज्ञातत्वम्, अप्राप्तत्वञ्चाज्ञातत्वमिति बोध्यम् । उत्पन्नस्य कर्मणः फलाकाङ्क्षायां फलसम्बन्धबोधको विधिः फलविधिः । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति ।**

---

चिन्तनीयम् । तेन गुणकामवाक्येषु दध्यादेः कर्माङ्गत्वविरहेऽपि न क्षतिः ॥ उपरिष्टान्नामधेयप्रस्तावे आक्षेपमेकं परिहरिष्यन् उद्देश्यत्वानुवाद्यत्व-प्राधान्यरूपमेकम्, उपादेयत्वविधेयत्वगुणत्वरूपमपरमिति त्रिकद्वयमभि-धास्यति । तत्र यत्र क्वचिदेतद्व्युत्पादनेऽवश्यकर्तव्ये '**दध्ना जुहोती**'ति प्रकृतवाक्ये होमगतोद्देश्यत्वेन तद्घटितत्रिकस्य, दधिगतविधेयत्वेन तद्घटितत्रिकस्यचोपस्थितत्वेन '**इह वा वक्तव्यं तत्रवेति न कश्चिद्विशेष**' इति न्यायमनुसृत्यात्रैव तद्द्वयन्निरूपयति अत्रेत्यादिना ॥ **फलाकाङ्क्षा-यामिति** । फलस्य विशिष्य जिज्ञासायामित्यर्थः । तेन विधिसामर्थ्येन सामान्यरूपेण फलान्वयान्निराकाङ्क्षान्वयबोधजनके '**अग्निहोत्रं जुहोती**त्यादिस्थले फलाकाङ्क्षाशान्त्यवश्यम्भावेऽपि न प्रकृतासंगतिः । अत्र स्वर्गकामपदस्य स्वर्गे लक्षणा । अध्याहारमपेक्ष्यास्या लघुत्वात् । प्रथमा द्वितीयार्थे । द्वितीया तृतीयार्थे । तथा च अग्निहोत्रहोमेन स्वर्गं

**अत्र यः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्रनामकं होमं भावयेदित्यग्निहोत्रवाक्योत्पन्नस्य कर्मणः फलसम्बन्धो बोध्यत इति फलवाक्यमिदम् । प्राप्तं कर्माश्रित्य फलाय गुणविधौ फलाय गुणवाक्यम् । यथा 'दध्नेन्द्रियकामस्य जुहुया'दिति । अत्राग्निहोत्रवाक्योत्पन्नं होममाश्रित्येन्द्रियफलाय दधिरूपो गुणो विधीयते । होमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेदिति ।**

---

भावयेदित्यस्यैव बोधस्यास्मन्मते प्रामाणिकत्वेऽपि व्युत्पित्सुसौकर्याय यथाश्रुतार्थमेवाह **अत्रेत्यादिना** ॥ **तत्साधनत्वेनेति** । यद्यपि स्वर्गसाधनतावाचिपदाश्रवणादिदमसङ्गतमिति भाति । तथाऽपि स्वर्गसाध्यकहोमसाधनकभावनाविषयकप्रथमबोधानन्तरं होमः स्वर्गसाधनमिति तत्साधनत्वरूपतत्सम्बन्धावगाहिनः पाश्चात्यबोधस्योदयान्नानुपपत्तिरिति ॥ **कर्माश्रित्येति** । आश्रयत्वेन कर्मणो गुणे सम्बन्धमङ्गीकृत्येत्यर्थः ॥ लक्षणं संगमय्य प्रदर्शयति **अत्रेत्यादिना** ॥ एतदुपपादकं साक्षाच्छाब्दबोधाकारं दर्शयति **होमेति** ॥ **इयमत्रोपपत्तिः**- एतद्वाक्यमात्रपर्यालोचने विशिष्टहोमभावनाप्रतीतावपि वाक्यान्तरविहिताग्निहोत्रहोमप्रकरणपठितैतद्वाक्यघटकधातूपस्थापितं प्रकरणपर्यालोचने बुद्धौ विपरिवर्तमानं तादृशविजातीयहोमं विषयीकर्तुमशक्नुवन् एतद्वाक्यघटकः अज्ञातज्ञापनस्वभावो विधिर्गुणमेव पक्षप्राप्तदध्यात्मकं विषयीकरोति । **दध्ना इन्द्रियं भावयेदिति** विधेराकारः सम्पद्यते । एवं सति दध्नस्सिद्धद्रव्यतया शिक्यस्थेनापि तेन फलनिष्पत्तिसम्भवे पुरुषव्यापारानपेक्षणाद्विधिरफल इति तत्सामर्थ्याद्दधिसाध्यक्रियाविशेषस्य कस्यचिदवश्यापेक्षितत्वे प्रकरणेन, समर्प्यते यः स एव गृह्यते । अयमेव

**होमाश्रितेन होमकरणीभूतेनेत्यर्थः। अयमेव गुणफलविधिर्गुण-कामविधिरपि चोच्यते। द्रव्यदेवतादिगुणविशिष्टकर्मविधायकं वाक्यं सगुणकर्मोत्पत्तिवाक्यम्। यथा 'सोमेन यजेते'ति। अत्र सोमलताविशिष्टो यागो विधीयते। विशिष्टविधावपि विशेषणस्यार्थाद्विधिः। क्वचित् कर्मोत्पत्तिवाक्यमेव**

---

चाश्रय इति व्यवह्रियते। एवञ्च प्रकरणसहकारेण होमाश्रितेन दध्ना इन्द्रियं भावयेदिति बोधो वाक्यादस्माद्भवति। धात्वर्थस्तु साधुत्वार्थमनुवाद इति॥ **गुणफलेति**। गुणजन्यं यत्फलं तद्बोधकविधिवाक्यमित्यर्थः। गुणफलसम्बन्धबोधकविधिवाक्यमिति यावत्॥ कामोऽपि फलमेव॥ **देवतादीति**। '**यदाग्नेय**' इति देवताविशिष्टस्य, '**यदग्नीषोमीयं पशुमालभत**' इति लिङ्गसंख्यादिविशिष्टस्य च कर्मणो विधायकमिति ध्येयम्॥ ननु '**व्रीहिभिर्यजेते**'तिवद्गुणवाक्यमेवेदमस्तु तत्राह **अत्रेति**॥ तत्र यागस्य मानान्तरप्राप्तत्वाद्युक्तं गुणविधिरिति। प्रकृते तु न प्राप्तिरस्ति। '**ऐन्द्रवायवं गृह्णाति**' '**मैत्रावरुणं गृह्णाती**'त्यादिवाक्यानां देवताविशिष्टग्रहणमात्रविधायकत्वस्य पशुसोमाधिकरण सिद्धत्वात्। अधिकारवाक्येऽपि लाघवाद्वाक्यान्तरविहितकर्मान्तरानुवादस्यैवापत्त्या विजातीयकर्मविधायकत्वासम्भवस्योपपादितत्वादिति भावः। **विशिष्टेति**॥ अयमर्थस्सोमपदे मत्वर्थलक्षणया लभ्यः। ननु विशेषणविशेष्यात्मक-विशिष्टविधौ विधेरुभयतात्पर्यकत्वे विधेयानेकत्वेन वाक्यभेदः। अथ विशेष्यमात्रपरत्वम्, विशेषणं तर्हि अवैधमापद्यते इत्याशङ्क्य समाधत्ते **विशिष्टेत्यादिना**॥ **विशिष्टविधावपि** विशिष्टविधौ सत्यपि॥

**फलसम्बन्धबोधकमपि भवति । यथा - 'उद्भिदा यजेत पशुकाम' इति । अत्रोद्भिन्नामको यागो वाक्यान्तराविहित एव पशुकामस्य पशुफलाय विधीयत इत्येकमेवेदं वाक्यं फलसाधनतया कर्मविधायकम् ॥**

**प्रधानविधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतामापन्नः सन् सर्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् प्रयोगविधिः**

---

इदमेवोक्तशङ्कासमर्पकम् ॥ **अर्थादिति** ॥ सामर्थ्यादित्यर्थः । न हि विशेषणमननुतिष्ठता विशिष्टमनुष्ठातुं शक्यम् । अतो विशिष्टमनुष्ठापयन् श्रूयमाणो विधिर्विशेष्यमात्रे तात्पर्यवानपि स्वबोधितानुष्ठाननिर्वाहाय विध्यन्तरं विशेषणविधायकमाक्षिपति । न तु तत्रापि स्वयं व्याप्रियत इति न विशेषणस्यवैधत्वं न वा वाक्यभेद इति ॥ विधिवाक्यविभागे आदिपदार्थयोराद्यमुदाहर्तुमाह । **क्वचिदिति** ॥ **उद्भिन्नामक इति** ॥ उपरिष्टादिदं स्पष्टीकरिष्यते ॥ **'सौर्यञ्चरुन्निर्वपेद्ब्रह्मवर्चसकाम'** इति तु द्वितीयस्योदाहरणम् ॥

पुनरपि विधिश्चतुर्विधः = उत्पत्ति-विनियोग-प्रयोग-अधिकार-विधिभेदात् । तत्र कर्मस्वरूपबोधकः **'अग्निहोत्रं जुहोती'**त्यादिराद्यः । अङ्गताबोधकः **'व्रीहिभिर्यजेते'**त्यादिर्द्वितीयः । कृतिसाध्यताबोधको नित्यानुमेयः अस्मिन्देशे काले एते कर्तार इदमित्थं कुर्युरित्येवंरूपस्तृतीयः । अधिकारबोधकः **'अग्निहोत्रं जुहुयात्स्वर्गकाम'** इत्यादिरन्त्यः । अत्र सुबोधतया इतरानुपेक्ष्यावश्यनिरूपणीयापूर्वतद्भेदनिरूपणप्रसङ्गसम्पादकं नित्यानुमेयं प्रयोगविधिमेव निरूपयितुमुपक्रमते। **प्रधानेति** ॥ **एकवाक्यतयेति** ॥ वाक्यैकवाक्यतयेत्यर्थः ॥ तदर्थान्वितस्वार्थविषयक-

इत्युच्यते । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति । अत्राग्निहोत्रहोमेन स्वर्गं भावयेदित्यर्थः प्रतीयते । भावयेत् उत्पादयेत् कुर्यादिति यावत् । अत्र कथमनेन होमेन स्वर्गं कुर्यादिति कथम्भावाकाङ्क्षा जायते । यथा कुठारेण द्वैधीभावं कुर्यादित्युक्ते भवत्याकाङ्क्षा कथमनेन द्वैधीभावं कुर्यादिति । अत्रोद्यमननिपातनादिसहायेनेति गम्यते । तद्वदत्रापि 'अग्निं प्रणयति' 'अग्निषु समिध आदधाती'त्याद्यङ्गविधिविहित-प्रणयनसमिदाधानायतनशोधनादिकाङ्गकलापजनितोपकार-सहितेनाग्निहोत्रहोमेन स्वर्गं कुर्यादिति प्रकरणकल्पितेन महावाक्येन स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयत इत्येतादृशः प्रयोगविधिः। अङ्गजातमेवेत्थम्भाव इति इतिकर्तव्यतेति

---

शाब्दबोधजनकत्वं वाक्यैकवाक्यत्वम् । तादृशस्वार्थोपस्थितिजनकत्वं पदैकवाक्यत्वम् ॥ ननु कथम्भावापरपर्यायेति कर्तव्यताकाङ्क्षायां तस्या एवान्वयमभिधाय तद्विशिष्टकर्मप्रयोगो विधीयत इति वक्तव्ये तादृशाकाङ्क्षयाऽङ्गान्वये साङ्गकर्मप्रयोगो विधीयत इति कथमुच्यत इति शङ्कानिदानभूतम् अङ्गेत्थम्भावेतिकर्तव्यतापदानां भिन्नार्थत्वभ्रमं वारयति। **अङ्गजातमिति** ॥ अत्रानङ्गमितिकर्तव्यता नैवास्ति । अनितिकर्तव्यतात्व-मस्ति मन्त्रादिकमिति बोध्यम् ॥ **इत्थम्भाव इति** ॥ इत्थम् ईदृशप्रकारवान् तस्य भाव इत्थम्भावः । ईदृश इति प्रकारविशेषपरिचायकम् । तथा च प्रकारवत्वात्मकः प्रकारस्तदर्थः ॥ **इतिकर्तव्यतेति** ॥ इति इत्थम् ईदृश-प्रकारेण कर्तव्यं साध्यम् इतिकर्तव्यं तस्य भावः इतिकर्तव्यता। ईदृशप्रकार-

**चोच्यते । अत्राग्निहोत्रहोमः प्रधानं प्रणयनादिकं सर्वमङ्गम् ।।**

---

विशिष्टसाध्यत्वञ्च साध्यनिष्ठ ईदृशप्रकारकत्वात्मक ईदृशप्रकारे पर्यवस्यति । तथाचात्रापि प्रकारार्थकत्वं पूर्ववत् ।। प्रकारो नाम विशेषः । तत्राख्यातेन भावनाशब्दाभिधेयव्यापारसामान्याभिधाने कथम्भावयेदिति तद्विशेषजिज्ञासायां प्रयाजादिकं क्रियात्मकमङ्गजातमन्वीयमानं तां शमयति । तदेवं सामान्यरूपभावनायाः प्रयाजादिकं विशेष इति तदेवेतिकर्तव्यता-शब्देनाभिधीयते । अत एव विशेषाकाङ्क्षारूपकथम्भावाकाङ्क्षापूरकत्वमेव इतिकर्तव्यतात्वमिति मिश्रो मेने। करणगत शक्त्याधायकसामग्रीत्वं तदिति तु देवः ।। अङ्गत्वस्याङ्गिसापेक्षत्वात् तत्कीर्तनपुरस्सरं प्रकृते इतिकर्तव्यता-पदाभिधेयमङ्गजातमुदाहरति । **अत्रेत्यादिना** ।। यद्वा ननु समानप्रकर-णोत्पन्नानां सर्वेषामेव कर्मणां साक्षात्फलकरणत्वोपपत्तौ एकस्यैव तदङ्गीकृत्य '**फलाय साङ्गाग्निहोत्रप्रयोग**' इति न युज्यत इत्याशङ्का-परिजिहीर्षया '**फलवत्सन्निधावफलं तदङ्ग**'मिति न्यायसिद्धं प्रकृत-कर्मणामङ्गाङ्गिभावं प्रतिपादयति । **अत्रेत्यादिना** ।। प्रकरणपठितानामेक-यागार्थानां बहूनामङ्गानान्नवैकल्पिकत्वम् । यागस्योपकारकाकाङ्क्षायां **खले कपोतन्यायेन** सर्वाङ्गान्वयेन तेषामेकयागोपकारार्थत्वावगमेऽपि व्रीहियववद्दधिपयोवद्वा प्रधानस्वरूपनिष्पत्तिरूपदृष्टद्वारकत्वविरहेणादृष्ट-द्वारकत्वावश्यम्भावे एकजन्यादृष्टस्यापरेण जनने मानाभावेन तत्समुच्चयस्यावश्यापेक्षितत्वादिति सूचयति । **सर्वमिति** ।। **इदन्त्विह वक्तव्यम्** - उक्तं प्रागधिकारबोधको विधिरधिकारविधिरिति । अधिकारश्च प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणं कर्तृत्वम् । सोऽयमधिकारः

**नन्विदमनुपपन्नम् - आशुतरविनाशिनां कर्मणां कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरितिचेत् । मैवम् । विहितनिषिद्धकर्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्मणां कालान्तरभाविफलसाधनत्वोपपत्त्यर्थमन्तरा पुण्यपापरूपमपूर्वं कल्प्यते । ततश्च यागादेः अपूर्वद्वारा स्वर्गसाधनत्वं, न साक्षात् । तदेव फलापूर्वम् । तत्करणत्वञ्च प्राच्योदीच्याङ्गविशिष्टस्य प्रधानस्य भवति, न प्रधानमात्रस्य । प्रधानमात्रादेव फलापूर्वजनने फलस्यापि तत एव सिद्धेरङ्गानामानर्थक्यापत्तेः । ननु सर्वाङ्गविशिष्टस्य प्रधानस्य**

---

फलवाक्येन बोध्यत इति '**अग्निहोत्रं जुहुयात्स्वर्गकाम**' इत्ययमधिकारविधिरेव विनियोगविधिर्वा न तु प्रयोगविधिः । तत्र तु प्रयोगो विधीयेत यत्र प्रयोगान्वयी गुणो देशः कालः कर्ता वा श्रूयेत । यथा '**समे दर्शपूर्णमासाभ्यां यजेत**' '**सायं जुहोती**'त्यादौ । तथा च प्रधानविधिरेवेत्यादिनाऽभिहितम् '**अग्निहोत्रं जुहुयात्स्वर्ग काम**' इत्यस्य प्रयोगविधित्वं न घटत इति । वाक्यैकवाक्यतैकप्राणः प्रयोगविधिरितीदं शिष्यान् सुखं ग्राहयितुम् अधिकारवाक्यमपीदं प्राचीनमतच्छायया प्रयोगविधिं कृत्वोदाजहारेति तु मन्तव्यम् ॥

परमापूर्वसाधनानुकूलं प्रयोगविध्याक्षेपमुपक्षिपति । **नन्विति** ॥ इदम् अग्निहोत्रादिप्रयोगस्य स्वर्गादिफलाय विधानम् ॥ **कालान्तरेति** ॥ '**यन्नदुःखेने**'त्यादिना लक्षितस्य दुःखासम्मिश्रस्य सुखस्य लोकेऽस्मिन्कचिदप्यननुभवादिति भावः ॥ **अवगत इति** ॥ तथाच श्रुतार्थापत्तिप्रमाणकमपूर्वमिति भावः ॥ इतरनिरपेक्षं प्रधानमात्रेण

**अपूर्वजनकत्वमयुक्तम्, आशुतरविनाशिनः प्रधानस्याङ्ग-साहित्याभावादितिचेन्न । प्रधानकर्मणः स्वरूपेणाङ्ग - साहित्याभावेऽपि उत्पथ्यपूर्वद्वारा साहित्यसम्भवात् । प्रधानस्य सर्वाङ्गसाहित्यसिद्ध्यर्थं प्रधानकर्मपरमापूर्वयोर्मध्ये प्रधान-मात्रजन्यमुत्पत्तिनामकं किञ्चिदपूर्वमस्तीत्यङ्गीकारात् । एवमङ्गानामपि परस्परसहितानामेव प्रधानोपकारकत्वात्तेषां स्वरूपेण साहित्याभावात् तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं बोध्यम् । अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलापूर्वजनन - सामर्थ्योन्मुखीकरणमेव ॥**

**दर्शपूर्णमासयोस्तु विशेषः । यदाग्नेयोऽष्टाकपालोऽमा-**

---

तदनुष्ठानोत्तरक्षणे जायमानमुत्पत्तिसंज्ञमपूर्वान्तरं साधयितुं भूमिकाम् आरचयति । **तदिति** ॥ तत्करणत्वं परमापूर्वकरणत्वम् ॥ प्राच्यं प्रधान-प्राक्कालिकम् ॥ उदीच्यं तदनन्तरकालिकम् ॥ '**उत्पत्त्यपूर्वद्वारा साहित्यसम्भवा**'दित्येतदेव विवृणोति । **प्रधानस्येति** ॥ अथाङ्गजन्या-पूर्वसाधनायाह । **एवमिति** । **सहितानामेवेति** ॥ एकस्यैव तथात्वे इतरवैयर्थ्यात् विकल्पासम्भवस्य चोक्तत्वादिति भावः ॥ देवतोद्देशेन द्रव्यत्यागरूपो यागः न स्वात्मलाभे प्रयाजादिकमपेक्षत इति प्रधानोप-कारकत्वमन्यादृशमाह । **अङ्गानामिति** ॥ आरादुपकारकाणामिति शेषः॥ प्रधानस्येति तद्वृत्तित्वार्थकं सामर्थ्यान्वयि ॥ उन्मुखीकरणं सम्पादनम् ॥

यागस्वर्गयोर्मध्ये उत्पत्त्यपूर्वफलापूर्वभेदभिन्नमपूर्वद्वयमेतावता-साधितम् । अनयोरपि मध्ये क्वचिदपूर्वान्तरमावश्यकमिति प्रतिपादयितु-मुपक्रमते । **दर्शेति** ॥ ननु को दर्शः कः पूर्णमासः तन्निरूपयन

**वास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवतीत्याग्नेय यागो विहितः। ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदित्य-ग्नीषोमीययागो विहितः। 'उपांशुयाजमन्तरा यजती' त्युपांशु-याजः 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशुपौर्णमास्यां यज' न्निति वाक्यात् पौर्णमास्यां विहितः। एतानि पौर्णमास्यां प्रधानानि। एषामाग्नेयाग्नीषोमीयोपांशुयाजानां तत्तद्वाक्यावगत-पौर्णमासीकालसम्बन्धं निमित्तीकृत्य 'य एवं विद्वान् पौर्णमासीं यजत' इति विद्वद्वाक्ये पौर्णमासीपदेन एकवचनान्तेन समुदाय-**

---

पूर्णमासोपक्रमत्वाद्दर्शपूर्णमासप्रयोगस्य तमेवादौ प्रतिपादयितुमाह। यदाग्नेय इति॥ **कूर्मीभूयप्रसर्पन् पुरोडाशः देवैः 'इन्द्रायध्रियस्व अवतिष्ठस्व, बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्व'** इत्युच्यमानोऽपि नावतस्थे। अथ तै '**रग्नये ध्रियस्वे**'त्युक्तस्तस्थौ। कुतः तत्र हेतुरुच्यते। यस्मादग्निदेवत्यः पुराडाशोऽयं पर्वद्वयेप्यच्युतो भवति तस्मात्, अग्निदेवतासम्बन्धेनैव स्वस्य पर्वद्वयेऽच्यवनं यस्मात्तस्मादिति विषय-वाक्यार्थः। अत्र आग्नेय इति न नामधेयम् कर्मणः। अपि तु विधेयाग्नि-समर्पकमिति प्रथमचतुर्थे '**तद्गुणास्तु विधीयेर**'न्नित्यत्र स्थितम्॥ **विहित इति**॥ अत्र यद्वृत्तस्य प्राप्तिद्योतकत्वेऽपि वस्तुतोऽप्राप्तार्थविधौ न प्रतिबन्ध-कत्वमिति ज्ञेयम्॥ **ताभ्यामिति**॥ ताभ्याम् अग्नीषोमाभ्याम्। चतुर्थीयम्। प्रायच्छत् दत्तवानिन्द्र इत्यर्थः॥ अत्र परकृत्यर्थवादे अप्राप्तिबलकल्प्य-विध्यर्थत्वं बोध्यम्॥ **तावब्रूतामिति**॥ कालविधिः पुराकल्पार्थवादोऽयम्॥

**रूपेणानुवादः । तेन वेदे यत्र यत्र पौर्णमासीशब्दः, तत्र तत्राग्नेयादिसमुदायोपस्थितिः । ननु 'यदाग्नेय' इतिवाक्ये यागवाचकपदस्याश्रवणात् कथं यागविधायकत्वमिति चेत् । मैवम् । अग्निः देवता अस्य पुरोडाशस्येत्यर्थे विहितदेवतातद्धितान्त आग्नेयशब्दः । तस्य पुरोडाशपदसामानाधिकरण्याद्द्रव्यदेवतासम्बन्धः अवगतः । स च यागमन्तरेण न सम्भवति । द्रव्यदेवतासम्बन्धस्य यागादन्यत्र क्रियायामसम्भवात् यागक्रियायामेव सम्भवो वाच्यः । देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वाङ्गीकारात् । अतः श्रुतद्रव्यदेवतासम्बन्धानुमितो यागो यजेतेति कल्पितपदेन**

---

**अनुवाद इति** ॥ अस्य वाक्यस्य यच्छब्दघटितत्वात् रूपाभावादन्यपरत्वाच्च न कर्मविशेषविधायकत्वम् । अपि तु फलवाक्यघटकेन दर्शपूर्णमासाभ्यामिति पदेनोपस्थापितस्य द्वित्वदर्शपूर्णमासकालिकत्वोभयावच्छिन्नकर्मरूपार्थस्य प्रसिद्धिसम्पादकत्वमिति स्थितं द्वितीये ॥ ननु कथमयमनुवादस्त्रयाणामेव । अविशिष्टं हि प्रकरणं तत्कालिकानुष्ठानकत्वं वा प्रयाजादीनामपि सत्यम् । येषां तु उत्पत्तिवाक्ये कालसम्बन्धः श्रुतः तेषामुपस्थितिः पौर्णमास्यादिपदाज्झटिति भवति । न च प्रयाजादिविधिषु कालः श्रूयते । तदेतदभिसन्धायोक्तं **तत्तद्वाक्यावगतकालसम्बन्धं निमित्तीकृत्येति** ॥ **देवतोद्देशेनेति** ॥ यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वादित्यर्थः ॥ **यजेतेति कल्पितेनेति** ॥ भवतिस्थाने यजेतेत्यस्य विपरिणाममङ्गीकृत्येदम् ॥ '**मतो विपरिणामोऽसौ प्रकृतिप्रत्ययान्यते**'ति प्रकृत्यन्यत्वं प्रत्ययान्यत्वमुभयान्यत्वं वा विपरिणामो भवति ॥ तत्र प्रकृते उभयान्यत्वरूपः । उपांशुर्याजवाक्ये

**विधीयते-अग्निदैवत्यपुरोडाशद्रव्यकामावास्यादिकाल-कर्तव्ययागेनेष्टं भावयेदिति । एवं यत्र द्रव्यदेवतासम्बन्धमात्रं श्रूयते 'सौर्यं चरुं निर्वपे' दित्यादौ, तत्र द्रव्यदेवतासम्बन्धानुमितो यागो विधीयत इति न कश्चिद्दोषः । ननु उपांशुयाजवाक्ये यजि श्रवणेऽपि विधिप्रत्ययस्य लिङादेरभावात् कथं विधायकत्व मितिचेत्। मैवम्। यजतीत्यस्य यजेतेति विपरिणामेन विधायकत्व सम्भवात्। एवं यत्र लिङादिर्न श्रूयते 'व्रीहिन् प्रोक्षति' 'समिधो यजती' त्यादौ, तत्र विपरिणामो बोध्यः । केचित्तु यजतीत्यस्य पञ्चमलकारत्वाङ्गीकारात् विधायकत्वसम्भव इत्याहुः ॥**

---

वक्ष्यमाणस्तु प्रत्ययान्यत्वरूप इति ॥ ननु श्रूयमाणस्य शब्दस्य विवक्षितार्थे लाक्षणिकत्वे सम्भवति किमिति शब्दान्तरं कल्प्यते । न च लक्षणा वा कल्प्यतां शब्दान्तरं वेति न किञ्चिद्विनिगमकमिति वाच्यम् । अन्यथात्वे श्रूयमाणानुपूर्व्यवच्छिन्नस्य नैष्फल्यप्रसङ्गस्यैव लक्षणायां विनिगमकत्वादिति चेन्न । सर्वत्र उपपत्तिमतश्शक्यसम्बन्धस्य दुर्वचत्वात् । अन्यथा अध्याहारस्थलेषु सर्वत्र श्रुतपदस्यैव लक्षणया अध्याहरणीयार्थप्रतिपादकत्वसम्भवेनाध्याहारोच्छेदापत्तेः । यथाकथञ्चिदग यत्र तथा सम्भवेऽपि प्रवर्तनात्मकविधेः प्रतिपादनाय विपरिणामस्य आवश्यकत्वाच्च । न हि लिङ्लोट्तव्यादिरूपविधिप्रत्ययव्यतिरिक्तेन पदेन लक्षणया शक्त्या वा प्रतिपादितां प्रवर्तनामवगम्य कश्चित्प्रवर्तमानो दृश्यत इति ॥ **पञ्चमलकारत्वेति** ॥ लेट्त्वेत्यर्थः । लडादिचतुष्टयापेक्षं पञ्चमत्वम् ॥ **अङ्गीकारादिति** ॥ उक्तञ्चेदं **'अप्राप्तार्थकत्वेन लेट्त्वनिश्चयात्**

**तथा 'ऐन्द्रं दध्यमावास्यायां' 'ऐन्द्रं पयोऽमावास्याया' मिति वाक्यविहितौ सान्नाय्ययागौ 'यदाग्नेय' इति वाक्यविहिताग्नेयश्चामावास्यायां प्रधानानि। एषां त्रयाणां 'य एवं विद्वानमावास्यां यजत' इति वाक्ये अमावास्यामिति नाम्ना द्वितीयैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र दर्शशब्दो अमावास्याशब्दो वा श्रुतस्तत्र यागसमुदायोपस्थितिः। त्रिकस्य त्रिकस्यामावास्यापौर्णमासीशब्दाभ्यां समुदायरूपेण विद्वद्वाक्ये अनुवादस्य प्रयोजनं तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' त्यादौ द्विवचनोपपत्तिः। अन्यथा षण्णामाग्नेयादियागानां बहुत्वाद्दर्शपूर्णमासैरिति बहुवचनं स्यात्। मानान्तरेण प्राप्तार्थस्य पुनः श्रवणमनुवादः। तथा फलवदाग्नेयादिसन्निधावाम्नातानि**

---

**लट्लेटो रूपसाम्येन कस्याप्यकल्पनीयत्वा'** दिति॥

निरूपितं कः पूर्णमास इति। अथ को दर्श इति। **तथेति** पूर्णमासापेक्षम्॥ **यदाग्नेय इति**॥ अत्र वाक्ये कालद्वयश्रवणादेकस्य च कर्मणोऽनावृत्तस्य तादृशकालद्वयेऽनुष्ठातुमशक्यत्वात् पौर्णमास्यामनुष्ठितस्याग्नेय यागस्यैवावृत्त्या पुनरमावास्याकालेऽनुष्ठानमिति बोध्यम्। वस्तुतस्तु **'एकादशप्रयाजान् यजती'** त्यादाविव उत्पन्नशिष्टस्य गुणस्यावृत्तिबोधकत्वेऽपि उत्पत्तिशिष्टोऽयमेकस्मिन्कर्मणि निवेष्टुमशक्नुवन् कालद्वयरूपो गुणः स्ववाक्यविधेयकर्मणी परस्परं भिनत्तीति **'यदाग्नेय'** इति विधिना कालद्वयाधिकरणकाग्नेयद्वयं विधीयत इति द्वितीयकौस्तुभे स्थितम्॥ उत्पत्त्यपूर्वाङ्गापूर्वसाधनोपयोगिनं प्रयाजादीनां दर्शपूर्णमासाङ्गभावमाह। **तथेति**॥ **फलवत्सन्निधावफलं तदङ्गमिति** न्यायं सूचयति।

**प्रयाजाज्यभागानूयाजादीनि षण्णां यागानामङ्गभूतानि ॥**

**एवं स्थिते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' त्यस्यायमर्थः- दर्शपूर्णमासाभ्यां समुदायाभ्यां परस्पर सहिताभ्यां स्वर्गापूर्वं कुर्यादिति । तत्र कथं कालद्वयवर्तिनोः समुदाययोः परस्परसाहित्यमित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्रिकादेकैकमपूर्वं जायते, तद्द्वारा द्वयोः समुदाययोः साहित्यमित्युच्यते । एकैकस्य त्रिकस्यापि**

---

**फलवदिति** ॥ एतन्न्यायानादरे प्रकृतहानाप्रकृतकल्पने स्यातामिति हृदयम् ॥

एवं दर्शपूर्णमासपदार्थौ व्युत्पाद्य तद्गतं विशेषं प्रतिपादयितुमाह। **एवं स्थित इति** ॥ फलानि सन्तीत्यादौ फलादीनामेककालिकत्वमुत्सर्गतः प्रतीयत इति सर्वानुभाविकमिदम् । एवं प्रकृतेऽपि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्रैकपदोपात्ततयोक्तसमुदायद्वयस्य समानकालिकत्वं प्रतीयते । तच्च परस्परसाहित्यमित्युच्यत इत्यभिसन्धायाह । **परस्पर-सहिताभ्यामिति** ॥ परमापूर्वं प्राग्वत्सिद्धमिति मत्वाऽऽह । **स्वर्गापूर्वमिति** ॥ नचात्र समुदायापूर्वद्वयस्यैव व्यापारत्वसम्भवात् न प्रमाणं परमापूर्व इति मन्तव्यम् । येन रूपेण दर्शपूर्णमासाभ्यां स्वर्गो जन्यत इति बोध्यते तेनैव रूपेण ताभ्यां तद्व्यापारोऽपि जनयितव्यः । परस्परसाहित्यावच्छिन्नाभ्याञ्च ताभ्यां स्वर्गो जन्यत इति बोध्यते । तत्र यदि समुदायापूर्वं व्यापारः व्याहन्यते तर्हि तत्र साहित्यावच्छिन्नसमुदायद्वयजन्यत्वम् । प्रत्येकं हि तत्ततो जायत इति ॥ **एकैकमिति** ॥ अथास्मिन्समुदायापूर्वे प्रमाणाभावः । पौर्णमासीकालिककर्मत्रयात्त्रीणि दार्शिकत्रयात्त्रीणीत्यमीभिरेव षड्भिरपूर्वैः

**त्रिकापूर्वजनकत्वं कथमित्याकाङ्क्षायां प्रयाजानूयाजादि-पूर्वोत्तराङ्गकलापविशिष्टस्यैकैकस्य त्रिकस्य समुदायपूर्व जनकत्वमुच्यते । एकैकस्य त्रिकस्य सर्वाङ्गसाहित्यं स्वरूपेण**

---

समुच्चित्य साक्षात्परमापूर्वजननोपपत्तेः । नन्वेवं साक्षादाग्नेयादिष्वेव प्रत्येकं स्वर्गकरणत्वस्य विश्रान्तेः फलवाक्ये श्रुतं समुदायगतं तत्करणत्वं भज्येत। नैष दोषः । समुदायस्यानतिरिक्तत्वात् तत्रापि प्रत्येकं फलकरणत्व-पर्याप्त्यधिकरणयागषट्कस्यैव दर्शपूर्णमासपदेनोपात्तत्वादिति । **अत्राहुः** । अस्ति वाक्यद्वयं **'पौर्णमास्यांपौर्णमास्या यजेत' 'अमावास्यायां अमावास्यया यजेते'**ति प्रत्येकमाग्नेयादिसमुदायद्वये कालद्वयविधायकम् । नचोत्पत्तिवाक्यादेव कालप्राप्तिः । षण्णां षट्सु पर्वस्वनुष्ठानप्रसक्तौ त्रयाणां त्रयाणाम् एकस्मिन्पर्वण्यनुष्ठानस्यैतद्वाक्यफलत्वात् । तत्र प्रतिवाक्यं मिथस्साहित्यावच्छिन्नं कारणतात्रयमवगम्यते । किन्निरूपितं तत्साहित्यमिति तावद्विवेक्तव्यम् । न फलं तन्निरूपकम् । तत्कारणतानां षट्त्वावच्छिन्नत्वात् । अत एव न परमापूर्वम् । नाप्युत्पत्त्यपूर्वम् । तत्कारणतायास्त्रित्वानवच्छिन्नत्वात् । अतोऽत्र यत् कल्पनीयंभवति तदेव समुदायापूर्वमिति ॥ समुदायापूर्वानुकूलप्रधानोत्पत्त्यपूर्वकल्पनमुप-पादयिष्यन् तदुपयोगितयाऽङ्गकलापवैशिष्ट्यं प्रतिपादयति । **एकैकस्येति। विशिष्टस्येति** ॥ प्रत्येकमुत्पन्नानामाग्नेयादिप्रधानभावनानां प्रत्येकमेवेतिकर्तव्यताकाङ्क्षितया तदन्वितानां प्रयाजादीनां प्रत्येकाङ्गत्वेन यद्यपि पूर्वोत्तराङ्गवैशिष्ट्यरूपविशेषणस्य प्रत्येकं प्रधाने विवक्षणमुचितम्, न तु समुदाये, तथाऽपि प्रकृते त्रयाणामेकदेशकालकर्तृकतया तदङ्गानां

**न सम्भवतीति त्रिभिर्यागैस्त्रीण्युत्पत्त्य-पूर्वाणि जन्यन्ते, तद्द्वारा सर्वाङ्गसाहित्यम् । अङ्गानामपि प्रयाजादीनां स्वरूपेण प्रधानसाहित्याभावात्तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं वाच्यम् । तथा च प्रधानजन्योत्पत्त्यपूर्वाणां प्रयाजादिजन्योत्पत्त्यपूर्वैः साहित्यं यदस्ति, तदेव प्रधानानामङ्गविशिष्टत्वरूपं साङ्गत्वम् । एवञ्च पौर्णमास्यामाग्नेयादिजन्यैस्त्रिभिरपूर्वैः प्रयाजादिजन्योत्पत्त्य-पूर्वसचिवैः समुदायापूर्वमेकं जन्यते । तथा दर्शेऽपि आग्नेयैन्द्रद्वयजन्यैस्त्रिभिरपूर्वैरङ्गोत्पत्त्यपूर्वसचिवैरेकं त्रिकापूर्वं जन्यते । ताभ्यां त्रिकापूर्वाभ्यामाग्नेयाद्युत्पत्त्यपूर्वत्रितय-जन्याभ्यां फलजनकीभूतमहापूर्वं फलापूर्वनामकं जन्यते। ततश्च फलमिति ॥**

---

सकृदनुष्ठानेनैव सर्वोपकारकत्वोपपत्तेः तन्त्रेणैवानुष्ठानमित्येतत्सूचयितुं **अङ्कलापविशिष्टस्यैकैकस्य त्रिकस्येति** ॥ अङ्गोत्पत्त्यपूर्वं प्रतिपादयति । **अङ्गानामिति** ॥ ननु प्रधानाङ्गापूर्वयोरुपपादितरीत्या साहित्यसम्भवेऽपि प्रयोगविधिबोधितस्य साक्षात्प्रधानाङ्गसाहित्यस्य भङ्गो दुष्परिहर एवेत्यत्र तादृशापूर्वद्वारकमेव ततत्र विधित्सितमित्याशयान इष्टापत्तिमाह । **तथाचेति** ॥ एतावतः प्रबन्धस्य मुख्यविषयीभूतं दार्शपूर्णमासिकापूर्वकल्पनविशेषं सङ्कीर्तयन् तादृशापूर्वस्य स्वर्गपर्यन्तमुपयोगमभिधायापूर्वप्रकरणमवसाययति । **एवञ्चेति** ॥ **सचिवैरिति** ॥ प्रयाजादिजन्योत्पत्त्यपूर्वाणि सचिवाः सहकारीणि उपकारकाणि येषां तैः । उक्तापूर्वजन्योपकारसहितैरित्यर्थः ।

**तथा च सर्वाङ्गोपकृताभ्यां दर्शपूर्णमासाभ्यामपूर्वद्वारा स्वर्गं कुर्यादिति फलापूर्वनिष्पत्तये साङ्गप्रधानकर्तव्यताबोधको विधिः प्रयोगविधिरिति सिद्धम् ॥**

**पुनरपि विधिस्त्रिविध :- अपूर्वविधिः, नियमविधिः परिसङ्ख्याविधिश्चेति। तत्र यो विधिरत्यन्ताप्राप्तमर्थं प्रापयति सोऽपूर्वविधिः। यथा दर्शपूर्णमासप्रकरणे 'व्रीहीन् प्रोक्षती'ति। एतद्विध्यभावे दर्शपूर्णमासीयव्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति। एतद्विधिसत्त्वे तु तत्सम्बन्धिव्रीहीषु प्रोक्षणं प्राप्नोत्येवेत्यत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयमपूर्वविधिः। यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः। यथा तत्रैव 'व्रीहीनवहन्ती'ति**

---

प्रकृतदर्शपूर्णमासयोस्समन्वयपूर्वकं प्रयोगविधिमुपसंहरति। **तथाचेति ॥**

द्वेधा विभज्य दर्शितो विधिः। क्वचित् क्रिया क्वचिद्गुणः क्वचिदुभयं क्वचित्फलसम्बन्ध इत्यादिविधेयभेदेन, क्वचित्स्वरूपं क्वचिदिष्टसाधनत्वं क्वचित्कृतिसाध्यत्वं क्वचिदधिकार इति विधेयप्रकारभेदेन च। अथायं विधिप्रवृत्तिफलभेदानुरोधेन विभज्य प्रदर्श्यते। **पुनरपीत्यादिना ॥** **'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयत'** इति वार्तिकानुसारेण क्रमादिमान्विधिभेदान् लक्षयन्नुदाहरति। **तत्रेति ॥ अप्राप्तमिति ॥** परिसंख्याव्यावृत्तय इदम्। नियमव्यावृत्तयेऽप्राप्तावात्यन्तिकत्वमपाक्षिकत्वार्थकम् ॥ **नियमविधिरिति ॥** नियमनाद्विधिरपि नियमः ॥ **नावमिकन्यायेन 'व्रीहीनवहन्ती'** त्यत्रापूर्वसाधनत्वस्योद्देश्यतावच्छेदकत्वे स्थिते तदवच्छिन्ने

एतद्विध्यभावे दार्शपूर्णमासिकेषु व्रीहिषूत्पत्तिवाक्यावगत-पुरोडाशोपयोगितण्डुलनिष्पत्त्यनुकूलवैतुष्यकार्याय अवहननवत् कदाचिन्नखविदलनमपि प्राप्नुयादिति तस्मिन् पक्षेऽवहननस्य प्राप्त्यभावात् कार्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात्। सत्यस्मिन् विधौ अवहननेनैव वैतुष्यं कार्यमिति नियमे सति विदलनं सर्वात्मना निवर्तत इति नियमविधिरयम्। न च वैतुष्यस्य नखविदलनेनापि सम्भवाद-वहनननियमो व्यर्थः, प्रयोजनाभावादिति वाच्यम्। अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जायत इति नियमादृष्टाङ्गीकारात्। नियमेन दृष्टकार्यालाभेऽप्यदृष्टस्योत्पत्तेः। तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलापूर्वे उपयुज्यते। तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्यत इति कल्पनात् नियमापूर्वस्य न वैयर्थ्यम्। एवं व्रीहिसोमादिद्रव्यनियमविधिषु बोध्यम्। द्वयोः समुच्चित्य

---

आज्यादावपि अवहननप्रसङ्गवारणाय उत्पत्त्यपूर्वस्य व्रीहिणाञ्च मध्ये यावन्तः पदार्थाः सन्ति तावदर्थघटितं द्वारं विवक्षणीयमिति तृतीये तेषामर्थाधिकरणे निरूपितम्। तदेतत् प्रसङ्गादाह। **कार्यायेत्यन्तेन**॥ यद्वा विधित्सितस्यावघातस्य एतद्विध्यभावे पक्षेऽभावप्रसञ्जकस्य नखविदलनस्य आक्षेपकं प्रतिपादयति। **कार्यायेत्यन्तेन**॥ '**सर्वे द्रव्य-विधयो नियमविधय**' इति प्रवादं स्मारयन्नाह। **एवमिति**॥ **द्वयोरिति**॥ शेषिणोरित्यर्थः। सप्तम्येषा॥ **प्राप्ताविति**॥ विधित्सितस्येति शेषः॥

**प्राप्ताavitarनिवृत्तिफलको विधिः परिसङ्ख्याविधिः। यथा चयनप्रकरणे 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः। एतद्विध्यभावे हि रशनाग्रहणप्रकाशको मन्त्रो रशनाऽऽदानप्रकाशनसामर्थ्यरूपा-ल्लिङ्गादश्वरशनाऽऽदानइव गर्दभरशनाऽऽदानेऽपि नियमेन प्राप्नुयात्। सत्यस्मिन् विधौ अनेन मन्त्रेणाश्वरशनामेवाददीत न तु गर्दभरशनां सा तु तूष्णीमेव ग्राह्येति गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति द्वयोः समुच्चित्य प्राप्तावितरनिवृत्ति-फलकत्वादयं परिसङ्ख्याविधिः।**

---

इतरेति॥ इतरस्मान्निवृत्तिर्विधित्सितस्य॥ **परीति**॥ वर्जनबुद्धिः परिसङ्ख्या। तत्करणाद्विधिरपि तथा॥ सामर्थ्यापरपर्यायलिङ्गप्रमाणादुभयस्मिन् प्राप्तिमुपपादयति। **एतदिति**॥ **सतीति**॥ यद्यप्येवकारो नञ्वा वाक्येऽस्मिन्न श्रूयते। तथाऽपि साक्षात्प्रतीयमानस्यार्थस्य लिङ्गादेव प्राप्तः स्ववैयर्थ्यपरिजिहीर्षया तावत्पर्यन्तं वाक्यमेतव्द्याप्रियत इति ज्ञेयम्॥ अत्र वक्तव्यमन्यत् मन्त्रप्रस्तावे वक्ष्यते॥ **अयं परिसङ्ख्या विधिरिति**॥ शेषिपरिसङ्ख्येयं 'तत्रान्यत्र' पदयोः 'प्राप्ते' इत्यनेन वैयधिकरण्येन प्रकृतविधेयप्रतिसम्बन्धितदन्यपरतामङ्गीकृत्य॥ सामानाधिकरण्येन तयोः प्रकृतविधेयतदन्यपरत्वाङ्गीकारे तु शेषपरसिङ्ख्या। यथा गृहमेधीयाधिकरणपञ्चमपक्षे गृहमेधीयप्रकरणपठितः '**आज्यभागौ यजती**'ति विधिः आज्यभागयोरङ्गान्तरेषु च चोदकतः प्राप्नुवत्सु आज्यभागौ विषयीकुर्वन्नङ्गान्तराणि परिसञ्चष्ट इति। शेषिणामनेकत्वे

पूर्वं दर्शपूर्णमासाङ्गत्वं प्रयाजादीनामुक्तम्। तत्राङ्गत्व-बोधकप्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभेदेन षट्। तत्र 'दध्ना जुहोती'त्यत्राग्निहोत्रवाक्यप्राप्तं होमं 'जुहोती'त्यनेनोद्दिश्य तत्करणत्वेन तृतीयाश्रुत्या दधि विधीयत इति श्रुत्या दध्नोऽङ्गत्वम्। लिङ्गं नाम सामर्थ्यम्। तच्च द्विविधम्-अर्थगतं शब्दगतञ्चेति। आद्यं यथा। 'स्रुवेणावद्यती'

---

शेषिपरिसङ्ख्या शेषाणामनेकत्वे शेषपरिसङ्ख्येति विवेकः। केचिदत्र नियमपरिसङ्ख्यान्यप्रापको विधिराद्यः, दृष्टार्थो द्वितीयः, वर्जनबुद्धि-जनकश्चरम इति, अन्ये च नियमपरिसङ्ख्याफलव्यतिरिक्तफलतात्पर्यकः प्रथमः, तदभावाभावतात्पर्यकः तन्नियमविधिरिति द्वितीयः, तदभाव-तात्पर्यकः तत्परिसङ्ख्याविधिरित्यन्तिम इति निष्कर्षयन्ति॥

प्रत्यक्षादिषु षट्सु प्रमाणेषु वैदिकशब्दात्मकमुपदेशातिदेशभेदेन द्विधा। तत्राद्यो बहुधा विभज्य दर्शितः पूर्वषट्के विधिनिषेधात्मना प्रथमे। शब्दान्तराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरात्मना द्वितीये। श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्यात्मना तृतीये। श्रुत्यर्थपठनस्थानमुख्य-प्रवृत्त्यात्मना पञ्चम इति। तत्रावश्यककतिपयपदार्थ व्युत्पादनप्रवृतो ग्रन्थकृत् प्रथमगोचरान् कांश्चिद्विधिभेदान्निरूप्य धर्मप्रमापकयावत्प्रमाण-निरूपणानन्तरं द्वैतीयीकानि प्रमाणानि निरूपयिष्यन् विधिनिरूपणप्रसङ्गोप-स्थितस्याङ्गत्वस्य प्रमापकाणि तार्तीयीकानि निरूपयितुमाह। **पूर्वमिति**॥ **श्रुत्येति**॥ येन शब्देन श्रुतमात्रेणैवाङ्गाङ्गिभावसम्बन्धो बुध्यते सा श्रुतिः॥ अत एव निरपेक्षो रवः श्रुतिरिति प्राचां लक्षणमिति ध्येयम्॥ **अर्थगतमिति**।

त्यवदानसामान्यशेषत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपाल्लिङ्गात् आज्यसान्नाय्यादिद्रवद्रव्यावदानविशेषाङ्गत्वम् । स्रुवेण पुरोडाशाद्यवदानस्य कर्तुमशक्यत्वात् । शब्दगतं तु लिङ्गमर्थप्रकाशनसामर्थ्यम् । यथा 'अग्नये जुष्टं निर्वपामी'ति मन्त्रस्य निर्वापप्रकाशनसामर्थ्यरूपाल्लिङ्गान्निर्वापाङ्गत्वम्। यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम् । पदान्तर-समभिव्याहारो वाक्यम् । यथा 'इषेत्वेति छिनत्ती'ति । अत्र छेदनाङ्गत्वेन 'इषेत्वे'ति मन्त्रो वाक्येन विधीयते । यद्वा 'अग्नये जुष्ट'मित्यत्रैव 'अग्नये' 'जुष्ट' मित्यादिपदानां 'निर्वपामी'-त्यनेनैकवाक्यतापन्नत्वान्निर्वापाङ्गत्वम् । प्रकरणं नाम परस्पराकाङ्क्षा । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र दर्शपूर्णमासाभ्यां स्वर्गापूर्वं कुर्यादित्युक्ते भवत्याकाङ्क्षा कथम्

---

इमे एव उभे सामर्थ्ये सामान्यसम्बन्धबोधकप्रमाणान्तरानपेक्षतदपेक्षे इति व्यवह्रियेते । **इष इति** । न चात्र श्रुतिः । विभक्तेरश्रवणात् । न च तदर्थे लक्षणा । पर्णमयीत्यत्रापि श्रुतिविनियोगापत्तेः ॥ इतिरहितं वाक्यप्रमाण-मुदाहरति । **यद्वेति** ॥ अथवा इतिरपि यदि श्रुतिस्तदाऽऽह । **यद्वेति** ॥ अत्र निर्वपामीति पदस्य निर्वापाङ्गत्वे लिङ्गं प्रमाणम् । तद्भिन्नानाम् अग्नय इत्यादिपदानां तु तदङ्गत्वे वाक्यं प्रमाणमिति विवेक्तव्यम् ॥ **परस्परा-काङ्क्षेति** ॥ अङ्गाङ्गिनोः परस्परेण परस्परस्याकाङ्क्षेत्यर्थः । इयमेवोभया-काङ्क्षेत्यप्युच्यते ॥ इदं द्वेधा महाप्रकरणावान्तरप्रकरणभेदात् । तत्राद्यं प्रयाजादीनामङ्गत्वग्राहकम् । द्वितीयं तु प्रयाजादिप्रकरणपठिततदङ्ग-

आभ्यां स्वर्गापूर्वं कर्त्तव्यमिति । तथा फलवदाग्नेयादिसन्निधौ 'समिधो यजति' 'तनूनपातं यजति' 'आज्यभागौ यजती'त्यादिभिः प्रयाजादयः फलरहिताः श्रुताः । तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनाकाङ्क्षा किमेतेषां प्रयोजनमिति । ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपूर्णमासयोश्च कथम्भावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपूर्णमासाङ्गत्वं निश्चीयते । स्थानं नाम सन्निधिः । यथा सान्नाय्यपात्रसन्निधौ 'शुन्धध्व' मितिमन्त्रस्य पाठात् सन्निधानात्

---

विधायकवाक्यद्वयमध्यपठितवाक्यविधेयस्याभिक्रमणादेरित्यन्यत्र विस्तरः । **स्थानमिति** ।। क्रम इत्यपि सादेश्यमित्यपीदमुच्यते ।। तदेतदपि द्विविधम् । पाठसादेश्यम्, अनुष्ठानसादेश्यमिति । आद्यमपि द्विविधम् । यथासङ्ख्यपाठः, सन्निधिपाठ इति । तत्र काम्येष्टिकाण्डसमाख्याते वेदभागे क्रमश इष्टयो विहिताः । काम्येष्टियाज्यानुवाक्याकाण्डे याज्यानुवाक्याशब्दशब्दितमन्त्रयुगलान्यपि क्रमेण पठितानि । तत्र प्रथमेष्टेः प्रथमयुगलमङ्गं, द्वितीयस्या द्वितीयमिति यथाक्रममङ्गताग्राहकोऽयं यथासङ्ख्यपाठः । ग्रन्थकृदुक्तः सन्निधिपाठः । अनेकदिनसाध्ये ज्योतिष्टोमयागो प्रधानदिनात्प्राक्तने औपवसथ्यसंज्ञके दिने कर्तव्यतया पशुयागाङ्गानि पशूपाकरणादीनि पठितानि । पशुयागस्तु न तत्रोत्पन्नः। अपितु ततोऽपि प्रपूर्वदिनसाध्यक्रयप्रकरणे । एवं सति अयन्दैक्षो नाम पशुयागः **'स एष औपवसथ्येऽहन्यालब्धव्य '** इति वचनेन सुत्यादिनपूर्वदिनेऽनुष्ठेयः । एवञ्चास्य पशुयागस्य तत्रत्यपशुधर्माणाञ्चैकस्मिन्दिनेऽनुष्ठानेन सन्निधानादङ्गाङ्गिभावो

सान्नाय्यपात्रप्रोक्षणाङ्गत्वम् । समाख्या संज्ञा । यथा अध्वर्यु-काण्डप्रतिपादिते कर्मजाते आध्वर्यवसमाख्यावशादध्वर्योः कर्तृत्वेनाङ्गत्वम् । तथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्या - काण्डसमाख्यावशात् 'उभावा-मिन्द्राग्नी' इत्यादीनां याज्यानुवाक्यत्वेन विनियोगः । विनियोगो नामाङ्गत्वेनान्वयः ॥

श्रुत्यादीनामेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यम् उत्तरो-त्तरस्य दौर्बल्यम् । यथा 'कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यम् उपतिष्ठते' इत्यग्निहोत्रप्रकरणे श्रूयते । तत्र मन्त्रस्य इन्द्रप्रकाशन-सामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थानाङ्गत्वे प्राप्ते 'ऐन्द्र्ये'ति तृतीया-श्रुत्या 'गार्हपत्य'मिति द्वितीयाश्रुत्या च गार्हपत्योपस्थानाङ्गत्वेन विधानाल्लैङ्गिक इन्द्रोपस्थाने विनियोगो बाध्यते । श्रुतिर्हि स्वतो विनियोजिका । लिङ्गं तु इन्द्रप्रकाशनसामर्थ्यमालोच्य 'ऐन्द्र्येन्द्रमुपतिष्ठत' इति श्रुतिकल्पनाद्वारा विनियोजकमिति

---

गृह्यत इत्यनुष्ठानसादेश्यमिदम् ॥ संज्ञेति ॥ यौगिकशब्द इत्यर्थः ॥ इयमपि समाख्या द्विविधा = वैदिकी- लौकिकी च । प्रैतुहोतुश्चमस इत्यादिराद्या । ग्रन्थकृदुदाहृताऽनन्तरा ॥ तत्राद्योदाहरणे कर्तुरङ्गत्वम् । द्वितीये मन्त्राणाम् । व्युत्पत्तयेऽनेकोदाहरणम् ॥

श्रुतिलिङ्गयोः समावेशस्थलमुदाहृत्य श्रुतेः प्राबल्यमुपपादयति । **यथेति** ॥ **कल्पनद्वारेति** ॥ इदमत्र बोध्यम् - उत्तरोत्तरं प्रमाणं पूर्वपूर्वं प्रकल्प्यैव अङ्गत्वं ग्राहयति न तु स्वातन्त्र्येण । समाख्यया

**वाच्यम्, तच्चात्र न सम्भवति। यत्र श्रुतिविनयोगो नास्ति 'अग्नये जुष्टं निर्वपामी'त्यादौ तत्र मन्त्रस्य निर्वापप्रकाशनसामर्थ्य-मालोच्य 'अनेन मन्त्रेण निर्वापं कुर्या'दिति श्रुतिकल्पनाद्वारा लिङ्गं विनियोजकं भवत्येव, श्रुतिकल्पनाप्रतिबन्धकाभावात्। तथा 'स्योनन्ते सदनं कृणोमि तस्मिन् सीदे'त्यत्र 'तस्मि'न्निति तच्छब्दस्य पूर्ववाक्यार्थसापेक्षतया एकवाक्यत्वभानाद्वाक्य-प्रमाणेन द्वयोरेकमन्त्रत्वं भाति। लिङ्गेन तु भिन्नमन्त्रत्वं भाति। आद्यस्य सदनप्रकाशकत्वात् । 'तस्मिन् सीदे'त्यस्य सादनप्रकाशकत्वात्। तत्र वाक्यापेक्षया लिङ्गस्य प्राबल्याद्वाक्यं**

---

पदार्थयोरुपस्थितयोः, तयोस्सन्निधौ कल्पिते, परस्परमाकाङ्क्षामुद्भाव्य, तद्वाचकपदयोस्समभिव्याहारं सम्पाद्य, तत्सामर्थ्यमनुसन्धाय अन्ततः तृतीयादिश्रुतिं घटयित्वा अङ्गत्वप्रतिसन्धानमिति। एवञ्च उत्तरोत्तरप्रमाणेन यावच्छ्रुतिपर्यन्तकल्पनयाङ्गत्वं बोध्येत ततः प्रागेव पूर्वपूर्वेण अन्याङ्गत्व-मवगम्यत इत्युत्तरोत्तरस्य पूर्वपूर्वेण बाध इति ॥ यत्र पूर्वप्रमाणसमावेशः तत्रैवोत्तरस्याङ्गताग्रहकत्वाभावः न तु तदसमावेशेपीत्याशयेनाह। **यत्रेति** ॥ **प्रतिबन्धकाभावादिति** ॥ श्रुतिसंवलने हि प्रबला सा लिङ्गेन श्रुतिकल्पनं बाधेत। न च प्रकृते तादृशी श्रुतिरस्तीति ॥ बाधो द्विविधिः = प्राप्त- अप्राप्त-बाधभेदात्। बाध्यार्थप्रापकशास्त्रस्य क्लृप्तत्वे आद्यः। यथा क्लृप्ताहवनीय-शास्त्रप्राप्ताहवनीयस्य पदशास्त्रेण बाधः । सोऽयं दाशमिकः । बाध्यार्थ-प्रापकशास्त्रकल्पनस्यैवासिद्धौ द्वितीयः । यथा प्रकृते **'कदाचने'**त्यादि मन्त्रस्य इन्द्रोपस्थानाङ्गत्वग्राहकश्रुतेरेवासिद्धत्वात्, तत्र गार्हपत्योप-

**बाधित्वा लिङ्गेन 'स्योनन्त' इत्यस्य सदनाङ्गत्वम्, 'तस्मिन् सीदे'त्यस्य सादनाङ्गत्वमिति निर्णयः । 'स्योनन्त' इत्यस्य 'तस्मिन् सीदे' त्यनेनैकवाक्यत्वबलात् यथाकथञ्चित् सादनसामर्थ्यरूपं लिङ्गं कल्पयित्वा अनेन विशिष्टमन्त्रेण सादनं कुर्यादिति श्रुतिः कल्पनीया । सदनप्रकाशनरूपप्रत्यक्षलिङ्गेन कल्पितया 'स्योनन्त' इत्यनेन सदनं कुर्यादिति श्रुत्या 'स्योनन्त' इत्यस्य शीघ्रं सदने विनियोगे सति तेनैव मन्त्रस्य नैराकाङ्क्ष्याद्वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिबध्यते विलम्बितत्वादिति लिङ्गेन वाक्यस्य बाधः । एवं वाक्येन प्रकरणस्य, प्रकरणात् क्रमस्य, क्रमात् समाख्याया बाधो**

---

स्थानाङ्गत्वग्राहकश्रुत्या बाध इति इदमत्रानुसन्धेयम् ॥ **यथाकथञ्चिदिति** । साक्षात्सादनप्रकाशक '**सीदे**' तिपदार्थान्वित '**तस्मिन्**' पदार्थपरिचायकत्वेन परम्परयेत्यर्थः ॥ **एवमिति** ॥ सूक्तवाके श्रुतम् '**इन्द्राग्नी इदं हविरजुषेतां महोज्यायोऽक्राता**'मिति । तत्र लिङ्गात्तावत् '**इन्द्राग्नी**' पदस्य दर्शाङ्गत्वं सिद्धम् । तत्समभिव्याहाररूपवाक्यात् 'इद'मित्यादि पदानामपि दर्शाङ्गत्वमेव । न तु प्रकरणात्पूर्णमासाङ्गत्वमपीति वाक्यात् प्रकरणस्य बाधः । यद्वा '**संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती**'ति इदमत्रोदाहरणम् । तत्र हि पौर्णमास्यङ्गत्वग्राहकेण पौर्णमासीपदसमभिव्याहारात्मकेन वाक्येन वैमृधस्योभयाङ्गत्वग्राहकं प्रकरणं बाध्यत इति ॥ **प्रकरणादिति** ॥ यथा राजसूये विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमेव । न तु सन्निधिनाऽभिषेचनीयसंज्ञकराजसूयान्तर्गतकर्मविशेषमात्राङ्गत्वमिति ॥

**वेदितव्यः । तथा श्रुत्या वाक्यादेरपि बाधः॥**

**तदेवमङ्गताबोधकप्रमाणानि श्रुत्यादीनि निरूपितानि।**

**तच्चाङ्गत्वं शेषत्वं पारार्थ्यमिति यावत् । परोद्देशेन प्रवृत्तकृतिव्याप्यत्वं पारार्थ्यम्। प्रयाजादीनां दर्शपूर्णमासोद्देशेन प्रवृत्तकृतिव्याप्यत्वात् लक्षणसङ्गतिः । दर्शादेः प्रयाजाद्युद्देशेन**

---

**क्रमादिति**॥ यथा सन्निधिना सान्नाय्यपात्रमात्राङ्गत्वं **'शुन्धध्व'** मित्यादि मन्त्रस्य । नतु पौरोडाशिकसमाख्याते काण्डे समाम्नाततया पुरोडाश-पात्राङ्गत्वमिति ॥ एवं द्वित्र्यन्तरितप्रमाणेष्वपि उक्तबाध्यबाधकभाव-प्रकारमतिदिशति। **तथेति**॥

प्रकरणमुपसंहरति । **तदेवमिति** ॥ यद्वा अनुपदमङ्गत्वलक्षणं कथयिष्यन् कथं तत्प्रागेव नोक्तमिति शङ्कापरिहाराय **'मानाधीना-मेयसिद्धि'**रिति न्यायं द्योतयन्नाह। **तदेवमिति**॥

**तच्चेति**॥ उक्तप्रमाणप्रमेयमित्यर्थः। शेषत्वमङ्गत्ववदखण्डत्वात् न लघु बुद्धिमारोहति न वा अङ्गत्वस्वरूपं विशदं प्रतिपादयितुं प्रभवतीति सूत्रोक्तं तद्रूपमाह । **पारार्थ्यमिति** ॥ किं पारार्थ्यं तदाह । **परेति** ॥ परः उत्कृष्टः स्वेतरो वा स्वर्गादिः अर्थः स्वविषयप्रवृत्युद्देश्यः यस्य तत्वमिति विग्रहात् अयमर्थो लभ्यते॥ **प्रवृत्तेति** स्पष्टार्थत्वाय॥ **व्याप्यत्वं** साध्यत्वम् विषयत्वम् ॥ **परोद्देशेनेत्यस्य** व्यावृत्तिमाह । **दर्शादेरिति** ॥ **तथाच** यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यत्र तत्र तदङ्गत्वमिति फलितम्॥ अत्र कालादौ अङ्गेऽव्याप्तिवारणाय व्याप्यत्वं कारकत्वार्थकं वाच्यम्॥ दर्शादेः प्रयाजाद्यु-द्देश्यककृतिनिरूपितत्वविशिष्टविषयत्वाभावरूपविशिष्टभावप्रयोजक-

**प्रवृत्तकृतिविषयत्वाभावान्नातिव्याप्तिः । केवलप्रयाजादीनुद्दिश्य कस्यचिदपि पुरुषस्याप्रवृत्तेः ।।**

**तान्यङ्गानि द्विविधानि सन्निपत्योपकारकाणि, आरादुपकारकाणि चेति । यान्यङ्गानि साक्षात् परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि तानि सन्निपत्योपकारकाणि । यथा व्रीह्यादिद्रव्याणि तत्संयुक्ता-वहननप्रोक्षणादीनि अग्न्यादिदेवता तत्संयुक्तयाज्यानुवाक्यानु-वचनादीनि च । अत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा अवहननादेः**

---

प्रयाजाद्युद्देश्यककृत्यभावरूपं विशेषणाभावमुपपादयति । **केवलेति** ।। फलानुबन्धरहितेत्यर्थः ।। यद्वा ननु केवलप्रयाजमात्रानुष्ठाने तत्र निरुक्तलक्षणं नास्तीति लक्षणमेतदव्यापकमिति शङ्कापरिहाराय तादृशानुष्ठानाप्रसिद्धिमाह । **केवलेति** ।।

**सन्निपत्येति** ।। साक्षादित्यर्थः । साक्षात्त्वञ्च उत्पत्त्यपूर्वजननानु-कूलयागनिष्ठयोग्यतोपयोगित्वात् ।। **आरादिति** ।। व्यवधानेनेत्यर्थः । तच्च परमापूर्वजननानुकूलोत्पत्त्यपूर्वनिष्ठयोग्यतोपयोगित्वादित्यवगन्तव्यम् ।। साक्षात्परम्परया वेत्यत्र साक्षादित्यस्योदाहरणं **व्रीह्यादिद्रव्याणीति अग्न्यादिदेवतेति** च ।। **तत्संयुक्तेत्यादि** तु परम्परयेत्यस्य ।। अत्र व्रीह्यादीत्ययम् अतद्गुणसंविज्ञानो बहुव्रीहिः । दधिमधुघृतादिकमाद्यर्थः ।। उक्तमेव विविच्य दर्शयति । **अत्रेति** ।। व्रीहिप्रोक्षणेनापि चेतन एव संस्क्रियते । तत्रैवादृष्टमुत्पद्यते । न तु व्रीहिषु । तस्य चेतनैकसमवायित्वादिति न्यायविदो मन्यन्ते । तदेतत्तान्त्रिकाणामनभिमतमिति द्योतयन्नाह । **व्रीहिगतेति** ।।

**तुषविमोकादिरूपदृष्टद्वारा व्रीह्यादीनां पिष्टद्वारा पुरोडाश-निष्पादकत्वम् । तद्द्वारा यागशरीरतदुत्पत्त्यपूर्वहेतुत्वञ्च । याज्यानुवाक्यादेर्देवतासंस्कारद्वारा देवतायाश्च साक्षाद्याग-शरीरनिर्वर्त्तकत्वम् । तद्द्वारा तदुत्पत्त्यपूर्वोपयोगित्वञ्च । यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात्, द्रव्यदेवते हि यागस्वरूपमिति सिद्धान्ताच्च । एतान्येव सामवायिकानीत्युच्यन्ते । आत्म-समवेतापूर्वजनकान्यारादुपकारकाणि । यथा प्रयाजाज्य-भागानूयाजादीनि । एतानि द्रव्यगतं देवतागतं वा संस्कारं न जनयन्ति किन्त्वात्मगतमदृष्टं जनयन्तीत्यारादुपकारकाणि ॥**

---

अन्यथा व्रीहीणां श्रुतं कर्मत्वम् नोपपद्येतेति दिगिति भावः ॥ देवतायास्साक्षाद्यागशरीरनिर्वर्तकत्वे हेतुमाह । **यागस्येति** ॥ तावता यागविशेषणत्वमस्तु न तु तच्छरीरनिर्वर्तकत्वमिति चेदाह । **द्रव्येति** ॥ तदिदमुक्तं सूत्रकृता '**यजतिचोदना द्रव्यदेवताक्रिय**'मिति ॥ **एतानीति** ॥ समवायः यागेन साक्षात्सम्बन्धः तत्र भवानि तद्वन्ति यानि तानि सामवायिकानि ॥ **अत्र वदन्ति** - अयं सन्निपत्योपकारकारादुपकारकभेदेन विभागः । क्रियारूपाणामेवाङ्गानां प्रामाणिकः । सन्निपत्त्येति अङ्गभूतेषु द्रव्येषु सम्बध्येत्यर्थकम् । आरादित्यपि साक्षादित्यर्थकम् । सामवायिकानीति द्रव्यादिसम्बन्धमनुभूयेत्यर्थः । तदत्र द्रव्यदेवतानां सन्निपत्योपकारकत्वकथनं चिन्त्यमिति ॥ **आत्मेति** ॥ न च कर्तृसंस्कारेषु कर्त्रात्मगतापूर्वजनकेषु अतिव्याप्तिरिति शङ्क्यम् । संस्कारजन्यातिशयस्य प्रयाजादिजन्यं संस्कृत्यतिशयपदाभिधानानर्हमपूर्वमपेक्ष्य विजातीयत्वात् ॥

**तत्र सामान्यतः कर्म द्विविधम्। अर्थकर्म, गुणकर्म चेति। तत्रात्मगतापूर्वजनकं कर्म अर्थकर्म। यथा अग्निहोत्रदर्शपूर्णमासप्रयाजादिकम्। गुणकर्म संस्कारजनकम्। तच्च द्विविधम्। उपयुक्तसंस्कारकम् उपयोक्ष्यमाणसंस्कारकञ्चेति। तत्र उपयुक्त-**

---

द्विविधं तावत् कर्म = वैदिकं- लौकिकमिति। तत्र प्रवृत्त्यात्मकं वैदिकमपि द्विविधम्= क्रत्वर्थ- पुरुषार्थमिति। स्वयं प्रार्थितफलकं द्वितीयम्। अन्यदाद्यम्। इदमपि द्विविधम् = आरादुपकारकं - सन्निपत्योपकारकमिति। तदेतद्द्वयमप्यङ्गमेवेति अङ्गप्रस्तावे निरूपितम्। पुनरपि सन्निपत्योपकारकं विशिष्य निरूपणीयम्। अतस्तदानुगुण्येन वैदिककर्म विभजते। **तत्रेति**॥ **सामान्यत इति**॥ क्रत्वर्थत्वपुरुषार्थत्वात्मकम् अङ्गाङ्गिभावात्मकं वा विशेषमनाकलय्येत्यर्थः॥ अर्थभूतं द्रव्योपादानोद्देश्यभूतं कर्म अर्थकर्म। प्रधानकर्मेति यावत्। गुणभूतम् अप्रधानभूतं कर्म गुणकर्म। प्राक्तने वैदिककर्मविभागे फलगतस्वयंप्रार्थितत्वतदभावौ नियामकौ। इह तु द्रव्यकर्मणोः परस्परापेक्षे प्राधान्याप्राधान्ये, अपूर्वसंस्कृतिजनकत्वं वा तथेति विवेक्तव्यम्। तदिदं गुणकर्म सामान्यतो द्विविधम् = स्वतन्त्रं - क्रत्वर्थमिति। तदेतदनुपदं ग्रन्थकृता दर्शयिष्यते। तत्र क्रत्वर्थगुणकर्मेति सन्निपत्योपकारककर्मेति चाभिन्नार्थवाचिनाविमौ शब्दौ। इदमपि सन्निपत्योपकारकं त्रिविधम् = दृष्टार्थम्- अदृष्टार्थम् - उभयार्थमिति। तत्र दृष्टार्थसन्निपत्योपकारकरूपं गुणकर्म विभज्य दर्शयति। **तच्चेत्यादिना**॥ उपयुक्तस्यापि पुनरुपयोगो यद्यस्ति न तदा तस्य प्रतिपत्तिरित्यत आह।

संस्कारकं प्रतिपत्तिकर्म । उपयुक्तस्य आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति प्रतिपत्तिलक्षणात् । यथा इडाभक्षणकृष्णविषाणाप्रासनचतुरवत्तहोमादिकम् । नन्विडाभक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्यप्रक्षेपात्मकत्वात् प्रतिपत्तित्वं युक्तम् । होमस्य तु यागोपयुक्तद्रव्यसंस्कारकत्वाभावात् कथं प्रतिपत्तित्वम् ? होमस्य यागसमानकालीनत्वेन होमसंस्कार्यस्य चतुरवत्तादेरुपयुक्तत्वाभावादिति चेत् । अत्राहुः-उपयुक्तसंस्कारमात्रं प्रतिपत्तिः न तु प्रधानयागोपयुक्तत्वं विवक्षितम् । तथा सति पशोर्विशसनानन्तरं वपाहृदयाद्युद्धरणकालकर्त्तव्यस्य लोहितशकृन्निरसनस्य प्रतिपत्तित्वा-

---

आकीर्णकरस्येति ।। यज्ञदेशम् आकीर्णं व्याप्तं व्याकुलं करोति यत्तस्येत्यर्थः ।। इडेति ।। हुतशिष्टं हविर्भक्षणाय पात्रविशेषे निक्षिप्तमिडेत्युच्यते ।। कृष्णेति ।। 'कृष्णविषाणया कण्डूयत' इति यजमानकण्डूयनाङ्गत्वेन विहितायाः कृष्णविषाणायाः 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यती'ति दक्षिणादानानन्तरं विहितं प्रासनम् ।। उपयुक्तसंस्कारकमित्यनेन संस्कारे उपयोगोत्तरकालिकत्वं लभ्यते । तदुक्तचतुरवत्तहोमे न सम्भवतीति शङ्कते । नन्विति ।। साक्षात्परम्परया वा प्रधानयागसम्बन्धियत्किञ्चिदुपयोगोत्तरकालिकत्वमात्रं विवक्षितम् । तदेतदुक्तहोमस्थलेऽप्यबाधितमिति समाधास्यन् शङ्कितुरभिप्रेतस्य उपयोगे प्रधानयागसम्बन्धित्वस्य विवक्षणासम्भवं प्रदर्शयति । अत्राहुरिति ।।

भावप्रसङ्गात् । यागोपयुक्तद्रव्यप्रक्षेपरूपत्वाभावात् । तथा कृष्णविषाणाप्रासनस्यापि प्रतिपत्तित्वं न स्यात् । यागाङ्गभूत-कण्डूयनोपयुक्तत्वेऽपि यागोपयुक्तत्वाभावात् । अतो यत्र क्वच-नोपयोगमात्रं विवक्षितम् । यत्र क्वचिदुपयोगस्तत्राप्यस्ति । वपा-हृदयाद्युद्धरणेनोपयुक्तस्य पशोः सम्बन्धिनः शकृल्लोहितस्या-कीर्णकरस्य प्रतिपत्त्यपेक्षत्वात् । एवं यथाकथञ्चिदुपयोगो होमस्थलेऽप्यस्ति । तथाहि-प्रतिपत्तिस्त्रिविधाप्रधानोत्तर-काला, प्रधानसमकाला, प्रधानपूर्वकाला चेति । तत्राद्या इडा-भक्षणादिका । द्वितीया होमादिका । तथाहि-दर्शपूर्णमासप्रकरणे श्रूयते 'सकृदुपस्तृणाति', 'द्विर्हविषोऽवद्यति', 'सकृदभि-घारयति', 'चतुरवत्तं जुहोती'ति । तत्र चतुरवत्तवाक्ये होमानुवादेन चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयते । होमस्य अप्राप्तत्वेनानुवादासम्भवात् । न च 'यदाग्नेय' इति वाक्याद्धोम-

---

प्रधानयागप्राक्कालिकत्वं सूचयितुम् उद्धरणकालकर्तव्येति ॥ **प्रसङ्गादिति** ॥ तथाच वक्ष्यमाण '**पशावनालम्भादि**'ति चातुर्थिकाधिकरणसिद्धान्त-विरोध इति भावः ॥ **तथेति**॥ एतदपि चतुर्थद्वितीये '**उत्पत्तौ येन संयुक्त**'मित्यत्र निरूपितम् ॥ **तत्रापि** लोहितशकृतोरपि ॥ **तथाहीति** ॥ यद्यप्यत्र चतुरवत्तहोमगतस्य यथाकथञ्चिदुपयोगस्य प्रतिपादनमेव समुचितम् । तथाऽपि चतुरवत्तहोमस्य उपयुक्तसंस्कारकत्वरूपं प्रतिपत्तित्वं कामं मास्त्विवति इष्टापत्तिरेव कथं नसम्भवतीति शङ्कापरिहारायाभि-युक्तसम्मतेन पथा प्रतिपत्तिं विभजन् प्रथमं तस्य प्रतिपत्तित्वं दृढीकरोति । **प्रतिपत्तिरिति** ॥ नन्वस्य गुणकर्मत्वमेव सन्दिग्धं कुतः प्रतिपत्तित्वम् । अतस्तत्साधयति । **तथाहीति** ॥ **असम्भवादिति** ॥ उद्देश्यत्वं यत्र

प्राप्तिः । तद्वाक्यस्य यागविधायकत्वेन होमविधायकत्वाभावात् । न च यागहोमयोरभेद इति वाच्यम् । देवतोद्देशेन द्रव्यत्यागस्य यागशब्दार्थत्वात्, प्रक्षेपविशिष्टस्य यागस्य होमशब्दार्थत्वात् । तत्राग्नेयचोदनया यागस्य प्राप्तत्वेऽपि प्रक्षेपांशस्याप्राप्तत्वेनानुवादासम्भवात् । किन्तु उपस्तरणद्विरवदानाभिघारणवाक्यैः प्राप्तं चतुरवत्तमुद्दिश्य तत्संस्कारत्वेन प्रक्षोपो 'जुहोती'त्यनेन विधीयते । स च संस्कारः प्रतिपत्तिरूप एव । 'अग्नये जुष्टमभिघारयामी'त्यादिनिर्देशैर्यागाङ्गभूताग्न्यादिदेवतार्थतया यथा कथञ्चिदुपयुक्तस्य पुरोडाशस्य प्रतिपत्त्यपेक्षतया तदवयवद्व्यवदानकर्मकप्रक्षेपस्य प्रतिपत्तिकर्मत्वौचित्यात् । स च

---

तत्रानुवाद्यत्वमावश्यकम् । अनुवादस्तु मानान्तरेण प्राप्तस्य पुनः कथनरूप इत्युक्तमपूर्वम् ॥ **देवतेति** ॥ देवतोद्देशद्रव्यत्यागोभयपर्याप्तं यागत्वम् । प्रक्षेपस्तदद्वयमिति त्रितयपर्याप्तं होमत्वम् ॥ एवमौपोद्घातिकमवान्तरार्थमुपसंहरति । **सचेति** । प्रकृतं यथा कथञ्चिदुपयोगं दर्शयति । **अग्नय इति** ॥ यद्यप्यत्र न द्रव्यस्याग्न्युद्देशेन त्यागः तथाऽपि चतुर्थ्यास्तादर्थ्यपरत्वादनेन मन्त्रेण प्रकृतद्रव्यस्य अग्न्यर्थत्वज्ञानं जन्यत इति तादृशज्ञानोपयोगेनैव होमप्रतिपाद्यद्रव्यस्योपयुक्तत्वं निर्वहतीत्याशयवानाह । **यथाकथञ्चिदिति** ॥ **अपेक्षतयेति** ॥ यद्यपि यागपदाभिधेयदेवतोद्देश्यकद्रव्यत्यागानुष्ठानात्प्राक् न द्रव्यस्य प्रतिपत्त्यपेक्षेति बाधितमिवेदं भाति, तथाऽप्येतन्मन्त्रपठनकाले प्रधानयागस्यापि स्मरणात् तदुपयुक्तद्रव्यमिदं कुत्र प्रक्षेप्तव्यमिति प्रतिपत्तेः प्रधानकालकर्तव्याया अपि पूर्वमेवापेक्षासम्भवो न विरुध्यत इति द्रष्टव्यम् ॥

संस्कारः प्रधानसमकालः । होमो हि 'वषट्कृते जुहोती'ति विधानात् वषट्कारोत्तरक्षणे अध्वर्युणा कर्त्तव्यः । यागोऽपि तस्मिन्नेव क्षणे यागस्य स्मरणार्थेन वषट्कारेण स्मारितः सन् यजमानेनानुष्ठेय इति तयोर्यौगपद्यसम्भवात् । तदिदं सर्वप्रदानाधिकरणवार्त्तिके स्थितम् । प्रधानपूर्वकाला प्रतिपत्तिर्यथा 'शकृत् संप्रविध्यति', 'लोहितं निरस्यती'ति शकृत्संप्रवेधनलोहितनिरसने । इदमपि 'पशावनालम्भा-ल्लोहितशकृतोरकर्मत्वम्' इत्यधिकरणे स्थितम् ।

उपयोक्ष्यमाणसंस्कारोऽप्यनेकविधः - साक्षाद्विनियुक्त-संस्कारः, साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारः, विनियोक्ष्यमाणसंस्कारश्चेति । तत्राद्यो यथा 'व्रीहीनवहन्ती'-त्यादौ 'व्रीहिभिर्यजेते'ति साक्षाद्विनियुक्तव्रीह्यादीनां संस्कारो अवघातादिरूपः । द्वितीयो यथा - 'वत्समालभेते'ति दोहाङ्गत्वेन साक्षाद्विनियुक्तस्य गोद्रव्यस्योपकारको यो वत्सस्तत्संस्कारक-मिदमालम्भनम् । तृतीयो यथा - 'तप्ते पयसि दध्यानयती'त्यत्र 'सा वैश्वदेव्यामिक्षे'ति वाक्येन तच्छब्देन निर्दिश्य वैश्वदेव-

---

द्वितीया होमादिकेत्युक्तं प्रधानसमकालत्वमुपपाद्य सङ्गमयति । सचेति ॥ उक्तार्थस्य प्रामाण्यं द्रढयितुमाह । तदिदमिति ॥ विभक्तायाः प्रतिपत्तेस्तृतीयां विधामुदाहरति । प्रधानेति ॥

आलम्भनमिति ॥ दोहनार्थत्वादिदमपि दृष्टार्थमेव ॥

**यागाङ्गत्वेन विनियोक्ष्यमाणं यत् पयस्तत्संस्कारकत्वा-द्विनियोक्ष्यमाण - संस्कारकं दध्यानयनम् ॥**

**पशुपुरोडाशयागस्तु उपयुक्त उपयोक्ष्यमाणदेवता-संस्कारार्थः । त्यागांशे अदृष्टार्थश्च । अत्र तत्संस्कार्याग्नीषोम-देवताया वपायागे उपयुक्तत्वात् । हृदयाद्यङ्गयागेषु उपयोक्ष्य-**

---

एवं दृष्टार्थं क्रत्वर्थगुणकर्म निरूपितम् । अदृष्टार्थं तु तत् '**व्रीहीन्प्रोक्षती**'ति विहितं प्रोक्षणम्, '**स्थाणौ स्थाण्वाहुतिञ्जुहोती**'ति विहिता यूपसंस्कारार्था स्थाण्वाहुतिश्च ॥ उभयार्थं तु तदाश्रयिकर्मापरपर्यायं स्वयमुदाहरति । **पश्चिति** ॥ **संस्कारार्थ इति** ॥ उद्देशांश इति शेषः ॥ अनेन दृष्टार्थत्वमुक्तम् ॥ अंशान्तरेऽदृष्टार्थत्वमाह । **त्यागेति** ॥ '**उपयुक्तोपयोक्ष्यमाणदेवतासंस्कारार्थ**' इत्यनेनोक्तं देवताया उपयुक्तत्वं उपयोक्ष्यमाणत्वञ्चोपपादयति । **अत्रेति** ॥ **उपयोक्ष्ममाणत्वाच्चेति** ॥ तत्संस्कारार्थत्वं युक्तमिति शेषः ॥ अत्र, दैक्षे पशुयागे अग्नीषोमदेवत्ये पशोर्विशसनानन्तरं तद्वपामुद्धृत्य प्रथममग्नीषोमदेवतोद्देशेन वपायागः क्रियते। अनन्तरम् '**अग्नीषोमस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपती**'ति वाक्यविहितः पशुयागाङ्गभूतः तत्समानदेवत्यः पुरोडाशद्रव्यको यागोऽनुष्ठीयते । पश्चात् पशोर्हृदयजिह्वावक्षः प्रभृतीन् अङ्गान्यादायाग्नीषोमदेवतोद्देशेन याग इत्यनुसन्धेयम् ॥ तदिदमाश्रयिकर्म त्रिविधम् । तत्र त्यागांशेनादृष्टार्थत्वे त्रयाणां समाने किञ्चिदुद्देशांशेन दृष्टार्थं प्रक्षेपांशेन त्वदृष्टार्थम् । यथोदाहृतः पशुपुरोडाशयागः । किञ्चित्तु प्रक्षेपांशेन दृष्टार्थम् उद्देशांशेन तु अन्यार्थम् ।

**माणत्वाच्च । स्विष्टकृद्यागो द्रव्यांशे देवतांशे च उपयुक्त-संस्कारार्थः । त्यागांशे अदृष्टार्थश्च । सूक्तवाकसाधनक-प्रहरणमपि तथैव । उत्तमप्रयाजो यक्ष्यमाणदेवतासंस्कार-त्वात्तदंशे उपयोक्ष्यमाणसंस्कारः। इतरांशे अदृष्टार्थः । हृदयादि-**

---

तामेतां विधामुदाहरति । **स्विष्टेति** ॥ नात्रदेवतासंस्कारेऽपि स्विष्टकृतः देवताविशेषस्य पूर्वमुत्तरत्र वाऽनुपयोगात् ॥ अतएव '**देवतांशेचे**'ति स्विष्टकृद्यागसाधनीभूतमन्त्रजन्यस्मृत्या प्रधानयागदेवतायां केवलाग्नि-रूपायां यःसंस्कारो जन्यते तत्तात्पर्येण । प्रासङ्गिकञ्च तत्कथनं व्युत्पादनाय ॥ किञ्चित्पुनराभ्यामुभाभ्यामप्यंशाभ्यां दृष्टार्थम् । तां विधामुदाहरति । **सूक्तवाकेति** ॥ दर्शपूर्णमासयोः '**सूक्तवाकेन प्रस्तरं प्रहरती**'ति सूक्तवाककरणकः प्रस्तरद्रव्यकः प्रहरतिलक्ष्यो होमो विहितः। '**सूक्तवाको नामेष्टदेवतानुकीर्तनार्थः 'इदन्द्यावापृथिवी' त्यनुवाक**' पठितो मन्त्रविशेषः । एतन्मन्त्रप्रकाश्या एवास्मिन्प्रस्तरहोमे देवताः। एताश्च प्रधानयागेषूपयुक्ताः । प्रस्तरोऽपि हविर्धारण उपयुक्तः । तदेवमसौ होमः उद्देशांशेन प्रधानदेवताः, प्रक्षेपांशेन प्रस्तरञ्च संस्करोतीति अंशद्वयेनाप्यस्य दृष्टार्थत्वमिति ॥ **तथैव** ॥ द्रव्यांशे देवतांशेचोपयुक्तसंस्कारार्थ एव ॥ आसां तिसृणां विधानां स्पष्टप्रतिपत्तये पुनः क्रमेण स्थलान्तराण्युदाहरति । **उत्तमेति** ॥ उत्तमः अन्तिमः '**स्वाहाकारं यजती**'ति वाक्यविहितः ॥ अस्य अग्न्यादिदेवत्यत्वात् अग्न्यादीनाञ्चाग्नेयादिप्रधानयागेषूपयोक्ष्यमाणत्वात् उद्देशांशेन दृष्टार्थत्वम् ॥ प्राक्तनप्रथमोदाहरणे देवता उपयुक्त उपयोक्ष्य-माणोभयात्मा अत्रोपयोक्ष्यमाणैवेति विशेषः ॥ द्वितीया विधा हृदयादीति ॥

हविर्यागात् पूर्वं क्रियमाणो वसाहोमोऽपि वसांशे प्रतिपत्तिरितरांशे अदृष्टार्थ इत्याद्यूह्यम्। केचित्तु उपयोक्ष्यमाणसंस्कारभिन्नसंस्कारकर्मत्वं प्रतिपत्तिकर्मत्वम्। चतुरवत्तद्रव्यस्य होमेन भस्मीभूतस्य होमानन्तरमुपयोक्ष्यमाणत्वाभावात् तद्भिन्नत्वं होमेऽस्तीति लक्षणसङ्गतिरित्याहुः।

**अत्रायं विशेषः। अर्थकर्मणि द्रव्यापेक्षया कर्मणः**

---

पाककुम्भीस्थः पश्वङ्गरसो वसा। तत्साधनको होमो वसाहोमः। वसायाः पाकोपयुक्तत्वादस्य होमस्य प्रक्षेपांशेन दृष्टार्थत्वम्॥ पूर्वं द्वितीयोदाहरणे द्रव्यं साक्षात्प्रधानयागोपयुक्तं प्रकृते न तथेति विशेषः॥ आदिना प्रकाशोदाहृता तृतीया विधा ग्राह्या॥ एवं गुणकर्म निरूपितम्। तत्र प्रधानसमकाले प्रतिपत्तिविशेषे होमरूपे उपयुक्तसंस्कारकत्वरूपं प्रतिपत्तित्वं दुर्घटमिति शङ्कित्वा यथाकथञ्चिदुपयोगस्य विवक्षितत्वेन सुघटमेव तदिति समाहितम्। तामेतामाशङ्कां, प्रतिपत्तिस्वरूपघटकमुपयुक्तत्वं न स्वानुष्ठानप्राक्कालिकोपयोगशालित्वं येनोपयोगसमानकालिकस्य होमस्य स्वपदेन ग्रहणं न घटेत, अपितु स्वानन्तरकालिकभिन्नोपयोगशालित्वन्तत्। तदिदं चतुरवत्तहोमस्थले उपयोगस्य साक्षात्प्रधानयागसम्बन्धित्वविवक्षणेऽपि, होमस्योपयोगसमानकालिकत्वेऽपि च निराबाधमिति परिहरतां केषाञ्चिन्मतमाह। **केचित्त्विति**॥

अर्थकर्मगुणकर्मशब्दयोः प्रवृत्तिनिमित्तं प्रतिपादयन् तदर्थस्वरूपं विवेचयति। **अत्रेति**॥ अर्थकर्मगुणकर्मणोरित्यर्थः॥ विशेषो भेदः॥ नन्वेतत्कथनस्य विभागानन्तरमुभयनिरूपणानन्तरं वाऽवसरः न पुनरत्र।

प्राधान्यम् । कर्मणि द्रव्यस्य गुणत्वम् । यथा अग्निहोत्रादौ दध्यादेर्गुणत्वम्। गुणकर्मणि द्रव्यस्य प्राधान्यम्। द्रव्ये च कर्मणो गुणत्वम्। यथा - 'व्रीहीन् प्रोक्षति' 'अवहन्ती'त्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यम्। प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति ।।

पुनरपि गुणकर्म चतुर्विधम्=उत्पत्ति-आप्ति-विकृति-संस्कृतिभेदात्। तत्रोत्पत्तिसंस्कारो यथा 'अग्नीनादधीते'ति। मन्त्रविशेषैः सम्भारेषु निधापिता आहवनीयादय उत्पद्यन्त इत्याहवनीयात् उत्पत्तिहेतुभूतसंस्कारजनकत्वादाधानस्य उत्पत्तिसंस्कारत्वम्। आप्तिसंस्कारो यथा 'स्वाध्यायोऽध्येतव्य' इति अध्ययनेन स्वाध्याय आप्यत इत्याप्तिसंस्कारोऽयम् । विकृतिर्यथा 'व्रीहीनवहन्ती'ति । अत्र व्रीहिगतवैतुष्यरूप-विकृतिजनकत्वादवहननं विकृतिसंस्कारः । संस्कृतिर्यथा 'व्रीहीन् प्रोक्षती'ति । अत्र प्रोक्षणस्य व्रीहिगतातिशयरूप-

---

सत्यम् । 'इहवा वक्तव्यन्तत्रवेति नकश्चिद्विशेष' इति न्यायविदां सामाचारः पर्यालोच्यताम् ।।

**पुनरपीति**।। तत्र तत्र द्वितीयोपात्तकर्मत्वभेदानुरोधेनायं विभागः ।। **उत्पत्तीति**।। उत्पत्तिरात्मलाभः तत्करणात्कर्माप्युत्पत्तिः तदात्मकस्संस्कार इति ।। संस्कारशब्दो गुणकर्मपर्यायोऽप्यस्ति ।। नन्वग्नयो नोत्पद्यन्ते । उत्पद्यन्त इत्याह। **मन्त्रेति** ।। **आहवनीयेति** ।। सत्यम् उष्णस्पर्शाश्रयभूतं तु वस्तूत्पद्यत इति न वयं ब्रूमः । अपितु अतिशयविशेषावच्छिन्ना अग्नय

**संस्कृतिजनकत्वात् संस्कृतिरूपगुणकर्मत्वम् । अत्र आधान-मध्ययनञ्च स्वतन्त्रं गुणकर्म । न तु क्रत्वङ्गम् । प्रोक्षणादिकं सर्वं क्रत्वङ्गगुणकर्मेति ध्येयम् ।**

**अर्थकर्म त्रिविधम् = नित्यनैमित्तिककाम्यभेदात् । तत्र 'यावज्जीवमग्निहोत्रं जुहोति' 'सायं जुहोति' 'प्रातर्जुहोती'ति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्तव्यतया अवगत-मग्निहोत्रादिकं नित्यम् । 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपे'दिति दर्शपूर्णमासातिपत्तिनिमित्तकपथिकृदिष्ट्यादिकं नैमित्तिकम् । नित्यनैमित्तिकयोरकरणे प्रत्यवाय एव । कृते फलं**

---

उत्पद्यन्त इतीति भावः ।। पुनरपि गुणकर्म द्विविधम् स्वतन्त्र-क्रत्वर्थभेदादिति सूचयन्नाह । अत्रेति ।। प्रकाशकारस्तु **'वैदिकं कर्म चतुर्विधम्= उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्राद्यं यथा . . . . यागादि च स्वर्गाद्युत्पत्त्यर्थ'** मित्याह ।।

विभागवाक्ये अनन्तरनिर्दिष्टमपि गुणकर्म अङ्गत्वादङ्गप्रस्तावे निरूप्येदानीमर्थकर्म निरूपयितुमाह । **अर्थेति** ।। अत्र प्रयाजाद्यङ्ग-भिन्नमर्थकर्म विवक्षितम् । अङ्गानां प्रधानानुरोधित्वेन स्वातन्त्र्येणै-तद्विभागानन्तः पातित्वादिति ध्येयम् ।। **नित्येति** ।। नियतानिमित्तकत्वं नित्यत्वम् । अनियतनिमित्तकत्वं नैमित्तिकत्वम् ।। आद्यद्वयसाधारणं प्रत्यवायजनकीभूताकरणप्रतियोगित्वरूपं काम्यापेक्षया विशेषमाह । **नित्येति** ।। स्वान्वयव्यतिरेकव्यापकान्वयव्यतिरेकशाल्यनुष्ठान-प्रयोजनकत्वं निमित्तत्वम् । एवञ्च निमित्ते सति अनुष्ठानस्यावश्यकत्व-बोधनादकरणे प्रत्यवायोऽनुमीयत इति ।। एवं प्रत्यवायभिय अनुष्ठीयमाने

**नास्तीति केचित्। अन्ये तु दुरितनिवृत्तिः फलमस्ति। 'नित्यनै-मित्तिकैरेव कुर्वाणो दुरितक्षय' मित्यादिवाक्यैः प्रत्यवायनिवृत्तेः फलत्वेन श्रूयमाणत्वात्। न चैवं तयोरपि काम्यत्वापत्तिः फलवत्त्वा दिति वाच्यम्। फलकामनापूर्वकमनुष्ठानाभावात् तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थफलसाधनत्वेन विधाना -भावाच्च**

---

नित्ये नैमित्तके वा कर्मणि तज्जन्यं फलं किञ्चिदस्ति न वा? प्राभाकरास्ताव-दाहुर्नेति। तन्मतमाह। **कृतइति**॥ **अयमाशयः** — न तावत्फलं स्ववाक्ये श्रुतम्। नापि कल्प्यम्। स्वर्गफलकत्वस्यान्यतः प्राप्तत्वात् काम्यत्वानवगमाच्चेति॥ अन्येत्वाहुरस्ति फलमिति तेषां मतमाह। **अन्येत्विति**॥ अत्रापि 'कृत' इति सम्बध्यते॥ यद्यपि न विश्वजिन्न्यायः तथाऽपि रात्रिसत्रन्यायोऽत्र प्रवर्तिष्यत इत्याह। **नित्येति**॥ **इत्यादीति**॥ **'ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत्। अभ्यासाच्च क्वचिद्ज्ञानात् कैवल्यं लभते नरः॥'** इति मूलोक्तवैयासिकवचनशेषः आदिना गृह्यते॥ फलजनकत्वं काम्यत्वमिति मन्वानं प्रत्याह। **नचैवमिति**॥ कर्मणः फलवत्त्वे फलकामनान्वय- व्यतिरेकानुविधाय्यनुष्ठानकत्वापत्त्या श्रुतनिमित्तस्य स्वभावभङ्गप्रसङ्ग इति शङ्कितुरभिप्रायः॥ नैमित्तिकस्थले फलसत्त्वेऽपि प्रवृत्तिप्रयोजकत्वन्निमित्तस्यैव। अत एव प्रवृत्तिप्रयोजक-कामनाविषयफलशालित्वं काम्यत्वमित्याशयेन समाधत्ते। **फलेति**॥ ननु कथं न यः कश्चिद्दुरितक्षयं कामयमानः प्रवर्तिष्यते। न हि कामना नियन्तुं शक्या। तथा च स्थितन्नित्यस्य काम्यत्वम् तत्राह। **तत्तद्विधीति**॥ तथा च स्वविधिवाक्योपात्तफलसाधनत्वावच्छिन्नत्वं काम्यत्वम्। न च

**काम्यत्वानुपपत्तेः । काम्यमपि कर्म त्रिविधम् = केवलमैहिक फलकम् केवलामुष्मिकफलकम् ऐहिकामुष्मिकफलकञ्चेति। तत्राद्यं यथाकारीर्यादि तत्तत्समयपरिशुष्यत्सस्यसञ्जीवनहेतु-वृष्टिकामिना क्रियते। न कालान्तरभाविवृष्टिकामेन जन्मान्तरीय-वृष्टिकामेन वा। केवलामुष्मिकफलकं यथा स्वर्गाद्यर्थं दर्शपूर्ण-मासादिकम्। स्वर्गस्य इह लोके भोग्यत्वाभावात्। ऐहिकामुष्मिक-फलकं यथा- 'वायव्यं श्वेतमालभेत भूतिकाम' इति भूत्यादि-फलकमित्यन्यत्र विस्तरः॥**

**ननु दर्शपूर्णमासादिकर्मणां व्रीह्यादिद्रव्याणाञ्च प्रत्यक्षत्वेन लौकिकत्वात् कथं वेदस्यालौकिकार्थबोधकत्वमिति चेन्न। कर्मणां प्रत्यक्षत्वेऽपि तेषां स्वर्गादिफलसाधनत्व मप्रत्यक्ष मिति तत्फलसाधनतया तत्कर्मकर्तव्यमित्येवं फल-साधनतया कर्मकर्तव्यताबोधकस्य वेदस्यालौकिकार्थबोधकत्वात्। एवं**

---

विश्वजित्यव्याप्तिः। तत्राप्यध्याहारावश्यम्भावात्। एवं तर्हि उक्तस्थलेऽपि काम्यत्वं दुर्वारमिति चेत् फलकामनातिरिक्तप्रयोज्यानुष्ठानकभिन्नत्वं काम्यत्वमिति वक्तव्यमिति॥

एवं विधयो निरूपिताः। क्वचित्कर्मविशेषनिरूपणस्य प्रासङ्गिकत्वात्। तत्तत्कर्मविशेषविधायकतया विधिवाक्यनिरूपण एव पर्यवसानाच्च। अथ ऐतेषां विधायकत्वप्रकारोऽग्रे वर्तयिष्यते। विधायक-त्वञ्चेदम् अधिगतार्थगन्तृत्वम्, अलौकिकार्थप्रमापकत्वं, शब्देतर-प्रमाणानवगतार्थप्रमितिजनकत्वमिति स्थितमन्यत्र। तदेतद्विधायकत्वं केषुचिद्विधिषु न सम्भवतीत्याशङ्क्य परिहरति। **नन्वित्यादिना**॥ न

**व्रीह्यादीनां यागादिक्रियासाधनत्वं न प्रत्यक्षवेद्यमिति तद्बोधकस्यापि वेदवाक्यस्यालौकिकार्थबोधकत्वमिति न दोषः ॥**

**प्रत्यक्षवेद्यमिति । इदन्तु बोध्यम् ।** यागो नाम देवतोद्देशेन द्रव्यत्याग इति विना शब्दं लोके परिज्ञानात् व्रीह्यादिद्रव्याणां यागसाधनत्वमपि प्रत्यक्षगम्यमेव। यद्यप्यस्मन्मते कारणत्वस्य प्रत्यक्षायोग्यनियमघटिततया न लौकिकप्रत्यक्षविषयत्वम्, तथाऽपि सम्बन्धिद्वयप्रत्यक्षेण धूमाग्न्योरिव यागद्रव्ययोरपि कार्यकारणभावोऽनुमानगोचर एवेति न तत्रावश्यं शब्दापेक्षा। अतएव '**सर्वे द्रव्यविधयो नियमविधय**' इति सकलमीमांसकप्रवादः। न हि यागसाधनत्वस्य शब्दैकगम्यत्वे पक्षप्राप्तार्थविधायकत्वरूपं नियमविधित्वं सम्भवति। प्रोक्षणादेरिवापूर्वविधित्वस्यैवापत्तेः। तथा च '**न प्रत्यक्षवेद्य**' मिति कथनमसङ्गतमिति ॥ तस्माद्व्रीह्यादिशास्त्राणामलौकिकार्थ-बोधकत्वमेवं वाच्यम्। सर्वत्र नियमविधिस्थले नियमापूर्वं तावत् किञ्चिदवश्यमभ्युपगन्तव्यम्। अन्यथा हि द्रव्यान्तरेण यागानुष्ठानसम्भवे श्रुतद्रव्यशास्त्रं निष्फलं स्यात्। अतः शास्त्रमिदं स्वार्थवत्त्वाय व्रीह्यादिभिरेव यष्टव्यमिति नियमम् अस्याप्यर्थवत्त्वाय तदपूर्वञ्च स्वतात्पर्यगोचरमवबोधयतीति। तदेतन्नियमापूर्वप्रमापकत्वादलौकिकार्थबोधकत्वमिति **कौस्तुभे विस्तरः**। अत्र लोकत एव यागस्वरूपप्राप्तिमादाय कर्मविधीनामलौकिकार्थबोधकत्वभङ्गशङ्कापुरस्सरं विधेयतावच्छेदकरूपेणाप्राप्ततया नोक्तदोष इति साधितमिति विस्पष्टं प्रतीयमाने लौकिकानां दर्शपूर्णमासादीनां लौकिकफलकत्वमेवास्तु दण्डादीनामिव घटफलकत्वमिति वितर्कयन् तत्र सिद्धान्तमाहेति केषाञ्चिदविनीतां लेखनीं हठादेव प्यापारयतामाहोपुरुषिकान्धानामवतारिका ॥

**इदानीं विधिवाक्यस्य विधायकत्वप्रकारः कथ्यते। तत्र 'स्वर्गकामो यजेते' त्यत्र यजिधातोरुपरितने तप्रत्यये धर्मद्वयमस्ति - आख्यातत्वं, लिङ्त्वं च। तत्र आख्यातत्वञ्च सर्वलकारसाधारणम् । तदवच्छेदेन लिङ्प्रत्ययः पुरुषप्रवृत्तिरूपाम् अर्थभावनां प्रतिपादयति। साचार्थभावना किं केन कथमिति अंशत्रयविशिष्टा। तथा हि - यजेतेत्यत्र प्रथमं प्रत्ययेन भावयेदिति प्रतीयते। सुबन्ताभिहितानां सर्वेषां**

---

अथ विधिवाक्यानां विधायकत्वप्रकारं प्रतिपादयिष्यन् तत्प्रतिपादनमिदानीमेव प्राप्तावसरमित्याह। **इदानीमिति**॥ विधिवाक्यानामनेकभेदभिन्नानां निरूपणानन्तरमित्यर्थः॥ धर्मिज्ञानानन्तरमेव हि तद्गतधर्मविशेषविवेचनं शक्यं कर्तुमिति भावः॥ यद्वा विधिषु प्रदर्शितेषु तदेकदेशभूतं नामधेयमनन्तरं प्रतिपादयितुं '**तस्य कथं भावनान्वय**' इत्याशङ्क्य '**भावनाकरणत्वेनाभिमतयागनामत्वेनान्वय**' इति समाधास्यति। तत्र का भावना, किं करणत्वम्, कथं यागः करणमिति भवति जिज्ञासा। तत्परिज्ञानाय प्रथमतो भूमिमारचयति **इदानीमिति**॥ विधिवाक्यनिरूपणानन्तरं नामधेयनिरूपणात्पूर्वमित्यर्थः॥ **अर्थेति**॥ अर्थयितुः पुरुषस्य भावना। तथाचासौ पुरुषसमवेतप्रवृत्त्यभिधायी भावनाशब्दः॥ **इत्यंशेति**॥ इत्याकाङ्क्षात्रयशामकपदार्थत्रयरूपांशत्रयान्वयापेक्षिणीत्यर्थः॥ पदार्थत्रयविशिष्टभावनारूपांश्यपेक्षमंशत्वम्॥ वाक्ये सर्वत्र यद्यर्थभावनाया आख्यातेन प्रथममुपस्थितिर्भवति, तदानीमेव सा अंशत्रयमपेक्षमाणा समभिव्याहृतपदार्थान् यथायथं

**कारकाणां तिङन्तार्थक्रियान्वयनियमे सति तिङन्तार्थस्य प्राधान्यात् । तत्रापि प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यात् प्रथमं प्रत्ययार्थभावनाया उपस्थितिर्युक्ता । ततः करोति**

---

गृह्णातीति युज्येत । इतरथा हि तस्या एवानुपस्थितौ कुत्रत्या अंशत्रयाकाङ्क्षा, कुतस्तरामनाकाङ्क्षितानामन्वयः । अतस्तदुपस्थितेः प्राथम्यं स्थापयति । **यजेतेत्यत्र प्रथममिति** ॥ ननु व्युत्पन्नस्य पुंसः प्राथमिकेन सोमादिपदेन सोमादेः प्रथममुपस्थितिरावश्यकी तत्राह । **सुबिति** ॥ अयंभावः - सत्यम्, प्रथममुपस्थितिस्सोमादेः । तथाऽपि तु सा सोमादेः कारकत्वात् क्रियान्वयमन्तराऽपर्यवसानात् यावत् क्रियोपस्थिता भवति तावत् किमपि कर्तुमप्रभवन्ती नश्यति । अथ तु आख्यातेनोपस्थिता भावना उत्थितया उत्थाप्यया वा आकाङ्क्षया पुनरुपस्थितान् समभिव्याहृतपदार्थानात्मसात्करोति । तदेवं साक्षादन्वयबोधानुकूलासु उपस्थितिषु अर्थभावनोपस्थितेरेव प्राथम्यमिति । नन्वेवमपि सकलकारकाणां धात्वर्थक्रियायामन्वयात् धातोराख्यातात्पूर्वं श्रवणाच्च धात्वर्थोपस्थितिः प्रथममिति युक्तम् तत्राह । **तत्रापि प्रकृतीति** ॥ **प्राधान्यादिति** ॥ **'भावप्रधानमाख्यातम्', 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येने'** त्यादिनियामकवशेन धात्वर्थस्यापि सोमादीनामिव धात्वर्थातिरिक्ताख्यातार्थभूतार्थभावनाकारकत्वमवसीयत इति ॥ किमिति कर्माकाङ्क्षा भावनाया अकर्मकत्वे न युज्यत इति सकर्मकत्वं साधयति । **करोतीति** ॥ यद्यपि करोतिसमानार्थो यततिः अकर्मकः, तथाऽप्युत्सर्गोऽयं प्रकृते अनपवादः, प्रत्युत पचति पाकं करोतीति विवरणेन उपष्टभ्यत इत्याशयः ।

**समानार्थकभावयतेः सकर्मकत्वात् किं भावयेदिति कर्माकाङ्क्षायां भिन्नपदोपात्तोऽपि स्वर्गो भाव्यत्वेनान्वेति। दुःखात्मकस्य यागस्य ईप्सिततमत्वरूपकर्मत्वायोग्यत्वात्। स्वर्गस्य तु आनन्दात्मकत्वेन ईप्सिततमतया कर्मत्वेनान्वययोग्यत्वात्। ततश्च स्वर्गं भावयेदिति बोधो भवति। ततः केनेति करणाकाङ्क्षायां समानपदोपात्तो यागः करणत्वेनान्वेति। यागेन स्वर्गं कुर्यादिति। ततः कथं यागेन स्वर्गं कुर्यादिति कथम्भावाकाङ्क्षायाम् अग्न्यन्वाधानावहननादिजन्यदृष्टोपकारेण प्रयाजादिजनितादृष्टोपकारेण च सहितेन यागेन स्वर्गं कुर्यादिति अग्न्यन्वाधानप्रयाजादिकमङ्गजातमितिकर्तव्यतात्वेनान्वेति। कथम्भावाकाङ्क्षापूरकत्वम् इतिकर्तव्यतात्वम्। यथा 'ओदनकामः पचे'दित्यत्र लिङा भावना प्रतीयते। किं भावयेदित्याकाङ्क्षायाम् ओदनो भाव्यत्वेनान्वेति। केनेत्याकाङ्क्षायां**

---

**भिन्नेति** ॥ स्तो गौणश्रुती समानाभिधानश्रुतिरेकपदश्रुतिरिति । तत्र स्वर्गस्य कर्मत्वमवगमयति यत् समभिव्याहारात्मकं वाक्यं ततोऽपि बलवत्या यजेतेत्येकपदश्रुत्या यागस्य कर्मत्वौचित्येऽपीत्यपेरर्थः ॥ दुर्बलमपि वाक्यं सामर्थ्येन उत्तभ्यतइत्याह । **दुःखेति** ॥ दुःखसाध्येति पाठे दुःखेन साध्यं यत्कर्म तदात्मकस्येत्यर्थः ॥ तत्र किं केन कथमित्याकाङ्क्षाक्रमे अनुभवस्साक्षी ॥ कथम्भावाकाङ्क्षाशामकत्वं सन्निपत्योपकारकारादुपकारक अङ्गकलापस्यास्तीत्येतत्स्फुटीकरोति । **अग्नीत्यादिना कुर्यादित्यन्तेन** ॥ न केवलमयं तान्त्रिकैकप्रसिद्धो वाक्यार्थवर्णनप्रकार इति लौकिकदृष्टान्तद्वारा प्रतिपादयति । **यथेति** ।

**पाकेनेति लभ्यते। कथमित्याकाङ्क्षायां तृणफूत्कारादिसहितेनेति। ततश्च तृणफूत्काराद्युपकृतेन पाकेन तेजस्संयोगेन ओदनं भावयेदिति वाक्यार्थः सम्पद्यते। तद्वद्वेदेऽपि बोध्यः ॥**

**स एव लिङ्त्वावच्छेदेन शब्दभावनां प्रेरणाख्यामभिधत्ते। लोकेऽपि गामानयेत्याचार्यवाक्यश्रवणानन्तरम्**

---

**पाकेनेति** ॥ नचेदम् अनानुभाविकमिति संशयितव्यम्। देवदत्तः पचतीति केवलमुच्यमाने तथाऽननुभवेऽपि ओदनं पचतीत्यत्र तथाऽङ्गीकारस्यावश्यकत्वात्। न हि भवति ओदनं पाकं करोतीति ॥

भावना द्विविधा = अर्थभावना- शब्दभावनेति। तत्राद्या पुरुषगता प्रवृत्तिरूपा उक्ता। द्वितीयामाह ॥ **स एवेति** ॥ लिङ्प्रत्यय एवेत्यर्थः ॥ **अभिधत्तइति** ॥ न च भिन्नरूपेणापि युगपदर्थद्वयाभिधानं विरुद्धम्। '**अनुभूतर्हि भगवती वस्तूपगमे नश्शरण**'मिति ॥ ननु कथं वेदे लिङः शब्दभावनाऽपरपर्याये प्रेरणाख्ये प्रत्यक्षागोचरेऽर्थे शक्तिर्गृह्यताम्। लोकव्यवहारादेव। न हि वेदे शब्दोऽर्थो वा लोकाद्भिन्नः। आह हि '**य एव लौकिकाः शब्दस्त एव वैदिकाः त एवैषामर्था**' इति। ननु लोक एव कथम्। तद्वक्ष्यति **प्रेरणाज्ञानस्य चे**त्यादिना प्रयोज्यवृद्धगतस्य प्रयोजकगतप्रेरणाविषयकज्ञानस्य नियमेन लिङ्श्रवणानुविधानात् तदवधारणमिति। तत्रापि पर्यनुयोगो भवति प्रयोज्यगतस्य प्रेरणाज्ञानस्य व्युतपित्सोरप्रत्यक्षतया कथं तेन तदवधारणमिति। तमेतन्निरसितुं प्रयोज्यगतगवानयनप्रवृत्त्या तद्गतं प्रेरणाज्ञानमनुमीयत इत्याह **लोकेऽपि** इत्यादिना **प्रवृत्तिकारणम्** इत्यन्तेन ॥ अनन्तरम् इति प्रवर्तत इत्यत्रान्वेति ॥

अयमाचार्यो मां गवानयने प्रेरयतीति प्रेरणाख्यव्यापारं ज्ञात्वैव शिष्यो गवानयने प्रवर्तत इत्यन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानं प्रवृत्तिकारणम्। प्रेरणाज्ञानस्य चान्वयव्यतिरेकाभ्यां लिङादि-श्रवणजन्यत्वावधारणात् लिङादेः प्रेरणायां शक्तिः लोके गृह्यत इति वेदेऽपि तत्रैव शक्तिकल्पनौचित्यात्। इयांस्तु विशेषः - लोके गवानयनादिप्रवृत्त्यनुकूलः प्रेरणाख्यो व्यापारः प्रयोक्तृ-पुरुषगताभिप्रायविशेषः। वेदे तु प्रयोक्तृपुरुषाभावात् लिङादि-शब्दनिष्ठएव स इत्यङ्गीक्रियते। अत एव शब्दनिष्ठव्यापारत्वात्

---

**प्रेरयतीति**॥ प्रेरणा प्रवर्तना विधिरिति पर्यायाः। सेयं प्रेरणा गामानयेत्यत्र लोटा प्रतिपाद्यत इति बालिशा अपि संविद्रते॥ **व्यतिरेकेति**॥ अयमंशः ज्ञात्वैवेत्येवकारेण प्रत्यपादि॥ **कारणमिति**। प्रवृत्तिर्द्विधा = स्वेच्छया वा परप्रेरणया वा। न च प्रेरणास्थलेऽपीच्छाऽऽवश्यकीति वाच्यम्। आचार्यप्रेरितोऽहं करोमि न स्वेच्छयेति व्यवहारस्य दुरपह्नवत्वात्। तत्र प्रेरणोत्तरप्रवृत्तिं प्रत्येव प्रकृते कारणत्वं विवक्षितमिति न व्यभिचारः। ननु विषं भुङ्क्ष्वेत्यादावस्ति प्रेरणाज्ञानम्। न पुनः प्रवृत्तिः। सत्यम्। इष्टसाधनताज्ञानं तु कारणान्तरं नास्ति। प्रत्युत बलवदनिष्टानुबन्धित्वज्ञानं तत्र प्रतिबन्धकं जागरूकमिति॥ **लिङादीति**॥ लिङ् लेट् लोट् कृत्येत्यर्थः॥ **वेदेऽपीत्युक्तार्थम्**॥ **प्रयोक्त्रिति**॥ प्रयोक्तृत्वं यस्याभिधीयेत तथाविधस्य कस्यचित्पुरुषस्य नित्ये वेदेऽभावादित्यर्थः॥ **शब्देति**॥ शब्दनिष्ठत्वात् शाब्दत्वम्। व्यापारत्वात् भावनात्वमिति विवेकः। कथमस्या एव न प्रवर्तकत्वमिति तु न शङ्क्यम्। पुरुषस्थानीयलिङादेरेव तत्वात् तथात्वे

**शाब्दीभावनेत्युच्यते। यागहोमादिविषयप्रवृत्तिहेतुत्वात् प्रवर्तना प्रेरणेति चोच्यते।**

---

व्यापारान्तरकल्पनाप्रसङ्गाच्चेति राणके॥

अथेयं शाब्दभावनानुबन्धिनी प्राचीनप्रक्रियाऽवहितेन मनसा परिचिन्तयितव्या। अर्थवादप्रामाण्याय शब्दभावनात्मनो विधेः प्राशस्त्यरूपेतिकर्तव्यताकाङ्क्षा उपपादनीया। सेयमाकाङ्क्षा शब्दभावनाया विधानद्वारा कर्तव्यताबोधन एव घटते। **'सोमेन यजेत'**त्यादौ यागादिविशिष्टार्थभावनाया विधिविषयत्वेन कर्तव्यताबोधनादेव हि कथम्भावयितव्यमिति कथन्ताकाङ्क्षा। न हि 'भावना' इति सिद्धरूपेणाभिधाने कथमित्याकाङ्क्षोदेति। तद्वदत्रापि द्रष्टव्यम्। तत्र **'अग्निहोत्रं जुहोति' 'सोमेन यजेत'**त्यादि तत्तत्कर्मविशेषविधायक-वाक्येषु विशिष्टार्थभावना विधिविषय इति अर्थभावनाया एव कर्तव्यत्वं साध्यत्वमवगम्यते। नतु शाब्द्याः। विध्यन्तराभावात्। **'स्वाध्यायोऽध्येतव्य'** इत्यध्ययनविधौ तु शाब्दभावनाया विधिविषयत्वेन कर्तव्यत्वमवगम्यते। **तथाहि**। यद्यपि श्रूयमाणो विधिः स्वाध्यायपदवाच्याक्षरराशिप्राप्तिफलकमध्ययनं पुरुषोद्देशेन विधत्ते तथाऽपि अध्ययनप्राप्तस्य स्वाध्यायस्योपयोगे जिज्ञासिते स्वाध्यायघटकविधिवाक्यैः प्रवर्तनाज्ञानपुरस्सरं यत् स्वर्गादीष्टसाधनीभूतयागादिपरिज्ञानं तदर्थतामयमेव विधिः स्वाध्यायस्यावबोधयति। तत्र विधिप्रत्ययेभ्यः प्रवर्तनां बुध्वा यागे इष्टसाधनत्वं पुरुषो यदनुमिनोति तत्र, विधिः प्रवर्तनां केवलं ज्ञापयति वस्तुतः कर्म इष्टसाधनं नवा अत्र मया प्रवर्तितव्यं नवेति पुरुषो मा शङ्किष्टेति, तस्य लिङ् मां साग्रहं प्रवर्तयतीति लिङ्गतप्रवर्तकत्वे आवश्यकत्वज्ञानं यथा

स्यात् तथा विधिरयं व्याप्रियत इति प्रदर्शयितव्यम्। तदर्थमिदमुच्यते- अध्ययनसंस्कृतः स्वाध्यायः क्व उपयुज्यतामित्याकाङ्क्षोदये यद्यद्दृष्टप्रयोजनं सम्भवति तत्तत्स्वाध्यायेन कर्तव्य'मिति सम्भविनि दृष्टप्रयोजने स्वाध्यायं विनियुज्य श्रूयमाणो विधिर्विश्राम्यति। तत्र इतरेषामर्थवत्वस्य विधिमुखनिरीक्षित्वात् तद्विनियोगप्रकारः प्रतिपाद्यते। पुरुषप्रवृत्तिप्रयोजकव्यापाररूपप्रवर्तनाश्रयाणां विधिशब्दाभिधेयानां लिङ्गात् दृष्टप्रयोजनं पुरुषप्रवृत्तिरेवेति तत्रैव ते स्वाध्यायविधिना विनियुज्यन्ते। किं कर्तृत्वेनोत करणत्वेनेति विशेषजिज्ञासायां तदुच्चारयितृपुरुषाभावेन स्वातन्त्र्यात् कर्तृत्वेनेति विज्ञायते। तथा च विनियोगवचनव्यक्तिरियम्-अध्ययनोपात्ता लिङः पुरुषप्रवृत्तिं भावयेयुरिति। केन कथमिति करणेतिकर्तव्यतयोराकाङ्क्षायां सामर्थ्यात् विधिज्ञानं प्राशस्त्यज्ञानञ्च क्रमेण करणत्वेन इतिकर्तव्यतात्वेन च भावनासम्बन्धमनुभवतः। न च चेतनप्रवर्तनात्मा विधिः कथमचेतनान् लिङो नियुञ्जीतेति वाच्यम्। पुरुषस्तावत् प्रयोज्यो न तु प्रयोजकः प्रयोजकेन तु केनचिद्भवितव्यं यः प्रकृतविधिनियोज्यतां भजेत। तत्रान्यस्यासम्भवेन लिङामेव प्रयोजकत्वं प्रकृतविधिनियोज्यत्वञ्च कल्प्यते। चैतन्यमपि पुरुषद्वारकं तत्र भविष्यति आरोपयिष्यत इति। लिङ्भिः पुरुषप्रवृत्तौ जननीयायां विधिज्ञानपूर्वकं स्वर्गादिसाधनीभूतयागाद्यवबोधो द्वारमिति न स्वाध्यायविधेः पूर्वोक्तार्थज्ञानोद्देश्यकत्वविरोधः। एवञ्चास्मात् श्रुतानुमितैकदेशनिष्पन्नात् **'अध्ययनोपात्ता लिङः प्राशस्त्यज्ञानसहकृतेन विधिज्ञानेन पुरुषप्रवृत्तिं भावयेयु'** रिति वाक्यात् पुरुषप्रवृत्तिभाव्यिका विधिज्ञानकरणिका प्राशस्त्यज्ञान

**सैषा शब्दभावनाप्यंशत्रयविशिष्टा । तत्र पुरुषप्रवृत्तिरूपार्थभावना भाव्यत्वेनान्वेति । अध्ययनावगत-लिङादिकं करणत्वेनान्वेति । अर्थवादप्रतिपाद्यप्राशस्त्यज्ञानम् इतिकर्त्तव्यतात्वेनान्वेति । तथा च साङ्गवेदाध्येतारः अधीतव्याकरणनिगमनिरुक्तादिवशाद् व्युत्पत्तिमन्तः पुरुषा अध्ययनगृहीतस्वाध्यायगतलिङादिभिः प्राशस्त्यज्ञानसचिवैः यागाद्यर्थान् कर्त्तव्यत्वेन बुध्वा यागादीननुतिष्ठेयुरिति शब्दभावनाबोधः । अनुतिष्ठेयुः अनुष्ठानं कुर्युरित्यर्थः । अनुष्ठानं प्रवृत्तिः । तेन पुरुषप्रवृत्तेः शब्दभावनाभाव्यत्वमक्षतम्।**

---

इतिकर्तव्यताका लिङ् कर्तृकाऽर्थभावना शब्दभावनाविषय इति बोधस्य जायमानतया प्रातिस्विकविधिवाक्यप्रतीतशब्दभावनानामेवात्र लिङ् कर्तृकार्थभावनात्वेन भातानां विधिविषयत्वेन कर्तव्यताऽवगम्यत इति । तत्र इतिकर्तव्यतापेक्षायां प्राशस्त्यरूपतत्समर्पणायार्थवादा व्याप्रियन्त इति स्थितमर्थवादानां प्रामाण्यमिति ।। तदेतत्सर्वं मनसि निधाय प्रसङ्गात् शाब्दभावनाबोधं प्रतिपिपादयिषुराह । **सैषेति** ।। सामर्थ्याद्विधिज्ञानं करणमित्युक्तं प्राक् । तत्र विधिः प्रवर्तनाऽपि लिङपि । प्रकृते लिङिति कृत्वा तद्ज्ञानस्य करणत्वे ज्ञानद्वारा तस्यापि करणत्वं स्थितमित्यभिप्रेत्य लिङादिकमेव करणत्वेनान्वेतीत्याह । **अध्ययनेति** ।। आद्यर्थो लोट्प्रभृतिः ।। प्रत्येकमंशत्रयमभिधाय विशिष्टान्वयबोधं प्रतिपादयन्नाह । **तथाचेति** ।। **पुरुषा अनुतिष्ठेयुरिति** पुरुषप्रवृत्तिरूपं भाव्यमुक्तम् । **लिङादिभिरिति** करणम् ।। लिङ्ज्ञानेन प्रवर्तनाज्ञानम्, ततस्तद्विषयत्वेन यागादाविष्टसाधनताज्ञानं ततः कर्तव्यत्वबुद्धिरित्येतावत् प्रवृत्तिजनने द्वारम् ।।

तदेतदुक्तं **यागाद्यर्थं कर्तव्यत्वेन बुध्वेति** ॥ अत एव **लिङादिभिरिति** तृतीया **बुध्वे**त्यनेनान्वीयते ॥ विहितस्याध्ययनस्यानुष्ठानपर्यन्तत्वमाह । **अध्ययनगृहीतस्वाध्यायगतेति**॥ एवं लिङ्ज्ञानपूर्वकमनुष्ठाने पुरुषाणां सामर्थ्यलभ्यमधिकारिविशेषणमाह। **साङ्गवेदाध्येतारइति** ॥ वेदाध्ययनं केवलमस्तु अलम् अङ्गाध्ययनेन अतस्तदावश्यकतां दर्शयति । **अधीतेति**॥ **प्राशस्त्यज्ञानसचिवै** रित्यनेनेतिकर्तव्यताऽभिहिता । साचिव्यमनुष्ठापने न तु कर्तव्यताबोधन इत्यवधेयम् । **इदमत्र भाति**-नायमाकारश्शाब्दभावनाबोधस्य। शाब्दभावना बोधो हि, उक्तमंशत्रयं यत्र शाब्दभावनायां साक्षात्सम्बन्धमनुभूय विशेष्यभूतया तया साकं भासते स एव । न चैष सम्बन्ध उक्तवाक्यात्प्रतीयते । तथाहि-अनुतिष्ठेयुरिति तावत्प्रकृत्या प्रवृत्तिरर्थभावना, प्रत्ययेन च शब्दभावना, उभयमपि वा धातोरनुवादत्वाङ्गीकारे भावयेदित्यादाविव प्रत्ययेनैव प्रतिपाद्यते । तत्रार्थभावना मुख्यविशेष्यभूतेति स्थितमन्यत्र । एवञ्च यजेतेत्यादाविव 'पुरुषाश्रयाऽर्थभावना शब्दभावनाप्रयोज्या' इत्येव बोधस्य जननेनार्थभावनाया भाव्यत्वेन शब्दभावनान्वयासम्भवः । तथा लिङादिभिर्बुध्वेत्यादीनामप्यर्थभावनायां पुरुषप्रवृत्तिरूपायामेवान्वयस्य व्युत्पन्नत्वात् शब्दभावनान्वयो दुरुपपादः । यदि तु शब्दभावना विशेष्यत्वमभ्युपगम्य तत्र स्वकारकविशिष्टपुरुषप्रवृत्तिरर्थभावना भाव्यत्वेनान्वेति लिङादिकमपि करणत्वेनेत्यभिधीयते तर्हि प्रतिविधिवाक्यमेवं वर्णयितुं सुशकत्वात् अध्ययनविधिस्थले केवलं शाब्दभावनाबोधवर्णनमसङ्गतं स्यात् । अपि च कर्तव्यत्वेन प्रतीतौ सत्यामेव इतिकर्तव्यताकाङ्क्षा उदियादित्युक्तम् । न च पुरुषा

**इयञ्च शब्दभावना ज्योतिष्टोमादिप्रातिस्विकवाक्येषु स्वरूपेण प्रतीयमानाऽपि कर्त्तव्यत्वेन न प्रतीयते। अर्थभावनाया एव तेषु कर्त्तव्यत्वावगमात्। किन्तु 'स्वाध्यायोऽध्येतव्य' इतिवाक्य एव कर्त्तव्यत्वेन प्रतीयते । नचात्रापि अर्थभावनाया एव**

---

अनुतिष्ठेयुरित्युक्ते लिङभिहितायाश्शब्दभावनायाः कर्तव्यत्वं प्रतीमः । विधिविषयत्वे हि तत्प्रत्ययस्स्यात्। नचाख्यातं विधिद्वयमाह ॥ तात्त्विकः शाब्दभावनाबोधाकारस्तु अध्ययनोपात्ता लिङः विधिज्ञानेन प्राशस्त्यज्ञानसहकृतेन पुरुषप्रवृत्तिं भावयेयुरिति वाक्येनैवाभिलापमर्हतीति वेदितव्यम् । ग्रन्थकृता तु अंशत्रयस्य शब्दभावनासम्बन्धिन एकत्र समुच्चित्य परस्पराभिसम्बन्धप्रदर्शनार्थमापाततो यत्किञ्चिदुक्तमिति सन्तोष्टव्यम् ॥ उक्तांशत्रयावगाहिनी शब्दभावनाप्रतीतिर्नैवानुभाविकीति तत्र श्रमो मुधेति नवीनानां पन्था **इत्यन्यत्र विस्तर** इति ॥ ननु अध्ययनविध्यधीनः शाब्दभावनाबोध एव कथितः । न तु **'सोमेन यजेते'**त्यादिविध्यधीनः। तत्कथमिति शङ्कामपाचिकीर्षुः यत्र कर्तव्यत्वेन प्रतीतिः तत्रैवांशत्रयाकाङ्क्षयोक्तविधबोधस्सम्भवति न तु यत्र स्वरूपतो ज्ञानं तत्रापीत्याशयेन सोमेनेत्यादिवाक्येषु शब्दभावनायाः कर्तव्यत्वेन प्रतीतिर्नास्तीत्याह । **इयञ्चेति** ॥ **इतिवाक्यएवेति** ॥ इतिवाक्याधीनविनियोगवाक्य एवेत्यर्थः ॥ तच्च विनियोगवाक्यं **'अध्ययनोपात्ता लिङ'** इत्यादिनाऽस्माभिरुक्तं वेदितव्यम् ॥ एतेन स्वाध्यायोऽध्येतव्य इति स्वाध्यायभाव्यकाऽध्ययनकरणिका अर्थाक्षिप्ताध्येतृकर्तृकाऽर्थभावना विधिविषय इत्येवं स्वाध्यायसंस्कारक गुणकर्मविधायकमिदं वाक्यमिति वक्ष्यमाणमसंगतमिति निरस्तम् ॥

**विधेयत्वमिति वाच्यम् । 'स्वाध्यायोऽध्येतव्य' इति वाक्यस्थार्थभावनाया एव सकलविधिवाक्यस्थशब्दभावना-रूपत्वात् । तथाहि-अधिपूर्वकात् 'इङ् अध्ययने' इति धातोः कर्मणि तव्यप्रत्ययो विहितः । कर्म च स्वाध्यायः प्रधानम् । तत्संस्कारमध्ययनं गुणकर्म व्रीहिसंस्कारकप्रोक्षणादिवत् । अध्ययनजनितग्रहणसंस्कारविशिष्टस्वाध्यायस्य प्रयोजना-काङ्क्षायां स्वाध्यायगतलिङादिविशिष्टवाक्यसामर्थ्यलभ्यं यदनुष्ठानौपयिकं यागादिरूपार्थज्ञानं तदेव दृष्टत्वात् तत्तत्कर्मा-नुष्ठानद्वारा स्वर्गादिरूपालौकिकश्रेयस्साधनत्वाच्च प्रयोजनम् । कर्मावबोधं विना कर्मानुष्ठानायोगात् । न त्वदृष्टं प्रयोजनम् । दृष्टफले**

---

**अत्रेति**।। उक्तविनियोगवाक्य इत्यर्थः ।। **इतिवाक्यस्थेति** ।। इतिवाक्याधीनविनियोगवाक्यघटकाख्यातप्रतिपादितेत्यर्थः ।। **रूपत्वादिति**।। तदिदं पूर्वमेव प्रतिपादितम् ।। ननु '**स्वाध्यायोऽध्येतव्य**' इत्यत्र यदि स्वाध्यायोद्देशेनाध्ययनं विधीयते तर्हि, अनुपयुक्तस्य संस्कार्यत्वायोगात् तदन्यथानुपपत्त्या युक्तं यत्तद्विनियोजकं वाक्यान्तरं कल्प्यते यत्र शब्दभावनानां कर्तव्यत्वमवगम्यत इति । तदेव तु न सिद्धम्। स्वाध्यायाध्ययनस्यादृष्टार्थं विधानात् । नैतदेवमित्याह । **तथाहीत्यादिना**।। **कर्मेति** ।। तव्योपात्तकर्मकारकशक्त्यवच्छिन्न इत्यर्थः ।। **विशिष्टेति** ।। घटितेत्यर्थः । **सामर्थ्येति** ।। लिङ् घटितानि हि वाक्यानि कर्मानुष्ठाने पुरुषं प्रवर्तयन्ति । कथमिदं पुरुषस्य ज्ञानमनुत्पाद्य शक्यं कर्तुमिति सामर्थ्यम् ।। उक्तमेव सामर्थ्यमुपपादयति **कर्मावबोधमिति** ।। यदर्थमयं

**सम्भवत्यदृष्टकल्पनायोगात् । तथा च स्वाध्यायविधिनैव स्वाध्यायगतविधिवाक्यगतलिङादिप्रतिपादिताः सर्वाः शब्दभावना अंशत्रयविशिष्टाः कर्त्तव्यत्वेन विधीयन्ते साङ्गवेद अध्ययनव्युत्पन्नाः पुरुषाः अध्ययनगृहीतस्वाध्यायगतलिङादिभिः अर्थवादावगतप्राशस्त्यरूपाङ्गसचिवैः फलवद्यागादिकर्त्तव्यतां बुद्ध्वा यागादीननुतिष्ठेयुरिति । अनुतिष्ठेयुः प्रवृत्तिं कुर्युरित्यर्थः । तत्र पुरुषप्रवृत्तेर्भाव्यत्वेनान्वयात्, अध्ययनावगतलिङादेः**

---

तथाहीत्यारम्भस्तदाह । **तथाचेति** ॥ गुणकर्मविधायकत्वे सिद्धे चेत्यर्थः ॥ स्वविहितसंस्कार संस्कार्यत्वान्यथानुपपत्त्येत्येवस्यार्थः ॥ **कर्तव्यत्वेन विधीयन्त** इति ॥ कर्तव्यताबोधकस्वाक्षिप्तविनियोगविधिविधेया यथा स्युस्तथा क्रियन्त इत्यर्थः ॥ यद्यपि कर्तव्यत्वेन विधानप्रकारः प्रागुक्तरीत्या प्रथमानन्तलिङ्घटितवाक्येनैवाभिलापमर्हति तथाऽपि तत्र लिङां पुरुषगतचैतन्यद्वारकन्नियोज्यत्वं न सुखं व्युत्पित्सूनां बुद्धिमारोक्ष्यतीति यथाकथञ्चित् शब्दभावना सम्बन्ध्यंशत्रयमुपादायाभिलपति । **साङ्गेति** । वस्तुतस्त्वत्र शब्दभावनाया विधिविषयत्वाभावान्न कर्तव्यत्वेन प्रतिति-रित्याद्युक्तप्रायम् । शाब्दभावनाबोधाकारं प्रदर्शयितुं पूर्वमिदमुक्तम् । अत्र पुनः कर्तव्यत्वेन विधानप्रदर्शनार्थमिति न पुनरुक्तिः ॥ शब्दभावनासम्बन्धि अंशत्रयं पुनर्विशिष्य प्रदर्शयन् '**सैषा शब्दभावनाप्यंशत्रयविशिष्टे**'-त्युपक्रान्तं तत्प्रस्तावमुपसंहरति । **तत्रेति** । ननु फलवद्यागादिकर्तव्यतां बुध्वेत्युक्तम् । तत्र फलवत्त्वं कथं लब्धम् । फलवत्त्वं हि फलसाधनत्वम् । न च तत्साधनत्वबोधकः कश्चिच्छब्दः परिदृश्यते । न च विधिवाक्येषु

**करणत्वेनान्वयात्, प्राशस्त्यज्ञानस्य इतिकर्तव्यतात्वेनान्वयात् शब्दभावनाया अप्यंशत्रयवैशिष्ट्यमर्थभावनाया इव इष्टम्। तत्र समीहितस्वर्गादिभाव्यकत्वमपि विधिवशादेव। प्रवर्तनापरो हि विधिर्यागादेः पुरुषार्थसाधनत्वे तत्र पुरुषं प्रवर्त्तयितुं शक्नोतीति स्वभाव्यपुरुषप्रवृत्तिविषयस्य यागादेः पुरुषाभिलषित-स्वर्गादिसाधनत्वमापादयति। अन्यथा स्वस्य प्रवर्त्तनात्वमेव**

---

स्वर्गकाम इत्यादिफलश्रवणात्तदवगमः। तत्र स्वर्गकामनायाः '**स्त्रीकामः प्रायश्चित्तं कुर्या**' दित्यादाविव निमित्तत्वेन वा अधिकारिविशेषणत्वेन वा उपपत्तेरितिचेदाह। **तत्रेति**॥ अर्थभावनायामित्यर्थः॥ भाव्यत्वानुभव-योग्यतां दर्शयितुं समीहितेति विशेषणम्॥ ननु यागे इष्टसाधनत्वं कथमिति पृष्टम्। अर्थभावनायाः स्वर्गभाव्यकत्वं विधिवशादित्यन्यदुक्तम्। न। तत्र स्वर्गभाव्यकत्वे सिद्धे यागे स्वर्गसाधनत्वस्य स्वयं सिद्धेरित्याह। **प्रवर्तनेति**॥ अयं भावः - विधिर्हि प्रवर्तना यागादौ या पुरुषस्य प्रवृत्तिः तदनुकूलो व्यापारः। तत्र पुरुषस्य प्रवृत्तिर्नेच्छां विना। साऽपि नेष्टसाधनत्वज्ञानमन्तरा। तत्र यद्यपि न साक्षात्तद्बोधकं पदं किमपि श्रूयते तथाऽपि प्रवर्तना स्वयमेव स्वप्रवर्तनात्वभङ्गभिया स्वविषयस्य तदाक्षिपतीत्यङ्गीकार्यम्। तदिष्टं किमिति विशिष्य जिज्ञासायां सन्निहितमीप्सितं स्वर्गादिकमेवेति ज्ञायते। एवमसम्भवात्तु 'स्त्रीकाम' इत्यादावन्यथाऽङ्गीकार इति॥ अथ तत्र जायमानमिष्टसाधनत्वज्ञानं भ्रान्तं स्यात्। न स्यात्। ज्ञानं हि नः स्वतः प्रामाण्यशालि। नचात्र बाधकं किमप्यस्तीति॥ **साधनत्व** इति॥ बोधित एवेति शेषः॥ **अन्यथेति**॥

**न स्यात् । प्रवृत्तिहेतुव्यापारस्यैव प्रवर्त्तनात्वात् । लडादिस्थले तु प्रवर्त्तनात्मकविधेरभावादर्थभावनायाः पुरुषार्थभाव्यकत्व-नियमो नास्ति । भावनात्वं नाम भवितुः प्रयोजकव्यापारत्वम् । तत्रार्थभावनायां भवितुर्जायमानस्य स्वर्गादेः प्रयोजक-व्यापारत्वात् लक्षणसङ्गतिः । शब्दभावनायामपि पुरुषप्रवृत्ति-रूपस्य भवितुः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः ।**

**ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र यागेन स्वर्गं**

---

स्वर्गादिसाधनत्वानापादन इत्यर्थः ॥ **न स्यादिति** ॥ कथं न स्यात्तत्राह । **प्रवृत्तीति** ॥ इष्टसाधनत्वानवगमे कदाचिदपि कस्यापि प्रवृत्तिर्न जायेतेति प्रवृत्तिहेतुत्वं भज्येतेति भावः ॥ प्रवर्तनाया इष्टसाधनताक्षेपकत्वेऽन्वय-मुपपाद्य व्यतिरेकं दर्शयति । **लडादीति** । इदानीं भावनासामान्यलक्षणमाह । **भावनात्वमिति** ॥ चिन्त्यमिदम् - यदि हि प्रकृतभावनाद्वयमेव लक्ष्यम् घटप्रयोजककुलालचेष्टायामतिप्रसङ्गः । अथ साऽपि लक्ष्यभूता, लक्ष्यतावच्छेदकमनुगतं दुर्लभम्, प्रकृतानुपयोगश्च । परन्तु उक्तं रूपं भावनापदप्रवृत्तिनिमित्तं प्रकृतलक्ष्यद्वये भावनापदप्रयोगौचित्यनिर्वाहकम् । तदुक्तमभियुक्तैः **'उत्पादकव्यापारत्वाद्भावनाशब्देन गीयते । भाव्योत्पादानुकूलस्य व्यापारस्य भावनात्वप्रसिद्धे'**रिति ॥

एवं विधितदर्थौ निरूप्य विध्येकदेशन्नामधेयं निरूपयितुं शङ्कते । **नन्विति** ॥ यद्वा विधिनिरूपणानन्तरं तदेकदेशनामधेयनिरूपणोपयोगिनम् उपोद्घातं समाप्य नामधेयं निरूपयितुं शङ्कते । **नन्विति** ॥ अत्रा ख्यातोपात्तभावनान्वयिनः फलस्य करणस्येतिकर्तव्यताया वा

**भावयेदित्यर्थवर्णने ज्योतिष्टोमपदस्य कथमन्वय इति चेन्न। भावनाकरणत्वेनाभिमतयागनामत्वेनान्वयात् ज्योतिष्टोम-नामकेन यागेनेति। कथं तन्नामत्वमिति चेन्न। ज्योतिराख्यास्त्रि-वृदादिस्तोमा अस्मिन् सन्तीति व्युत्पत्त्या यागनामत्वात्। यागस्य त्रिवृदादिस्तोमसम्बन्धः केनावगम्यत इति चेन्न। 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः एतानि वाव ज्योतींषि य एतस्य स्तोमा' इति वाक्यान्तरेण एतच्छब्दार्थस्य तत्सम्बन्धाव-**

---

समर्पकत्वासम्भवादयमंशोऽप्रमाणमेवेत्याक्षेप्तुराशयः ॥ यदि भावनान्त-र्भावः कथमपि न सम्भवति तर्हि युक्तमिदमप्रमाणमिति। नत्वेवं प्रकृते। भावनान्तर्गतकरणसमर्पकत्वस्यैव सुवचत्वात्। न च धातुनैव करण-समर्पणम्। तेन सामान्यरूपेण समर्पणेऽप्यनेन विशेषरूपेण समर्पणे बाधकाभावादित्यभिसन्धाय समाधत्ते। **नेति** ॥ अथ क्रमेण नामधेयत्व-निर्णायकानि चत्वारि प्रमाणानि निरूपयिष्यन् शङ्कते। **कथमिति** ॥ ज्योतिष्टोमेनेत्यस्य भावनानन्तर्गत्याऽप्रामाण्ये प्रतिपादिते नामधेयत्वेनान्वय इति प्रौढानामप्रामाणिकी या काचिद्वाचोयुक्तिरिति शङ्कितुरभिसन्धिः ॥ आकरे क्रमस्यान्यादृशत्वेऽपि प्रकृते आक्षेपस्थलानुरोधेन तत्प्रख्य-शास्त्रात्मकं नामधेयप्रमाणमेवादौ निरूपयति। **ज्योतिरिति** ॥ एवं योगेनैव ज्योतिष्टोमपदस्य यागे प्रवृत्त्युपपादनेनाप्रामाणिकत्वशङ्का व्युदस्ता ॥ नन्वेवं गुणसमर्पकमस्तु पदमिदमिति शङ्कते। **यागस्येति** ॥ **केनेति** ॥ तथाचात्रैव तद्विधानमावश्यकमिति भावः ॥ स्तोमपदं व्याख्यास्यते **एतच्छब्देति** ॥ यागस्येति शेषः **अवगमादिति** ॥ तथा च '**विधित्सितगुणप्रापि-**

**गमात् । एवं शास्त्रोक्तैस्तत्प्रख्यादिभिर्हेतुभिस्तत्र तत्र नामत्वं बोध्यम् । शास्त्रे हि तत्प्रख्यतद्व्यपदेशयौगिकवाक्यभेदैश्चतुर्भिः नामत्वं प्रतिपादितम् । तथाहि 'अग्निहोत्रं जुहोति' इत्यत्र अग्निहोत्रशब्देन अग्निदेवतारूपो गुणो न विधीयते । 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती'ति वाक्यविहितेन मन्त्रेण देवतायाः प्राप्तत्वात् । किन्तु अग्निप्रख्यापकमग्निप्रापकं**

---

**शास्त्रमन्यद्यतस्त्विह । तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यता'**-मिति भावः ॥ एवं तत्प्रख्यन्यायमुदाहृत्य अध्येतृणां तत्प्रामाण्य-प्रत्ययाय शास्त्रीयत्वमनुसन्दधानः तानि प्रमाणानि नामभिर्निर्दिशति । **एवमिति** ॥ **यौगिक इति** ॥ योगव्युत्पत्तिशाली शब्द इत्यर्थः । गुणे कर्मणि च तुल्यवद्वर्तमानश्शब्द इति यावत् ॥ अत्र यौगिकशब्दस्थाने मत्वर्थलक्षणां केचिदिच्छन्ति । तथात्वे '**सोमेन यजेते**'त्यत्र सोमपदस्य मत्वर्थलक्षणा-भिया नामधेयत्वापत्तिरिति ग्रन्थकृताऽन्यथोक्तमिति वेदितव्यम् ॥ परेतु विधिवाक्यानन्तरं तदर्थे वर्णिते तत्र ज्योतिष्टोमेनेत्यादिपदानन्वयरूपमाक्षेपं '**ननु ज्योतिष्टोमेने**'त्यादिनोद्भाव्य '**भावनाकरणत्वेने**'त्यादिना नामधेयत्वेनान्वय इति समाहितम् । तत्प्रसङ्गान्नामधेयत्वप्रमापकाणि प्रमाणानि निरूपयितुमुपक्रमते **एवं शास्त्रोक्तै**रित्यादिनेत्यवतारयन्ति ॥ एवं चेत् नामधेयनिरूपणं प्रासङ्गिक-मिति विभावनीयम् ॥ भावनायां करणत्वेनाभिमतयागनामत्वमुपोद्बलयितुं तृतीयान्तनामधेयपदघटितं वाक्यमुदाहृत्य व्युत्पत्तिवैशद्याय मूलोक्तमपि तत्प्रख्यन्यायोदाहरणं द्वितीयान्तनामधेयपदघटित माह । **अग्निहोत्रमिति** ॥ **अनुवादकत्वेन वेति** ।

**यच्छास्त्रान्तरम् 'अग्निर्ज्योतिर्ज्योतिरग्नि'रित्यादिकम् तेन प्राप्तमग्निसम्बन्धं निमित्तीकृत्य अग्नये होत्रं होमोऽस्मिन्निति बहुव्रीहिणा अग्निहोत्रपदस्य होमनामधेयत्वम्। न च होमस्य प्रत्ययवाच्यायामर्थभावनायां करणत्वात् तन्नामत्वे अग्निहोत्रेणेति तृतीया स्यात् ज्योतिष्टोमेनेतिवदिति वाच्यम्। द्वितीयाया एव लक्षणया करणार्थकत्वात् नासाधितं करण मितिन्यायेन असाधितस्य करणत्वायोगात् अर्थात् प्राप्तहोमगतसाध्यत्वानुवादकत्वेन वा द्वितीयोपपत्तेरिति तत्प्रख्यन्यायेनात्र नामत्वम्।**

**तथा 'श्येनेनाभिचरन् यजेते'त्यत्र तद्व्यपदेशन्यायात् श्येनपदं यागनामधेयं न तु यागाङ्गत्वेन श्येनपक्षिरूपगुणविधिः। 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तम्भ्रातृव्यं निपत्यादत्त' इत्युपमानोपमेयव्यपदेशानुपपत्तिप्रसङ्गात्। श्येनपक्षी यथा**

---

वेति चार्थे। अनुवादकत्वस्याङ्गीकारेऽनङ्गीकारे वा करणत्वे लक्षणाया आवश्यकत्वेन करणत्वानुवादकत्वयोर्विकल्पायोगादिति ध्येयम्॥

तद्व्यपदेशान्नामत्वं यत्र तत्स्थलमुदाहरति। **एवमिति**। **तद्व्यपदेशेति**। तदा विधित्सितो गुणः परामृश्यते। वीति विशेषे स च विभिन्नार्थकत्वरूपः अपदेशस्सङ्कीर्तनं तथा च **'यथा ह वा'** इति वाक्यशेषे एकस्यैवोपमानोपमेयभावानुपपत्त्या **'यथा' 'एवं'** पदाभ्यां विधिघटकश्येनपदस्य प्रसिद्धश्येनापेक्षया विभिन्नार्थकत्वप्रतीते; विधित्सितश्येनरूपगुणापेक्षया विभिन्नार्थकतया सङ्कीर्तनरूपोऽयं वाक्येशेष इति स एव तद्व्यपदेशः॥ परेतु विशेष उपमानत्वम्। विधित्सितगुणस्योपमानत्वेन

**पक्ष्यन्तरं निपत्यादत्ते एवमयमपि श्येननामकः कर्मविशेषो भ्रातृव्यं शत्रुं निपत्यादत्ते इति व्यपदेशः कर्मनामत्वपक्ष एव युज्यते। यागाङ्गतया श्येनपक्षिविधौ तु स्वस्य स्वेनैव उपमानोपमेयभावः स्यात् स चायुक्तः। तस्मात् श्येनपदं नामधेयम्। ततश्चाभिचरन् शत्रुवधकामः श्येननामकेन यागेन अभिचारं भावयेदिति वाक्यार्थः। नन्वेवमभिचारस्यापि वेदोक्तत्वात् आभिचारिके कर्मण्यास्तिकानामपि प्रवृत्तिः स्यादिति चेन्न। वेदोक्तोऽप्यभिचारो वेदविहितो न भवति फलत्वात्। फलं न विधेयम्। किन्तु फलमुद्दिश्य तत्साधनत्वेन कर्मैव विधेयमिति**

---

यत्र कीर्तनं स वाक्यशेषस्तद्व्यपदेश इत्याहुः॥ आक्षिप्य किञ्चित्समाधास्यन् प्रकृतिविषयवाक्यार्थमाह। **ततश्चेति**॥ श्येनपदस्य नामधेयत्वे सतीत्यर्थः॥ **वधकाम इति**॥ 'अभिचरन्' इति हि 'लक्षणहेत्वोः क्रियाया' इति व्याकरणस्मृत्या अभिचारगतहेतुत्वद्योतकशतृप्रत्ययान्तमिति ज्ञायते। '**हेतुः फलं कारणञ्च**'। विधिसमभिव्याहारात्तु प्रकृते फलत्वं निर्धार्यते। तत इदं लभ्यते 'अभिचरन् शत्रुवधकाम' इति॥ वधो मरणानुकूलो व्यापारः॥ **वेदोक्तत्वादिति**॥ वेदप्रमितस्य हिंसानिषेधस्य दैक्षादिपश्वालम्भनाविषयकत्वे वेदोक्तत्वमेव नियामकमित्यभिमानेनेदम्। तादृशमभिमानं निराकर्तुं न तत्र वेदोक्तत्वं नियामकम् अपि तु वेदविहितत्वमिति स्फोरयन्नाह। **वेदेति**॥ ननु विहितत्वं नाम विधिविषयत्वम्। तद्यथा यागस्य तथाऽभिचारस्यापीति को विशेषः। अस्ति विशेष इत्याह। **फलमिति**॥ **उद्दिश्येति**॥ तथा च उद्देश्यताख्यविधिविषयताऽऽभिचारात्मके फले। अज्ञातज्ञाप्य-

**सिद्धान्तात्। अतोऽभिचारस्याविहितत्वेन प्रत्यवायजनकत्वम्।**

**एवम् 'उद्भिदा यजेत पशुकाम' इत्यत्र पशुरूपफलाय विधित्सितस्य यागस्य उद्भित्पदं नामधेयम्। न तु यथाकथञ्चित् प्राप्तं यागमुद्दिश्य तदङ्गतयोद्भिद्रूपगुणविधिः। दध्यादिवत्**

---

त्वात्मिका तु विलक्षणविषयता विधेयतोच्यते। उपादेयतात्मिका वा। सेयमेव च यागादिगता विहितत्वव्यवहारनियामिकेति भावः॥ अथास्तु विहितत्वं साधने मास्तु कामं फले। उक्तनिषेधशास्त्रसङ्कोचनियामकं तु विहितत्वमेव नेतरदिति कथं प्रत्येतव्यम्। एवं प्रत्येतव्यम्। शास्त्रं हि हिंसा न कर्तव्येति सामान्यत आह। तदेव तु विशिष्य पश्वालम्भनं कर्तव्यमित्यपि। तत्र उभयप्रामाण्यात्सामान्यस्य विशेषस्थलातिरिक्तविषयकत्वं कल्प्यते। न ह्येवमभिचारस्यापि कर्तव्यत्वं शास्त्रं किञ्चित्प्रमापयति॥ तदेतन्मनसि निधायोक्तम् **इति सिद्धान्तादिति**॥

अथ यौगिकमाह। **एवमुद्भिदेति**॥ यद्यपि ज्योतिष्टोमप्रकरण-पठितेऽस्मिन् वाक्ये पशुफलकयागान्तरोपस्थितिर्न सम्भवति। प्रकृतस्य च ज्योतिष्टोमस्य स्वर्गफलकत्वमेव श्रुतम्। तथाऽपि **'सर्वेभ्यो ज्योतिष्टोम'** इति संयोगान्तरेण ज्योतिष्टोमस्य सर्वफलार्थत्वबोधनात् पशुफलकज्योतिष्टोमोऽपि प्राप्त इति तदुद्देशेन गुणविधिस्सम्भवत्येव इत्याशयेनोक्तम् **यथाकथञ्चित्प्राप्तेति**॥ अथवा **यथाकथञ्चिदिति** गुणविधावित्यत्रान्वेति। तदात्वेच यद्यप्युत्पत्तिशिष्टसोमावरुद्धे प्रकृत-ज्योतिष्टोमे गुणविधानं न सम्भवतीति भाति तथाऽपि पशुफलकप्रयोग-मात्रविषयत्वादेतद्गुणस्य तदन्यविषयकत्वं सोमस्येति निर्णीयत इति

उद्भिन्नामकस्य गुणस्याप्रसिद्धत्वात्। यागे तूद्भिद्यते फलमनेनेति योगवशेन वृत्तिसम्भवात् यागनामत्वम् । ननु उद्भिद्यते भूमिरनेनेति योगवशेन खनित्रादावप्युद्भित्पदप्रयोगसम्भवात् खनित्रादिगुणविधिः किन्न स्यादिति चेन्न। एतादृशस्थले गुणविधिः क्वापि वक्तुं न शक्यते। विरुद्धत्रिकद्वयसमावेशाख्य-दोषप्रसङ्गात् । तथाहि - 'उद्भिदा यजेत पशुकाम' इत्यत्र मानान्तरेणाप्राप्तस्य यागस्यानुवादासम्भवात् पशुकर्मक-भावनायां करणत्वेन यागो विधेयः-यागेन पशून् भावयेदिति। ततश्च यागस्य विधेयत्वम्, फलं प्रति शेषतया प्रतीयमानत्वात् गुणत्वम्, शेषतया अङ्गतयेत्यर्थः, फलसिद्ध्यर्थं पुंसाऽनुष्ठीय-मानत्वादुपादेयत्वमिति विधेयत्वगुणत्वोपादेयत्वात्मकमेकं त्रिकं यागेऽस्ति । तथा यागोद्देशेनोद्भिद्गुणविधौ विधित्सित-गुणापेक्षया यागस्य प्राधान्यम्, उद्देश्यत्वम्, अनुवाद्यत्वञ्चेति द्वितीयं त्रिकम् । तदिदं त्रिकद्वयं परस्परविरुद्धमेकस्मिन् यागे

---

एतदुक्तेरभिप्रायो वर्णनीयः ॥ **अप्रसिद्धत्वादिति** ॥ अनेनास्य पदस्य रूढत्वशङ्कोत्सारिता॥ यौगिकत्वमाह। **यागेत्विति**॥ ननु विधेरधिकतरा-र्थवत्त्वाय योगेनैवार्थान्तरवाचकत्वमङ्गीकृत्य गुणविधानमेवात्र प्रतिपत्तव्य-मिति शङ्कते। **नन्विति**॥ ननु उक्तप्रकारेण फलभावनायां धात्वर्थस्य यागस्य करणत्वेनान्वितत्वात् तत्र पुनर्गुणस्यान्वयोपपत्त्यै 'सोमेने'त्यादाविव उद्भिदेत्यत्र मत्वर्थलक्षणाऽङ्गी-क्रियते न वा ? न द्वितीय इत्याह । **एतादृशस्थल इति**। धात्वर्थस्यापि यत्र विधेयत्वं तत्रेत्यर्थः ॥ प्रथमचतुर्थे

प्रसज्येत । अतो न गुणविधिः । न च 'सोमेन यजेते' त्यत्र विरुद्धत्रिकादिकं विनैव सोमशब्दस्य सोमवति यागे लक्षणामङ्गीकृत्य सोमवता यागेनेष्टं भावयेदिति सोमविशिष्टयागविधानात् यथा सोमरूपगुणविधिः, तद्वदुद्भित्पदस्यापि मत्वर्थलक्षणया अत्रोद्भिद्गुणविशिष्टयागविधिः स्यादेवेति वाच्यम् । सोमादौ गत्यन्तराभावान्मत्वर्थलक्षणया विशिष्टविध्यङ्गीकारात् । उद्भिदादौ तु नामत्वेन गतिसम्भवाद्विशिष्टविध्यङ्गीकारायोगात् । तस्माद्योगवशादुद्भिदादीनां नामत्वम् ।

तथा 'चित्रया यजेत पशुकाम' इत्यत्र चित्रापदं प्राजापत्यनामधेयम् । 'दधिमधुघृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्य'मित्यत्र 'तत्संसृष्टं प्राजापत्य'मिति सामानाधिकरण्यात् यो दध्यादिद्रव्यषट्कस्य प्रजापतिदेवता-

---

'**नामधेये गुणश्रुते**'रित्यधिकरणे सर्वमिदं स्थितम् ।। अस्तु तर्हि मत्वर्थलक्षणेत्याद्यः पक्ष इत्याशङ्क्य समाधत्ते **नचेत्यादिना अयोगादित्यन्तेन** । **गत्यन्तराभावादिति** ।। सोमशब्दस्य लताविशेषे रूढत्वेन यागे योगकल्पनास्यासम्भवादिति भावः ।। न च रूढिर्वा त्यज्यतां मत्वर्थलक्षणा वा आश्रीयतामिति न किञ्चिद्विनिगमकमिति वाच्यम् । रूढित्यागे रूढ्यर्थस्यात्यन्ततिरस्कारापत्तेरिति ।।

अथ वाक्यभेदात् नामधेयत्वमाह । **तथेति** ।। **प्राजापत्येति** ।। प्रजापतिदेवताकयागविशेषेत्यर्थः ।। तादृशयागविशेषोत्पत्तिमाह । **दधीति** ।। अत्र कर्म एकमनेकं वेति नेह तन्यते ।। **प्राजापत्यमितीति** ।। एषां त्रयाणां

**सम्बन्धः श्रुतः तेनानुमितो यागो विधीयते। विहितस्य यागस्य फलाकाङ्क्षायां 'चित्रया यजेते'ति वाक्यं फलसम्बन्ध-विधायकम्। तत्र फलार्थत्वेन पुनर्विधिरिति। तस्य प्राजापत्य-यागस्य दध्यादिविचित्रद्रव्यकत्वात् चित्रापदं नामधेयम्। न तु 'अग्नीषोमीयं पशुमालभेते'ति वाक्यप्राप्तं पशुयागं यजेतेत्यनूद्य चित्रात्वस्त्रीत्वरूपगुणद्वयविधानम्। मानान्तरप्राप्तं कर्मोद्दिश्य तत्रानेकगुणविधाने वाक्यभेदप्रसङ्गात्। तदुक्तं 'प्राप्ते कर्मणि**

---

पदानामिति शेषः ॥ **सामानाधिकरण्यादिति** ॥ अत्र पञ्चम्यर्थस्य प्रयोज्यस्योत्तरत्र 'श्रुत' इति पदार्थेऽन्वयः ॥ **दध्यादीति** ॥ प्रक्रान्तसर्व-परामर्शितच्छब्दलभ्यमिदम् ॥ **श्रुतइति** ॥ अवगत इत्यर्थः । **'नपुंसकमनपुंसकेन एकवच्चास्यान्यतरस्या'**मिति स्मृत्या विधिवाक्येऽस्मिन् तदादेर्नपुंसकत्वैकवचनान्तत्वे ॥ प्रकृतचित्रावाक्ये यजिना प्राजापत्योपस्थितिमुपपादयति । **विहितस्येति** ॥ ननु कथं वाक्यान्तरविहितस्य यागस्य चित्रावाक्ये पुनर्विधानं सम्भवति येन कारणत्वेन भावनान्वयशालिनस्तस्य चित्रापदं नामधेयं स्यादिति चेदाह ॥ **फलार्थत्वेनेति** ॥ तथा च तत्रोत्पत्तिः, अत्र तु विनियोगः करणत्वेनान्वयस्तु उभयत्र समान इति भावः ॥ एवमङ्गीकारे निदानभूतं वाक्यभेदं प्रदर्शयन्नाह । **नन्विति** ॥ स्त्रीत्वस्य प्राणिगतलिङ्गत्वेन सामर्थ्यात् पशुयागस्यात्रोद्देश्य-त्वाशङ्केति ध्येयम् ॥ **तत्रेति सम्पातायातम्** ॥ **वाक्यभेदेति** ॥ विधिस्तावदेकदा एकमेवार्थं विधत्त इति स्वभावोऽयं तस्य। तत्रानेके गुणा यद्युपात्तास्तेषु यं कमपि विधाय विरते श्रूयमाणे विधौ गुणान्तरविधानाय पुनरयं विधिरावर्तयितव्यो भवति । केवलप्रत्ययप्रयोगस्यासाधुत्वात्

नानेको विधातुं शक्यते गुणः' इति। मानान्तराप्राप्तकर्मत्वे तु एकदैव अष्टाकपालपुरोडाशामावास्यापौर्णमास्याद्यनेकगुण-विशिष्टो द्रव्यदेवतासम्बन्धेनानुमितो यागो द्रव्यदेवता-सम्बन्धेनानुमितो यागो विधीयते इति सिद्धान्तात्। तदुक्तम् 'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इति।

**अथ यथा 'पशुना यजेते'त्यत्र मानान्तरप्राप्तं यागमुद्दिश्य तदङ्गतया पशुनेत्येकपदोपात्तानां पशुद्रव्यतद्गतलिङ्गसंख्या-रूपाणां त्रयाणां वाक्यभेदं विनैव विधिरङ्गीकृतः, तद्वदत्रापि एकपदोपात्तचित्रात्वस्त्रीत्वविशेषितपशुद्रव्यकारकस्य**

---

प्रकृतिरपि। उद्देश्यविधेयसमर्पकं पदमपीति समग्रं वाक्यान्तरं निष्पद्यत इति वाक्यभेदप्रक्रिया द्रष्टव्या॥ कर्मणीति॥ इदमविवक्षितम्॥ 'प्राप्ते कर्मणी'त्येतत्सार्थकयति। मानान्तरेति॥ धात्वर्थस्यापि विधेयत्वे सर्व-विशेषणविशिष्टस्य तस्य विशिष्टरूपेणैक्यात् न श्रूयमाणविधेरनेकविषय-त्वमिति ग्रन्थान्तरेष्वनुसन्धेयमित्याशयवानाह। इति सिद्धान्तादिति॥

प्रकृतेऽपि विधेयानां विशिष्टवेषेणैक्यं दृष्टान्तप्रदर्शनपुरस्सरं सम्पादयन् पूर्वपक्षयति। **अथेति**॥ **अत्रेदं बोध्यम्। 'यदग्नीषोमीयं पशुमालभत'** इति वाक्येन पशुद्रव्यविशिष्टयागस्योत्पत्तिरिति भाष्यकार-प्रभृतिभिस्सर्वैरभिधानात् न मानान्तरेण यागप्राप्तिर्यत्र पशुनायजेतेति वाक्येन पशुर्विधीयते॥ परन्तु '**अग्नीषोमौ यजति**' 'पशुना यजेतेति' इति वाक्यद्वयसद्भावं कृत्वा शाखान्तरानुसारेणवा चिन्त्यत इति॥ वैशिष्ट्यसम्भवं द्योतयितुमेकपदोपात्तानामिति। भिन्नपदोपादाने हि

**विधानान्न वाक्यभेदः । अत एव तत्र विधेयस्य पशोरुपादेयत्वात् तद्गतमेकत्वं यज्ञाङ्गतया विवक्षितमित्येकेनैव पशुना यष्टव्यम् । 'ग्रहं सम्मार्ष्टी'त्यत्र ग्रहमिति द्वितीयया ग्रहस्य ईप्सिततमत्वे-नोद्देश्यत्वात् प्रयोजनवत्त्वाच्च प्राधान्यं गम्यते । सम्मार्गस्तु ग्रहं प्रति गुणभूतः । 'प्रतिप्रधानं गुण आवर्तनीयः' इति न्यायात् यावन्तो ग्रहास्तेषां सर्वेषां सम्मार्ग इति निश्चये सति कति ग्रहाः**

---

प्रत्येकमेव भावनान्वयात् न वैशिष्ट्यसम्पादनं शक्यम् ॥ ननु न तत्र सङ्ख्याऽपि विधिविषयः । एकवचनस्य साधुत्वार्थत्वात् । लिङ्गं तु अन्यतोऽपि प्राप्स्यतीति शुद्धस्य पशोरेव तत्र विधेयत्वेन तदुदाहरणा-सङ्गतिरित्याशङ्क्य सङ्ख्याविवक्षाबीजं प्रदर्शयति । **अत एवेति** ॥ अस्यैव विवरणं **तद्गतमेकत्वं यज्ञाङ्गतया विवक्षितमितीति** ॥ इति हेतोरित्यर्थः ॥ विधेयस्य पशोरुपादेयत्वादिति विवक्षाबीजमुक्तम् ॥ विवक्षाफलन्त्वेके-नैवेत्यादि ॥ कुत्र तर्हि तदविवक्षा ? तदेतत् स्थलविशेषमुदाहृत्य प्रतिपादयति ॥ **ग्रहमित्यादिना** ॥ **सिद्धान्तप्रवादइति** ॥ सिद्धान्तरूपः प्रवाद इत्यर्थः ॥ अथवा सिद्धान्ते तत्र वर्तमानः सिद्धान्तसम्बन्धी वा प्रवादः अर्थात् सिद्धान्तिनां भूयो वाद इत्यर्थः ॥ ननु उद्देश्यगतत्वेऽविवक्षितत्वम् उपादेयगतत्वेनेति किमिदमाज्ञामात्रेण व्यवतिष्ठते । न चेत् विशेषो वक्तव्य इति व्युत्पित्सुः परिपृच्छति । **कथमिति** ॥ प्रतिप्रधानं गुणावृत्तिरिति वक्ष्यमाणन्यायप्रवृत्तये ग्रहाणां सम्मार्गापेक्षया प्राधान्यं साधयति । **ग्रहमिति** ॥ **ईप्सिततमत्वेन** ईप्सिततमत्वावगमेन । **उद्देश्यत्वात्प्रयोजनवत्त्वाच्चेति** ॥

सम्मार्जनीया इति बुभुत्साया अभावादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम्। यद्युच्येत नेदमुद्देश्यगतं किन्तु स्वयं विधेयं, ग्रहं सम्मृज्यात् तच्चैकमिति, तथासति विधेयभेदाद्वाक्य भेदः स्यात्। तथा बुभुत्साया अभावात् विधानायोगाच्चोद्देश्यगता संख्या न विवक्षिता। उद्देश्यगतमपि विशेषणं किञ्चिद्विवक्षितम् यस्य विशेषणस्य विवक्षां विना उद्देश्यप्रतीतिर्न पर्यवस्यति। यथा तत्रैव ग्रहत्वं विवक्षितम्। तद्विवक्षां विना उद्देश्यस्वरूपस्य ज्ञातुमशक्यत्वात्। तेन ग्रहजातीय-

---

सक्तुन्यायवैषम्यस्फोरणायेदम्॥ **अभावादिति**॥ तथाचोद्देश्यगता सङ्ख्या न विवक्षितेत्यत्र उद्देश्यस्य परिच्छेदकसङ्ख्यापेक्षारूपाकाङ्क्षाविरहो बीजमिति सम्पिण्डितार्थः॥ ननु श्रवणबलादाकाङ्क्षोत्थापयिष्यते। न च तावताऽपि सङ्ख्याया अवैधत्वप्रसङ्गः। तत्रापि विधेर्व्यापाराभ्युपगमादिति शङ्कते। **यद्युद्देश्यगतमिति**॥ उद्देश्यं गच्छति व्यावर्तकत्वेन यत्तदुद्देश्यगतम्। उद्देश्येन सह व्यावर्तकत्वेन सम्बध्यमानमित्यर्थः। उद्देश्यविशेषणमिति यावत्॥ समाधत्ते। **तथा सतीति**॥ **स्यादिति**॥ **'प्राप्तेकर्मणी'ति** न्यायेनेति भावः॥ अत्र 'कर्मणी'त्यविवक्षितमित्युक्तम्॥ उक्तहेतुद्वयं कीर्तयन्नेवोद्देश्यगतसङ्ख्याविवक्षाविरहप्रकरणमुपसंहरति। **तथेति**॥ अत्र ग्रहैकत्वाधिकरणे उद्देश्यगतसंख्याविवक्षाविरहस्य सिद्धान्तितत्वेऽपि सामान्यतः तदधिकरणसिद्धो न्यायः **'उद्देश्यविशेषणमविवक्षित'**मिति। अयं क्वचिदपोद्यते। प्रसङ्गात्तन्निरूपयितुमाह। **उद्देश्येति**॥ तथाचोद्देश्यतायां यदवच्छेदकं तद्भिन्नमुद्देश्यविशेषणमविवक्षितमिति न्यायाकार फलितम्॥

**साधनकसोमयागापूर्वार्थत्वाच्चमसेषु न सम्मार्ग इति स्थितम् । 'पशुना यजेते'त्यत्र यागं प्रति पशुर्विधेयत्वाद्गुणभूतः । प्रतिगुणं प्रधानावृत्तिर्नास्तीति कियता पशुना यागः कर्तव्य इत्याकाङ्क्षायामेकवचनेन प्रतीयमानं विधेयगतमेकत्वं विवक्षितम् । बुभुत्सितत्वात् । किञ्च लिङ्गसङ्ख्याविशेषितस्य पशुद्रव्यरूपकारकस्य एकपदोपात्तस्य विधेयत्वाद्विधेयपशुद्वारा तद्गतलिङ्गसङ्ख्ययोरपि क्रियाङ्गत्वादेकत्वं विवक्षितम् । अथवा तृतीया-**

---

अत्र तद्भिन्नान्तनिवेशफलमाह । **तेनेति** ।। ग्रहत्वमविवक्षित्वा प्रकृतयागापूर्वसाधनत्वस्यैव सम्मार्गविध्युद्देश्यतावच्छेदकत्वे ग्राहणामिव चमसानामपि तादृशापूर्वसाधनत्वेन उद्देश्यतावच्छेदकावच्छिन्नेषु तेष्वपि सम्मार्गः प्रसज्येतेति भावः ।। उक्तयोरविवक्षानियामकयोः क्रमेण 'पशुना यजेते'त्यत्र व्यतिरेकं दर्शयति । **पशुनेति** ।। परिच्छेदकाकाङ्क्षाविरहविरहं तादृशाकाङ्क्षासत्वं प्रदर्श्य विधानासम्भवविरहं तत्सम्भवं प्रदर्शयति । **किञ्चेति** ।। **लिङ्गसंख्याविशेषितस्येति** ।। तथाचानेकेषामपि विधेयानां विशिष्टरूपेणैक्यमिति भावः ।। **एकपदोपात्तस्येति** ।। तथा च विधेयानां मध्ये विशेषणयोर्लिङ्गसंख्ययोर्विशेष्यस्य पशोश्चैकपदोपात्तत्वाद्वैशिष्ट्यं सम्भवति । नह्येवं '**ग्रहं सम्मार्ष्टि**'इत्यत्रापि शक्यं वक्तुम् । परस्परानन्वितप्रकृतिप्रत्ययोपात्तत्वात्सम्मार्गैकत्वयोरिति हृदयम् ।। **पशुद्वारेति** ।। प्रत्ययार्थयोरपि लिङ्गसंख्ययोरनुभवबलेन प्रातिपदिकार्थान्वयस्य आवश्यकत्वात्साक्षाद्भावनासम्बन्धो न सम्भवतीत्यभिप्रायेणेदम् ।। एवमङ्गीकारे प्रथमं प्रत्ययेन लिङ्गसंख्याभिधानम्, पश्चाच्च

विभक्त्यभिहितयोः लिङ्गसङ्ख्ययोर्विभक्त्यभिहितया करण-कारकशक्त्या आत्मसात्कृतयोः प्रातिपदिकार्थपशुद्रव्येण सम्बन्धमनादृत्य तद्वदेव साक्षात् क्रियाङ्गत्वेन विधाने सति पश्चादरुणैकहायनीन्यायेन परस्परमन्वयः । यागाङ्गत्वेन विहितो यः पशुः स एकः पुमांश्चेति । यथा 'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाती'त्यत्र कारकाणां क्रियान्वय-नियमात् करणविभक्तिभिः आरुण्यपिङ्गाक्षीत्वादीनां चतुर्णां परस्परमनन्वितानामेव सोमक्रयणाङ्गत्वेन अन्वये सति आरुण्यादेर्गुणस्यामूर्तस्य स्वतः क्रियासाधनत्वायोगात् क्रिया-साधनैकहायनीगोपरिच्छेदकत्वेन पश्चात् परस्परं पार्ष्ठिकान्वयः । या एकहायनी गौः सा पिङ्गाक्षी अरुणेति, तद्वत् ।

---

तदन्वितप्रातिपदिकार्थोपस्थित्यनन्तरं करणत्वाभिधानमिति विरम्य व्यापारापत्तिः । अतोऽन्यथैव भावनान्वयं लिङ्गसंख्ययोरुपपादयति । **अथवेति** ॥ शक्त्यात्मसात्कृतयोरिति ॥ पशुवत् तृतीयार्थकरणत्वे आधेयतासम्बन्धेनान्वितयोरित्यर्थः ॥ अनयो'र्विधानंसती'त्युत्तरत्रान्वयः ॥ **तद्वदेव** पशुवदेव ॥ परस्परसमाचारानभिज्ञानामेव पशुलिङ्गसंख्यानां प्रथमं भावनान्वये पश्चात्परस्परमन्वय इति विषयोऽयमनानुभाविक इति मास्म शङ्काभूत् इत्येवमर्थमुक्तम् **अरुणैकहायनीन्यायेनेति** ॥ तथाचैवमेवानुभवः पण्डितानां नान्यादृश इति भावः ॥ पश्चात्तनान्वयबोधमभिलपति । **यागेति** ॥ **नियमादिति** ॥ कारकत्वस्य क्रियान्वयित्वात्मकत्वेन तदनन्वये स्वभाव-भङ्गप्रसङ्ग इति भावः ॥ एतावता निरूपितं कथमिति प्रश्नसमाधानमुपसंहरति ।

**तदेवमुद्देश्यगतं विशेषणमविवक्षितं, उपादेयगतं विवक्षितमिति स्थितम् । एवञ्च चित्रापदेन चित्रत्वस्त्रीत्वोभयविशेषित-पशुकारकस्य यजेतेति पदानूदिते अग्नीषोमीयपशुयागे विधातुं शक्यत्वात् कथं नामत्वमिति चेन्न ।**

**तथासति प्रकृतस्य प्राजापत्ययागस्य फलसम्बन्धाकाङ्क्षस्य हानमप्रकृतस्याग्नीषोमीययागस्य कल्पना च स्यात् । तद्द्वयमयुक्तम् । तस्माच्चित्रापदं कर्मनामधेयम् । एवं तत्प्रख्या-**

---

**तदेवमिति** ॥ पूर्वपक्षमुपसंहरति । **एवञ्चेति** ॥ दृष्टान्तसामञ्जस्योपपत्तौ चेत्यर्थः ॥

**अयुक्तमिति** ॥ अस्मदिच्छानुसारेण कल्पने वेदार्थः पुरुषसम्बन्धेनाप्रामाणिकः स्यादिति भावः ॥ इदमुपलक्षणम् । विशेष्यस्य पशोः **'यदग्नीषोमीयं पशुमालभत'** इत्युत्पत्तिवाक्यादेव प्राप्तेः मन्त्रवर्णात् पुंस्त्वप्रमितेः स्त्रीत्वविधानायोगाच्चात्र विशिष्टविधानं न सम्भवतीत्यपि बोध्यम् ॥ केचिदाहुः पञ्चममपि नामधेयप्रमाणमस्ति वाक्यशेषात्मकम् । यथा **'वैश्वदेवेन यजेते'**त्यत्र वैश्वदेवशब्दः चातुर्मास्यस्थविश्वदेवतद्भिन्न-देवताकयागाष्टकस्य नामधेयं **'यद्विश्वे देवास्समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व'** मिति वाक्यशेषादिति । तदेतन्न युक्तम् । **देवताधिकरणन्यायेन** मीमांसकमते देवतानां विग्रहहविरादानयुगपत्कर्मसन्निधिप्रीतिफल-प्रदानानामळीकत्वेनास्य वाक्यशेषस्य स्तुतिमात्रपरत्वात् विश्वदेव-कर्तुकत्वरूपप्रवृत्तिनिमित्तस्य तत्र बाधितत्वात् । अतस्तत्र देवोक्तरीत्या उत्पत्तिशिष्टदेवतावरोधसहकृततत्प्रख्यन्याय एव नामधेयत्वे प्रमाणमिति

**दीनामन्यतमेन सर्वत्र कर्मनामत्वमूह्यम् । इत्थं विधिवाक्यस्य प्रामाण्यं विचारितम् ॥**

**अर्थवादानां तु स्वार्थपरत्वे प्रयोजनाभावादध्ययन-विधिवशेन फलवदर्थज्ञानार्थत्वस्य आवश्यकत्वाद्विधेयगत-प्राशस्त्यप्रतिपादनद्वारा विधिवाक्यैकवाक्यतया प्रामाण्य् । स**

---

वाच्यमित्याशयेनाह । **एवमिति** ॥

द्विविधे ब्राह्मणे विध्यात्मकैकविधानिरूपणानन्तरम् अर्थवादा-त्मानमपरां विधां निरूपयति ॥ **अर्थवादानान्त्विति** ॥ अस्य 'प्रामाण्य' मित्युत्तरत्रान्वयः ॥ तुकारद्योतितं विधिप्रामाण्यापेक्षया एतत्प्रामाण्ये वैलक्षण्यं स्फुटयति ॥ **विधिवाक्यैकवाक्यतयेति** ॥ ननु तदेकवाक्यत्वं नाम तदर्थान्वितस्वार्थाभिधायकत्वम् । नचैतत् '**वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति**' इत्याद्यर्थवादेषु सम्भवति । एतद्वाक्यार्थस्य '**वायव्यं श्वेतमालभेत भूतिकाम**' इति वाक्यार्थानन्वितत्वादिति शङ्कां निवर्तयितुमाह । **विधेयगतप्राशस्त्यप्रतिपादनद्वारेति** ॥ यद्यप्यमीषामर्थवादानां विधेयगतप्राशस्त्ये शक्तिर्न भवति तथाऽपि लक्षणया तत्प्रतिपादने न किञ्चिद्बाधकमिति भावः । ननु कथं शक्यार्थं त्यक्त्वाऽर्थान्तरे लक्षणा-स्वीकारः? तत्राह । **स्वार्थे प्रयोजनाभावादिति** ॥ न खलु भोः शब्द-सामान्यं प्रयोजनवदर्थपरम् । शतशो व्यभिचारदर्शनात् । सत्यम् । लोके एवम् । वेदशब्देतु अयं नियमोऽस्त्येव । कथमिदमवगम्यते ? तदाह । **अध्ययनविधिवशेन प्रयोजनवदर्थज्ञानार्थत्वस्यावगमादिति** ॥

**चतुर्विधः = निन्दा- प्रशंसा- परकृति- पुराकल्पभेदात् । तत्र निन्दार्थवादो यथा 'असत्रं वा एतद् यदच्छन्दोम' मित्यादिः, 'अश्रुजं हि रजतं यो बर्हिषि ददाति पुरास्य सम्वत्सराद् गृहे रुदन्ती' त्यादिश्च । प्रशंसार्थवादो यथा 'शोभतेऽस्य मुखं य एवं वेदे' त्यादिः 'वायुर्वै क्षेपिष्ठा देवते' त्येवमादिश्च । परेणेदं महता पुरुषेण कर्म कृतमिति प्रतिपादकोऽर्थवादः परकृतिः । यथा 'अग्निर्वा अकामयते' त्यादिः । परप्रवक्तृकार्थप्रतिपादको**

---

स्वाध्यायस्य तज्जन्यार्थज्ञानस्य वा इतरानपेक्षं द्वितीयोपात्तकर्मत्वानुभवे योग्यताविरहात् अर्थे प्रयोजनवत्वपर्यन्तावगम आवश्यक इति प्रागेव प्रतिपादितम् ॥ विधिरसौ लिखितपाठादिना सह पक्षप्राप्ताध्ययननियमना-न्नियमविधिः । नियमापूर्वस्य क्रत्वपूर्वेषु उपयोगः । अध्ययनधर्माणाञ्च नियमापूर्व एवोपयोग इति प्राञ्चः । वस्तुतस्तु अयमाक्षेपात्प्राक् प्रवृत्तत्वेना-पूर्वविधिरेव । एतद्विधिसिद्धज्ञानवत एवाधिकारिणो लाभात् क्रतुविधिभि-रुपायान्तरानाक्षेपेण तद्व्यावृत्त्या नियमविधिरिति व्यपदिश्यते । नियमापूर्वं तु नैव कल्प्यते । अध्ययनधर्माणाञ्च निर्विघ्नपरिसमाप्त्यर्थत्वेनोपपत्तिरिति तु नव्याः ॥ **अच्छन्दोममिति** ॥ 'छन्दोमशब्देन चतुर्विंशः चतुश्चत्वारिंशः अष्टाचत्वारिंश इत्येते त्रयः स्तोमा उच्यन्ते । अक्षरसंख्यासाम्येन गायत्रीत्रिष्टुब्जगतीछन्दोभिर्मीयमानत्वात्' ॥ **प्रशंसेति** ॥ न च सर्वोऽर्थवादः प्रशंसारूप इति कथं तत्वं विभाजकधर्म इति वाच्यम् । लक्षणया स्तुतिपरत्वस्य सर्वसाधारण्येऽपि यथाश्रुते निन्दाया इव प्रशंसाया यत्र साक्षात्प्रतीतिः तथात्वस्य विभाजकत्वादिति ॥ **परप्रवक्त्रिति** ॥ परः

अर्थवादः पुराकल्पः । यथा- 'तमशपद् धिया धिया त्वा

प्रवक्ता यस्य तथाभूतस्यार्थस्य प्रतिपादक इत्यर्थः ॥ तथा च प्रतिपाद्यमान-स्यार्थस्यान्यप्रोक्तत्वेनाभिधाने पुराकल्पः । अन्यथा कथने तु परकृतिरिति पर्यवसितम् ॥ **तमिति** ॥ अत्र शपतेरग्निः कर्ता । तेन धिया धिया मत्स्यह-ननस्याग्निरूपपरप्रवक्तृकत्वाविघात इति ध्येयम् ॥ अत्र तु मूलं मृग्यम् । अभियुक्ततरेण हि **वार्तिककृता 'एककर्तृकमुपाख्यानं परकृतिः । अनेककर्तृकन्तु पुराकल्प'** इत्याभिहितम् ॥ इदमेव च भङ्गचन्तरेणोक्तं **न्यायपरिशुद्धौ 'एकानुबन्धी कथाविशेषः परकृतिः । अनेकानुबन्धी तु पुराकल्प'** इति ॥ एतदनुरोधेन **प्रकाशकृताऽपि 'इति ह स्माह वट्कुर्वाष्णिर्माषानेव मह्यं पचते'**ति परकृतिरर्थवादः । तावब्रूताम-ग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यज'न्निति **'उल्मुकैर्हस्म पूर्वे देवास्समाजग्मुस्तानसुरा रक्षांसि निर्जघ्नु'**रिति च पुराकल्पोऽर्थवाद इत्युक्तम् ॥ **न्यायभाष्ये** तु 'अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः । 'हुत्वा वपामेवाग्रेऽभिघारयन्ति । अथ पृषदाज्यम् तदुह [१]चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति । अग्नेः प्राणाः पृषदाज्यं स्तोममित्येव-मभिदधती'त्येवमादि ॥ ऐतिह्यसमाचरितो विधिः पुराकल्प इति । **'तस्माद्वा एतेन ब्राह्मणा हविः पवमानं सामस्तोममस्तौषुः योने यज्ञं प्रतन-वामह'** इत्येवमादीत्यभिहितम् ॥ **'बबरः प्रावाहणिरकामयते'**ति परकृतिः । **'इदंवाऽग्रे किञ्चनासी'** दिति पुराकल्प इति तु **भाट्टसारकृतः** ॥ अनेन पुरापर्यायघटितत्वे पुराकल्प इति तदाशय इति भाति । **'पुरा ब्राह्मणा**

---

१. चरकशाखोक्तकर्मानुष्ठातार इति शतपथभाष्ये स्थितम् ।

वध्यासु' रित्यादिः । तत्र निन्दार्थवादस्य विधेयान्यनिन्दाद्वारा विधेयप्राशस्त्यपरत्वम् । 'अश्रुज' मित्यादिरजतनिन्दाद्वारा विधेयभूतरजतदाननिषेधप्राशस्त्यपरत्वे विरोधाभावात् । इतरेषां त्रयाणां साक्षात् प्राशस्त्यपरत्वमेव । 'वायुर्वा' इत्यर्थवादस्य वायुः क्षिप्रगामित्वादतीव प्रशस्तदेवता । अतस्तद्दैवत्यं कर्म प्रशस्तमिति विधेयदेवतागतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वम् । 'अग्निर्वा अकामयते' त्यस्य अग्निदैवत्यो यागः पूर्वकाले अग्निना कृतत्वात् प्रशस्तः, अत आधिक्यादिक्यात् इदानीमप्यन्यैर्यजमानैरवश्यं कर्तव्य इति विधेयकर्मगतप्राशस्त्यप्रतिपादनद्वारा विध्येकवाक्यत्वम् । एवमन्यत्राप्यूह्यम् ।

---

**अभैषु**'रिति ऋग्वेदभाष्योपक्रमस्थमपि पुराकल्पोदाहरणमेवमाशयं प्रतीयते । न्यायमालायां तु '**यज्ञेन यज्ञमयजन्त देवा**' इति **न्यायसुधो**दाहृतं वाक्यमेव पुराकल्पोदाहरणतयोपात्तमिति सुबहुनामात्रविमर्शनीयम् ॥ एषां चतुर्णामर्थवादभेदानां विधिवाक्यैकवाक्यतया प्रामाण्यनिदानभूतं विधेयगतप्राशस्त्यप्रतिपादनमुपपादयति । **तत्रेति** ॥ **विधेयेति** ॥ '**तस्माद्बर्हिषि रजतं न देय**'मिति वाक्ये विधेयभूतो यो रजतदाननिषेधस्तत्प्राशस्त्यपरत्व इत्यर्थः । **विरोधाभावादिति** ॥ अनेन निन्दया प्राशस्त्यप्रतीतिरिति विरुद्धार्थकथनमिदमिति शङ्कां परिहर्तुमेतद्ग्रन्थारम्भ इति सूच्यते । साक्षादिति ॥ विधेयेतरगतनिन्दामद्वारीकृत्येत्यर्थः ॥ **वायुर्वेति** ॥ '**शोभतेऽस्य मुखं य एवं वेद**' इत्यपि गर्गत्रिरात्रसंज्ञककर्मविशेषविधायकवाक्यानन्तरं श्रुतं तादृशकर्मविशेषप्रशंसापरम् । तस्य ज्ञानमेव

ईदृशफलकं किमुत तस्यानुष्ठानमिति प्रशंसेति बोध्यम् ॥ **अन्यत्रेति** ॥ 'तमशप'दिति पुराकल्पोदाहरणस्थल इत्यर्थः । **ऊह्यमिति** ॥ दर्शपूर्णमासप्रकरणे 'परिधीन्परिदधाती' ति परिधिविधिसन्निधौ 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्। ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त। सोऽग्निरबिभेत् इत्थंवावस्य[१] आर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवाः प्रैषमैच्छन् । तं मत्स्यः प्राब्रवीत् । तमशपत् [२]धिया धिया त्वा वध्यासुर्यो मा प्रावोच इति। तस्मान्मत्स्यं धिया धिया घ्नन्ति। शप्तो हि। तमन्वविन्दन्। तमब्रुवन् उप न आवर्तस्व हव्यन्नो वहेति। सोऽब्रवीत् वरं वृणै यदेव गृहीतस्याहुतस्य बहिः परिधिस्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति। तस्माद्यद्गृहीतस्याहुतस्य बहिः परिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाती'ति प्रकृतपुराकल्पोदाहरणवाक्य-घटितोऽर्थवादः श्रूयते । अस्य तावत्कृत्स्नस्य अग्निभ्रातृप्रीणनोपयुक्त-बहिर्देशावधित्वेन परिधिस्तावकत्वं स्फुटमवगम्यते। तत्र यद्यपि '**तमशपत् धिया धिया त्वा वध्यासु**'रिति प्रकृतपुराकल्पोदाहरणस्य न साक्षात् परिधिप्राशस्त्यप्रतिपादकत्वम् । तथाऽपि तद्घटितसमुदायद्वारा तस्य तथात्वमव्याहतमिति द्रष्टव्यमित्यभिप्रेत्य उक्तमूह्यमिति ॥ एवमर्थवादानां प्राशस्त्यप्रतिपादकत्वेन प्रामाण्यं निरूप्य इदानीं तेषां सन्देहनिर्णायक-त्वेनापि प्रामाण्यमस्तीत्याह। **क्वचिदिति** ॥ स्वसमभिव्याहृतविधिवाक्ये संशयो यत्र तादृशस्थलविशेष इत्यर्थः ॥ **कार्यान्तरमिति** ॥ प्राशस्त्य-प्रतिपादनरूपकार्यव्यतिरिक्तं सन्देहनिर्णायकत्वरूपं कार्यमित्यर्थः ॥

१. यो देवेभ्यो हव्यं वहति सः ।

२. यदा यदा धीर्भवति हन्तुं तदा तदेति ।

क्वचित् कार्यान्तरमप्यस्ति यथा 'अक्ताः शर्करा उपदधाती' ति विधौ 'अक्ता' इति पदेन द्रवद्रव्यसामान्यं प्रतीयते, तच्च द्रवद्रव्यं किमिति सन्देहे 'तेजो वै घृत' मित्यर्थवादात् घृतमिति निश्चीयत इति 'तेजो वै घृत' मित्यर्थवादस्य सन्दिग्धार्थनिर्णायकत्वेनापि प्रामाण्यम् ॥

मन्त्राणामपि अध्ययनविधिना कृत्स्नस्वाध्यायस्य सफलत्वावगमात् फलवदर्थज्ञानार्थत्वमेव। नत्वदृष्टार्थत्वम्। दृष्टे-

---

**अस्तीति** ॥ अर्थवादानामिति शेषः ॥ **प्रतीयत** इति ॥ उपस्थाप्यत इत्यर्थः ॥ अञ्जनसाधनत्वेनेति शेषः ॥ एतदुपस्थितौ तत्पदप्रयोज्यत्वं तत्पदस्य यत्किञ्चिद्द्रवद्रव्यकरणकलेपनरूपाञ्जनवाचकत्वेनेति ध्येयम् ॥ अत्र फलसमर्पणादिकमपि कार्यान्तरमस्तीत्यन्यत्र स्पष्टम् ॥

ब्राह्मणानन्तरम् अवसरप्राप्तं मन्त्रं निरूपयति । **मन्त्राणामिति** । **कृत्स्नेति** । अध्ययनविधिविहिताध्ययनरूपसंस्कारसंस्कार्यताव-च्छेदकीभूतस्वाध्यायत्वावच्छिन्नस्यैव फलवदर्थज्ञानोद्देशेनाक्षिप्तविधिना विधानादेतल्लाभः ॥ **सफलत्वेति** ॥ अन्यथा इष्टसाधनताज्ञानाभावेन **प्रवृत्त्यभावे** विधिशब्दशब्दितायाः प्रवर्तनायाः स्वभावहानिरिति भावः ॥ **अवगमादिति** ॥ एतदन्तेन मन्त्राभावेऽप्यनुष्ठानसम्भवात्क्वचिदपि तदुप-योगाभावेन न तत्प्रामाण्यमिति शङ्का व्युदस्ता ॥ तत्र दृष्टादृष्टभेदेन द्विविधे फले कतरत्प्रकृत इति विशिष्य जिज्ञासायां दृष्टमेव फलमितरव्यवच्छेद-पूर्वकमाह । **फलवदर्थज्ञानार्थत्वमेवेति** ॥ एवकारमेव विवृणोति । न **त्वदृष्टार्थत्वमिति** ॥ अत्र न्यायमाह । दृष्ट इति ॥ **अयमभिसन्धिः** - सर्वत्र

**सम्भवत्यदृष्टकल्पनाऽयोगात् । प्रयोगकाले कर्मज्ञानं विना कर्मानुष्ठानायोगात् कर्मौपयिकमर्थज्ञानं मन्त्रैः क्रियते। न च उपदेष्टृवचनादिनापि अर्थस्मरणसम्भवादनुष्ठानोपपत्तिरिति वाच्यम् । मन्त्रैरेवार्थं स्मृत्वाऽनुष्ठाने सति फलं भवति नान्यथेति**

---

तावच्छ्रुतार्थापत्तिरदृष्टकल्पने प्रमाणम् । न च सा दृष्टमादायैवोपपत्तौ सत्यां सम्भवति । विधिविषयत्वेनानुमितस्येष्टसाधनत्वस्य दृष्टमिष्टमादायोपपन्नत्वे अनुपपत्तिरेव नात्मानं लभत इति ॥ अत्र '**एवं मन्त्राणामपि विध्यपेक्षितप्रयोगकालीनानुष्ठेयार्थस्मरणार्थत्वम् । अध्ययनविधिना कृत्स्नस्वाध्यायस्य फलवदर्थज्ञानार्थत्वावगमा**' दिति क्वचित् उपलभ्यमानः पाठः श्रेयान् भाति ॥ ननु फलवदर्थप्रमापकत्वमविधीनां मन्त्राणां न घटते । सत्यम् । तत्स्मारकत्वं तु निराबाधम् । न च स्मृतिरनुपयुक्ता । अनुष्ठानकाले तस्या अवश्यापेक्षितत्वादित्याह । **प्रयोगेति** । **कर्मज्ञानम्** ॥ कर्मतदङ्गभूतयावदर्थस्मृतिम् ॥ **कर्मौपयिकं** कर्मानुष्ठानोपयुक्तम् ॥ अर्थज्ञानम् अर्थस्मृतिः ॥ **इदमत्र बोध्यम्** - मन्त्रस्त्रिविधः - ऋग्यजुस्सामेति । आद्यद्वयं प्रत्येकं द्विविधम् । जपतिचोदनाचोदिततद्भिन्नभेदात् । अत्र द्वितीयस्त्रेधा- करणभूतः क्रियमाणानुवादी अनुमन्त्रणार्थश्च । इमे त्रयः क्रमात्तत्तदर्थानुष्ठानप्राक्समपश्चात्कालिकाः । सामापि त्रिविधम् ऋगारूढं स्तोभारूढमुभयारूढमिति । एतेषु मन्त्रभेदेषु जपमन्त्राणामदृष्टार्थत्वमेव । तदर्थस्य प्रयोगासमवेतत्वात् । **सम्भवति हि दृष्टेऽदृष्टकल्पनमन्याय्यमिति** । करणमन्त्रादीनां त्रयाणां समवेतार्थस्मारकत्वेन दृष्टार्थत्वम् । सामस्वाद्यस्य दृष्टार्थत्वं स्फुटम् । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधान-

नियमाङ्गीकारात्, नियमेनादृष्टस्याङ्गीकारात्, तदभावे तज्जन्यादृष्टलोपे तन्मूलं फलं न सिध्यतीति कल्पनात् ।

नन्वेवं मन्त्राणां स्वस्वप्रकाश्येऽर्थे विनियोग इति फलितम् । विनियोगो नाम शेषत्वेनान्वयः । शेषत्वं नामाङ्गत्वम् । ततश्च 'इमामगृभ्णन् रशना' मिति मन्त्रस्य रशनाग्रहणसामर्थ्यम् अस्तीति रशनाग्रहणप्रकाशनसामर्थ्यरूपात् लिङ्गादेव रशनाग्रहणाङ्गत्वोपपत्तेः 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति वचनं किमर्थमिति चेन्न । परिसंख्यार्थत्वात् ।

---

रूपस्य हि स्तोत्रस्य सामरूपगानसाध्यत्वमावश्यकमिति । द्वितीयस्यतु अदृष्टार्थत्वम् । स्तोभस्य सामार्थत्वेन तत्र सामसाध्यस्य कस्यचित् दृष्टस्य विरहात् । अन्त्यस्यतु उभयार्थत्वमिति ।। **अङ्गीकारादिति** । प्रयोज्यत्वार्थकपञ्चम्यन्तद्वयं कल्पनादित्यत्रान्वेति ।। उक्तनियमं तज्जन्यादृष्टमप्यङ्गीकृत्यैव हि तथा कल्पयितुं शक्यमिति ।।

उक्तं दृष्टार्थत्वं मन्त्राणामाक्षिपति । **नन्विति** ।। **किमर्थमितीति** ।। तथा चैतद्वचनप्रवृत्तिबलाद्विज्ञायते न मन्त्राणां स्वस्वार्थप्रकाशनार्थत्वम् । तदात्वे हि अस्य मन्त्रस्यात्र विनियोग इति प्रमाणान्तरेणानिश्चयाद्वचनमर्थवद्भवतीत्याशयः ।। केवलमङ्गत्वबोधनं न वचन प्रवृत्तिप्रयोजनम्, येन वचनानर्थक्यं मन्त्राणां समवेतार्थस्मारकत्वे प्रसज्येत । अपि तु परिसंख्यादिकं तत्प्रयोजनम् । एवञ्च मन्त्राणां दृष्टार्थत्वं लिङ्गस्य विनियोजकत्वञ्चाङ्गीकृत्यापि वचनसाफल्यमव्याहतमित्यभिसन्धाय पक्षं परावर्तयति । **नेति** ।।

**चयनप्रकरणे अश्वरशनाग्रहणं गर्दभरशनाग्रहणञ्चेति द्वयमस्ति। तत्र लिङ्गादश्वरशनायां मन्त्रप्राप्तावुच्यमानायां लिङ्गविशेषाद्गर्द-भरनायामपि मन्त्रः प्राप्नुयात्। अतोऽश्वरशनायामेव मन्त्रः कार्यः न गर्दभरशनायामिति मन्त्रनिवृत्तिरूपपरिसंख्यार्थोऽयं विधिः॥**

**सा च परिसंख्या त्रिदोषा स्वार्थत्यागः परार्थस्वीकारः प्राप्तबाधश्चेति। तत्र 'अश्वाभिधानीमादत्त' इति वाक्यस्य अनेन मन्त्रेणाश्वरशनादानं कुर्यादिति स्वार्थः। स च त्यक्तः। गर्दभर-शनातो मन्त्रनिवृत्तिः परार्थः। स च स्वीकृतः गर्दभरशनायामपि लिङ्गात् प्राप्तस्य मन्त्रस्य अनेन बाधश्चेति त्रिदोष परिसंख्या**

---

परिसंख्या द्विविधा शाब्दी आर्थीचेति। आर्थ्यपि द्वेधा प्राप्ताप्राप्त परिसंख्याभेदात्। तत्र शाब्दी **'नानृतं वदे'** दिति। अत्र परिसंख्यानस्य नञ्शब्देनोपात्ततया शाब्दी परिसंख्या। यादृशपरिसंख्याशास्त्रप्रवृत्तेः पूर्वमेव तत्परिसंख्येयार्थप्रापकप्रमाणस्य प्रवृत्तिः सा प्राप्तपरिसंख्या। सैषा दोषत्रयशालिनीति विशेषः। तस्मात्तामेव कीर्तयन् दोषत्रयं न्युत्पादयति। **साचेति** ॥ अत्र इति शब्दार्थस्याभेदस्य **त्रिदोषेति** बहुव्रीहिघटकोत्तर पदार्थदोषेष्वन्वयः। 'सा द्विविधा नित्यानित्याचेती' त्यादाविव तथाऽन्वये बाधकाभावात्। यद्वा स्वार्थेत्यादि भिन्नं वाक्यम्। ते दोषा इति चाध्याहार्यम्॥ **तत्रेति** ॥ तादृशप्राप्तपरिसंख्यास्वन्यतमेत्यर्थः ॥ **त्यक्तइति** ॥ लिङ्गादेव प्राप्तत्वात् **'अप्राप्ते शास्त्रमर्थव'** दिति न्यायेन प्राप्तविधानस्य अयुक्तत्वाच्चेतिभावः। **स्वीकृत इति** ॥ लक्षणयेति शेषः ॥ ननु दोषाणां कथमङ्गीकार इत्यत्राह। **गत्यभावादिति** ॥ तथा च सकलवाक्यवैयर्थ्य-

**गत्यभावादङ्गीकृता। गत्यन्तरे सति सा न युक्ता।**

---

मपेक्ष्य वरमेवमङ्गीकारः। न च प्राप्तस्यैव पुनस्तत्र विधानमतिशयार्थमिति लक्षणाश्रयणे प्रमाणाभाव इति शङ्क्यम्। **'नास्तिशब्दस्यातिभार'** इति न्यायादिति॥ त्रैदोष्याङ्गीकरणस्य गत्यभावैकहेतुकत्वं व्यतिरेकेण द्रढयति। **गत्यन्तर इति**॥ अत्रोदाहरणं गृहमेधीयप्रकरणपठित आज्यभागविधिः। तस्य हिं प्रकृतगृहमेधीय यागगतं यदा अतिदेशिकाङ्गानपेक्षित्वरूपम् अपूर्वत्वं तत्फलकत्वे सम्भवति अतिदेशप्राप्ता-ज्यभागव्यतिरिक्तदार्शपूर्णमासिक अङ्गकलापपरिसंख्यापकत्वं त्रैदोष्यभिया नाङ्गीक्रियत इति॥ **इदमत्राभिधेयम्**-'इमामगृभ्ण' न्निति नेयं प्राप्तपरिसंख्या। दुर्बलस्य लिङ्गस्य श्रुतित्वेन प्रबलादस्माद्वाक्यात्पूर्वं प्रवृत्त्यसम्भवात्। तस्माद्वस्तुतः प्रमाणान्तरेणाश्वाभिधान्यामप्राप्तस्यैव मन्त्रस्य द्वितीयाश्रुत्या तत्र विधानात्, तथाऽपि प्रमाणान्तरेणैव प्राप्तिसम्भवे पुनर्विधानप्रयोजने जिज्ञासिते शेष्यन्तरपरिसंख्यानस्यैव विधितात्पर्यविषयत्वावधारणादप्राप्तपरिसंख्यैवासौ। एवञ्च स्वार्थस्यैव विधानान्न स्वार्थत्यागः। इतरपरिसंख्यानस्यार्थत्वात् न तदर्थं लक्षणया अर्थान्तरेस्वीकारः। शीघ्रप्रवृत्तया श्रुत्या दुर्बललिङ्गप्रवृत्तेः प्रतिबद्धत्वान्न शेष्यन्तरे मन्त्रस्य प्राप्तिरिति न प्राप्तबाध इति। प्राप्तपरिसंख्योदाहरणं तु **'पञ्च पञ्चनखा भक्ष्या'** इति। इयं हि, पञ्चपञ्चनखभक्षणस्य रागप्राप्तेस्तद्विधानायोगाद्रागप्राप्तपञ्चाधिकपञ्चनख-भक्षणपरिसंख्याने विधितात्पर्यमावश्यकमिति भवति प्राप्तपरिसंख्येति॥ नचात्रापि पूर्वप्रवृत्त्या फलतः परिसंख्यात्वम्। रागप्राप्तभक्षणस्य प्रयोजनवदर्थज्ञानवत्

एवमष्टदोषदुष्टविकल्पोऽप्यगतिकोऽङ्गीकृतः । यथा आग्नेयोऽष्टकपालसंस्कृतः पुरोडाशो यागाङ्गत्वेनावगतः । तत्र अपूपविशेषस्य पुरोडाशस्य प्रकृतिद्रव्याकाङ्क्षायामनियमेन यस्य कस्यचिद्द्रव्यस्य प्राप्तौ 'व्रीहिभिर्यजेते' ति वाक्यात् व्रीहयो नियम्यन्ते । एवं 'यवैर्यजेते' ति वाक्याद्यवा अपि नियम्यन्ते। तयोरेकार्थत्वाद्विकल्पः । एवम् 'अतिरात्रे षोडशिनं गृह्णाती' ति अतिरात्रे षाडशिग्रहणं विहितम् । तथा 'नातिरात्रे षोडशिनं गृह्णाती' ति प्रतिषधात् ग्रहणाभावो विहितः । तयोर्ग्रहणा-ग्रहणयोः परस्परविरुद्धयोरेकस्मिन् प्रयोगे अनुष्ठातुमशक्यत्वात् क्वचित् प्रयोगे ग्रहणानुष्ठानं प्रयोगान्तरे तदभावानुष्ठानमिति

---

चयनापूर्वसाधनीभूताश्वाभिधानींवद्वा श्रूयमाणविध्युद्देश्यत्वानुभवा-योग्यत्वेन कल्प्यफलोद्देशेन भक्षणविधाने फलकल्पनस्यैव दोषत्वेन च परिसंख्याया एव श्रुतविधितात्पर्यविषयत्वस्यावश्यकत्वात् ॥

दोषप्रसङ्गात् विकल्पदोषान् प्रतिपादयितुमाह । **एवमिति** ॥ विकल्पाश्रयमभिधाय विकल्पप्रयोजकमाह । **तयोरिति** ॥ **एकार्थत्वादिति** ॥ एकार्थयोर्व्रीहियवयोः प्रत्येकं यागसाधनत्वेन श्रुतयोः आग्नेयादीनामेक-स्वर्गार्थिनां प्रयोगवचनवत्समुच्चयग्राहकप्रमाणाभावादित्यर्थः । तथा च समुच्चयग्राहकप्रमाणाभावविशिष्टमेकार्थत्वं विकल्पप्रयोजकमिति फलितम् ॥ द्रव्ययोर्विकल्पमुक्त्वा क्रियातदभावयोराह । **एवमिति** ॥ **परस्परेति** ॥ अनेन एकक्रत्वर्थयोर्ग्रहणाग्रहणयो-र्विकल्पप्रयोजकः समुच्चयग्राहकप्रमाणाभावस्सूचितः ॥ दोषानाह ।

तत्रापि विकल्पः । स चाष्टदोषदुष्टः । तथाहि - पूर्वं व्रीहिप्रयोगे यवशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यपरित्यागः, अननुष्ठापकत्वलक्षणाप्रामाण्यस्वीकारः, ततो द्वितीयप्रयोगे यवानुष्ठाने यवशास्त्रस्य पूर्वं त्यक्तं यत् प्रामाण्यं तत्स्वीकारः, स्वीकृतं यदप्रामाण्यं तत्परित्यागश्चेति यवशास्त्रे चत्वारो दोषाः । एवं पूर्वं यवप्रयोगे व्रीहिशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणं यत् प्रामाण्यं तत्परित्यागः, अननुष्ठापकत्वलक्षणं यदप्रामाण्यं तत्स्वीकारः, पुनः द्वितीयप्रयोगे व्रीह्यनुष्ठाने व्रीहिशास्त्रस्य त्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति व्रीहिशास्त्रे चत्वारो दोषा इति ॥

अष्टदोषदुष्टविकल्पः क्वचिदेकार्थत्वात् । एककार्य-

---

सचेति ॥ **व्रीहिप्रयोगे** यवानुष्ठानशून्ये प्रयोगे । प्रमापकत्वरूपप्रामाण्यत्यागासम्भवादाह । **स्वार्थेति** ॥ **यवशास्त्रइति** ॥ यवाननुपादाय प्रयोगे एतच्छास्त्रे द्वौ दोषौ । तादृशप्रयोगानन्तरकालिके तानुपादाय प्रयोगे द्वाविति चत्वारो दोषाः ॥ एवं व्रीहिस्थलेऽपि विवेचनीयम् ॥ द्वयोर्विकल्पे एवमष्टौ दोषाः । यत्र तु त्रयाणां तत्र द्वादश एवमेकैककोट्याधिक्ये चत्वारश्चत्वारो दोषा अधिका इति द्रष्टव्यम् ॥

विकल्पो द्वेधा भवति समुच्चयग्राहकप्रमाणाभावविशिष्ट एकार्थत्वप्रमाणकः, वचनप्रमाणकश्च । ताविमौ क्रमेणाह । **अष्टेत्यादिना** ॥ विकल्पे अष्टदोषदुष्टत्वविशेषणं विभज्य तत्प्रदर्शनस्य प्रासङ्गिकत्वं सूचयितुम् ॥ **एकार्थत्वादिति** ॥ उक्तोऽर्थः ॥ विकल्पो नाम तेन सहाननुष्ठेयत्वे सति तत्कार्यकारित्वम् । तत्र विशेष्यदळसम्पादनमुक्त

**कारित्वादित्यर्थः । यथा व्रीह्यादौ । तत्र व्रीहियवयोरेकैकस्य पुरोडाशनिष्पादनक्षमत्वाद्विकल्पः क्वचित् वचनबलात् । यथा 'वृहत् पृष्ठं भवती' ति बृहत्सामसाध्यं पृष्ठनामकं स्तोत्रं विहितम् । 'रथं तरं पृष्ठम्भवती' ति रथन्तरसामसाध्यं पृष्ठस्तोत्रान्तरं विधीयते । स्तोत्रञ्च प्रयाजादिवदपूर्वार्थत्वादर्थकर्म । साम तु संस्कारकर्मत्वाद्गुणकर्म । स्तोत्रसाधनीभूतस्तोत्रीयाक्षराभिव्यक्तिरूपसंस्कारद्वारा साम्नां स्तोत्रसाधनत्वाङ्गीकारात् । प्रगीतमन्त्रसाध्यमिन्द्रादिगुणिनिष्ठगुणाभिधानं स्तोत्रम् । प्रगीतमन्त्रसाध्यं सामाभिव्यक्तऋगक्षरसाध्यमित्यर्थः । अप्रगीतमन्त्रसाध्यं गुणिनिष्ठगुणाभिधानं शस्त्रम् । गानक्रियाविशेषः साम । स्तोत्रसाधनीभूता ऋचः स्तोत्रीयाः । तद्गतत्रिवृत्पञ्चदशत्वादिसङ्ख्याविशेषः स्तोम इत्येतेषां भेदः । तथा च वृहद्रथन्तरपृष्ठयोर्भिन्नापूर्वार्थत्वेन एकार्थत्वाभावेऽपि 'वृहद्वा पृष्ठं कार्यं,' 'रथन्तरं वा**

---

विकल्पप्रमाणघट कैकार्थत्वदळकृत्यमित्याह । **तत्र व्रीहीति** ॥ एवमेव दळान्तरस्य विशेषणसम्पादकत्वं द्रष्टव्यम् ॥ सामसाध्यत्वं स्तोत्रस्य विशदयति । **स्तोत्रमिति** ॥ अपूर्वार्थत्वादिति ॥ **स्तुतशस्त्राधिकरणन्यायेनेति** शेषः ॥ **अङ्गीकारादिति**॥ **'कर्मवा विधिलक्षण'** मिति नवमद्वितीयद्वितीयानुरोधेनेति द्रष्टव्यम् ॥ प्रसङ्गादेव स्तोत्रशस्त्रसामस्तोत्रीयास्तोमपदानामर्थान् क्रमेणाह **प्रगीतेत्यादिना**॥ **तथाचेति**॥ 'बृह' दित्यादिवाक्यद्वयविहितयोः स्तोत्रयोरर्थकर्मत्वे चेत्यर्थः ॥ **एकार्थत्वाभावेऽपीति** ॥ एतेन पूर्वन्यायाविषयत्वं सूचितम् ॥ इमावेव विकल्पभेदौ न्यायगम्यो वाचनिकश्चेति व्यवहृतावन्यत्र ॥ पुनरपि विकल्पो द्विविधो

पृष्ठं कार्य' मिति वचनबलादेव विकल्पः । क्वचिद्व्यवस्थित-विकल्पः । यथा द्वितीयप्रयाजकर्मणि नाराशंसतनूनपान्मन्त्रयो-रेकार्थत्वाद्विकल्पः । स च 'राजन्यवासिष्ठानां नाराशंसो द्वितीय-प्रयाजस्तनूनपादन्येषा' मितिवाक्यात् व्यवस्थित इति व्यवस्थितविकल्पः ॥

तदेवं चोदनाऽपरपर्यायाणां विधिवाक्यानामंशत्रय-विशिष्टभाव नाविधायकत्वात् प्रामाण्यम् । उद्भिदादीनां नामतया अर्थवादनां विधेयप्राशस्त्यपरतया मन्त्राणामनुष्ठेयार्थ-स्मारकतया प्रामाण्यमिति कृत्स्नस्य वेदस्यालौकिके धर्माधर्माख्येऽर्थे प्रामाण्यं स्थितम् ॥

स्मृतयोऽपि मन्वादिप्रणीता वेदमूलकत्वादष्टकादौ धर्मे

---

व्यवस्थितोऽव्यवस्थितश्च । तत्राद्यमाह । **क्वचिदिति** ॥ अनन्तरस्तु व्रीहियवादिस्थल इति स्पष्टम् ॥

धर्माधर्मप्रमाणेषु वेदस्मृत्याचारेषु वेदनिरूपणमुपसंहरति । **तदेवमिति** ॥ **उद्भिदादीनामिति** ॥ एतदनुरोधेनैव, नामधेयनिरूपणस्य नान्यप्रसङ्गागतत्वमिति भाति ॥

स्मृतिप्रामाण्यमाह । **स्मृतयोऽपीति** ॥ दृढकर्तृस्मरणेनासां पौरुषेयत्वस्यैव वाच्यतया न वेदवत्स्वातन्त्र्येण प्रामाणयमिति व्यञ्जयन्नाह । **मन्वादिप्रणीता इति** ॥ **वेदमूलकत्वादिति** ॥ अथात्र कथं वेदमूलकत्व-सिद्धिः, अनुमितेः पूर्वं तदनवगमाद्व्याप्तेरेवासिद्धत्वादिति चेन्न । पौरुषेयतया यत्किञ्चिन्मूलकत्वे आवश्यके प्रत्यक्षस्यालौकिकेष्वर्थेष्व-प्रवृत्त्या अत एव तदुपजीविनानुमानादीनां सुतरां तत्र प्रवर्तितुमशक्तत्वेन

**प्रमाणम् । 'औदुम्बरी सर्वा वेष्टयितव्ये' ति स्मृतिरप्रमाणम् । 'औदुम्बरीं स्पृष्ट्वोद्गाये' दिति प्रत्यक्षश्रुतिविरुद्धत्वात् । सर्ववेष्टने सति श्रुत्युक्तस्पर्शनस्य कर्तुमशक्यत्वात् । 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती' ति स्मृतिरप्यप्रमाणम् । श्रुत्यविरुद्धत्वेऽपि लोभमूलकत्वात् ॥**

**तथा शिष्टाचारोऽपि स्मृतिद्वारा श्रुतिमूलकत्वात् प्रमाणम् । मातुलसुतापरिणयनादिशिष्टाचारस्त्वप्रमाणम् ।**

---

मूलत्वायोगात् वैदिकैस्त्रैवर्णिकैर्धर्मत्वेन परिगृहीततया भ्रान्त्यादेरपि तथात्वानुपपत्तेः परिशेषादेव वेदस्यैव तन्मूलत्वं निश्चीयत इति ॥ क्वचित्स्मृतिविशेषे प्रामाण्यमपवदति । **औदुम्बरीति** ॥ अपवदने बीजमाह । **औदुम्बरीमिति** ॥ ननु स्मृतिविरोधात् श्रुतिरेवाप्रमाणमस्तु । अत्राह । **प्रत्यक्षेति** ॥ यद्वा श्रुतौ मूलभूतायामनुमितायां सत्यां, विरुद्धार्थप्रतिपादकत्वेऽपि स्मृतिविशेषस्यानुमितश्रुतिमूलकत्वेनाविशेषादविरुद्धार्थस्मृतेरिव प्रामाण्यं दुर्वारमित्यत्राह । **प्रत्यक्षेति** ॥ **अयंभावः** - स्मृतिप्रामाण्याय तादृशार्थप्रतिपादकश्रुतेरनुमेयतया ततः पूर्वमेव प्रवर्तमानया स्मृतिविरुद्धमर्थं प्रतिपादयन्त्या प्रत्यक्षश्रुत्या मूलभूतश्रुत्यनुमानप्रतिबन्धान्नानुमितश्रुतिमूलकत्वेन श्रुतिविरुद्धस्मृतेः प्रामाण्यं सम्भवतीति ॥ मूलभूतश्रुत्यनुमानसम्भवेऽपि स्वतन्त्रप्रत्यक्षश्रुत्यर्थस्यैवानुष्ठेयतया श्रुतिविरुद्धस्मृतेरननुष्ठापकत्वलक्षणमप्रामाण्यमस्त्येवेति ध्येयम् ॥ विरोधं विशदयति । **सर्वेति** ॥

आचारप्रामाण्यमाह । **तथेति** ॥ स्मृतिविरोधे न स प्रमाणमित्याह । **मातुलसुतेति** ॥ **'तयोश्च वेदः स्मृतिराचारश्च प्रमाण'** मिति ग्रन्थारम्भे

'मातुलस्य सुतामूढ्वे' त्यादि स्मृत्या निषिद्धत्वेन स्मृतिविरुद्ध-त्वात्। तदेवं श्रुतिस्मृत्याचाराणां धर्माधर्मयोः प्रामाण्यमुक्तम्॥

स च धर्मः परस्परं भिन्नः। भेदकप्रमाणानि तु शब्दान्तरादीनि। तथाहि - यागदानहोमानां यजति, ददाति, जुहोतीत्यपर्यायशब्दप्रतिपाद्यत्वा-च्छब्दान्तराद्भेदः। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानम्। 'समिधो यजती' त्यादीनां पञ्चानां वाक्यानां मध्ये एकस्य कर्मविधायकत्वमन्येषां तस्मिन् कर्मणि गुणविधायकत्वमित्यत्र नियामकाभावात् सर्वेषां कर्मविधायकत्वे स्थिते विहितस्य कर्मणः पुनर्विधानं व्यर्थमिति पुनर्विधानसामर्थ्यात् पूर्ववाक्यविहितकर्मापेक्ष-

---

उपक्रान्तं धर्माधर्मप्रमाणनिरूपणं निगमयति। **तदेवमिति**॥

एवं प्रथमाध्यायार्थं धर्माधर्मप्रमाणं निरूप्य द्वितीयाध्यायार्थं भेदं वर्तयति। **सचेति**॥ **शब्दान्तरादीनि** शब्दान्तराभ्याससंख्यासंज्ञागुण प्रकरणान्तराणि॥ शब्दान्तराद्भेदमाह। **यागेति**॥ यागहोमपदार्थयोः प्रागेवोक्तत्वाद्दानपदार्थमाह। **स्वस्वत्वेति**॥ अभ्यासाद्भेदमाह। **समिध इति**॥ **'तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति'** इतीमानि वाक्यान्यादिपदार्थः॥ **नियामकाभावादिति**॥ मन्त्रवर्णादेव देवताप्राप्तिसम्भवेन एकैकस्मिन्नपि वाक्ये द्वितीयान्तपदेन देवताविधानानुपपत्तेरत्र देवताविधिरत्र नेति नियामकं न किञ्चिदस्तीत्यर्थः॥ **स्थित इति**॥ एतावता प्रकृते यजति पुनः श्रुतेः धात्वर्थभिन्नविधायकत्वा-भावरूपमनन्यपरत्वापरपर्यायमविशेषत्वं विशेषरहितत्वमस्तीति दर्शितम्॥

योत्तरवाक्यविहितस्य कर्मणो भेदः सिध्यतीत्येतादृशस्थलेष्व-विशेषपुनः श्रुतिरूपाद्यजतिपदाभ्यासात् कर्मभेदः । 'तिस्र आहुतीर्जुहोती' त्यत्र जुहोतिपदाभ्यासाभावेऽपि जुहोत्यर्थे होमे त्रित्वसङ्ख्यान्वयात्परस्परभिन्नास्त्रयो होमा इति सङ्ख्ययाऽत्र कर्मभेदः । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते' ति ज्योतिष्टोमप्रकरणे श्रुतानामपि ज्योतिराद्याख्यानां त्रयाणां यागानां ज्योतिष्टोमसंज्ञापेक्षया पृथक्संज्ञात्रयकरणात् ज्योतिष्टोमापेक्षया भेदः । भिन्नसंज्ञा-वशादेव त्रयाणां परस्परं भेद इति संज्ञया कर्मभेदः । तथा 'तप्ते

---

**अविशेषेति** ।। अत्र पुनःश्रुतिमात्रस्य अभ्यासत्वे **'य एवं विद्वान्पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते'** इत्यत्रापि यजतेरभ्या-सादाग्नेयादिकमपेक्ष्य भिन्नकर्मविधानापत्तिः । अविशेषत्वरूपानन्यपरत्वेन विशेषणे तु आग्नेयादिसमुदायसिद्धि परत्वादभ्यासस्य न साऽऽपत्तिरिति ध्येयम् ।। संख्यया कर्मभेदमाह । **तिस्र इति** ।। न चात्र श्रूयमाणं त्रित्वं एकस्यैव होमस्याभ्यासमात्रं बोधयिष्यति न तु भेदमिति शङ्कनीयम् । एतद्वाक्यप्रवृत्तेः प्राक् एतद्वाक्यविधेयकर्मणोऽनवगततया एतस्मिन्नेव वाक्ये विधानावसरे स्वाश्रयवृत्तिस्वाश्रयप्रतियोगिक भेदाविनाभूतस्य त्रित्वस्यान्वये सति विजातीयहोमत्रयस्यैव कल्पनौचित्यात् । इतरथा एक एव होमः स तु त्रिरभ्यसितव्य इति बुद्धिव्यापारगौरवापत्तेः ।। संज्ञया भेदमाह । **अथेति** ।। यथा ज्योतिष्टोमापेक्षया ज्योतिर्विश्वज्योतिस्सर्वज्योतिषां संज्ञया भेदस्तथा तया त्रयाणामेषां परस्परभेदोऽपीत्याह । **भिन्नसंज्ञावशादेवेति** ।।

पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन' मित्यत्र 'सा वैश्वदेवी' ति वाक्ये विश्वदेवदेवताऽऽमिक्षा-द्रव्यसम्बन्धानुमितो यागो विधीयते। 'वाजिभ्यो वाजिन' मित्यत्रापि वाजिदैवत्यवाजिनद्रव्यककर्मान्तरं विधीयते। न तु पूर्वविहिते वैश्वदेवयागे वाजिनद्रव्यरूपगुणो विधीयते। पूर्वयागस्यामिक्षागुणावरुद्धत्वेन तत्र वाजिनस्य निवेशायोगात्। न च व्रीहियववद्विकल्पः। वाजिमामिक्षयोः समशिष्टत्वाभावात्। विषमशिष्टयोर्विकल्पायोगात्। वैश्वदेवयागोत्पत्तिवाक्य एवामिक्षागुणः शिष्यत इति उत्पत्तिशिष्टः। शिष्यते विधीयत इत्यर्थः। वैश्वदेववाक्यादुत्पन्ने कर्मणि वाक्यान्तरेण शिष्टो विहितो वाजिनगुण उत्पन्नशिष्टः। तयोर्मध्ये ह्युत्पत्तिशिष्टः प्रबलः। कर्मोत्पत्तिवेलायामेव कर्माङ्गत्वेन प्रमितत्वात्। उत्पन्नशिष्टो वाजिनगुणोऽनन्तरप्रमितो विलम्बितत्वेन दुर्बलत्वात् पूर्वकर्मणि निवेशमलभमानो वाजिरूपदेवतान्तर-सम्बन्धात् स्ववाक्यस्य कर्मान्तरविधायकत्वमानयतीति गुणात्

---

गुणाद्भेदमाह। तथेति ॥ कर्मान्तरमिति ॥ वैश्वदेवाद्भिन्नं कर्मेत्यर्थः ॥ निवेशायोगादिति ॥ तथा च वाक्यान्तरविहितकर्मणि अनिविशमानो गुणः कर्मभेदबोधक इति भावः ॥ विकल्पेन निवेशमाशङ्क्य निषेधति। न चेति ॥ वाजमन्नं येषामस्ति ते वाजिन इति व्युत्पत्त्या वाजिभ्य इति पदेन पूर्ववाक्यविहितान् विश्वान्देवाननूद्य वाजिनविधिर्न सम्भवति। वाजिपदस्य देवताविशेषे रूढत्वादिति सूचयन्नाह। देवतान्तरेति ॥ सम्बन्धादिति ॥

**भेदः । तत्र घनीभूतं पय आमिक्षा शिष्टं जलं वाजिनम् । तथा कुण्डपायिनामयने श्रूयते 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'ति । अत्र पूर्वकर्म किञ्चिदपि सन्निहितं न भवति । अपूर्वकर्मसन्निधानरूपात् प्रकरणान्तरात् प्रसिद्धाग्निहोत्रधर्मकं**

---

यागवाचकपदाश्रवणेऽपि द्रव्यदेवतासम्बन्धेन श्रुतेन यागविशेषोऽनुमास्यत इति प्रतिपादयितुमिदमुक्तम् ॥ प्रकरणान्तराद्भेदमाह । **तथेति** ॥ **कुण्डेति** ॥ कुण्डपायिनामयनाभिधे सत्र इत्यर्थः ॥ अनेकदिनसाध्यस्सोमयागो द्वेधा- अहीनस्सत्रञ्च । तत्र यजतिपदघटितवाक्यविधेयोऽनियतयजमान- संख्याकोऽहीनः । आसीरन्नुपेयुरिति विधिविहितं सत्रम् । तत्र द्विरात्रमारभ्य एकादशरात्रान्तं सर्वेऽहीनाः । त्रयोदशरात्रमारभ्य सर्वाणि सत्राणि । द्वादशाहस्य तु सत्रत्वमहीनत्वञ्चेति स्थितम् । **किञ्चिदपीति** ॥ अत्र सम्भावितस्याग्निहोत्रसन्निधानस्यैव निषेध्यत्वेऽपि, यथा सोमयागादिकमन्यत्कर्म न सन्निहितं भवति तथैवाग्निहोत्रमपि न सन्निहितं भवतीति दृष्टान्तस्यापि प्रतिपादनाय '**किञ्चिदपि सन्निहितं न भवती**'ति कर्मान्तरसन्निधानसाधारण्येन निषेध इति ज्ञेयम् ॥ **अपूर्वेति** ॥ अपूर्वस्या- प्रकृतस्य वाक्यान्तरेणाप्राप्तस्य कर्मणः सन्निधानादुपस्थितेरित्यर्थः ॥ **प्रकरणान्तरादिति** ॥ **अन्यत्** यत्प्रतियोगिको भेदः प्रमातव्यस्तादृशकर्म सम्बन्धिप्रकरणाद्भिन्नं प्रकरणं प्रकरणान्तरम् । एतत्प्रयोज्यत्वाद् अपूर्वकर्मसन्निधानमपि प्रकरणान्तरम् ॥ ननु '**अग्निहोत्रं जुहोती**'ति वाक्यविहितस्य कर्मणोऽत्रोपस्थित्यभावे तत्संज्ञाभूतस्याग्निहोत्रपदस्य श्रवणं नोपपद्यते । तदाह । **तन्नामकमिति** ॥ अग्निहोत्रनामकमित्यर्थः ।

**तन्नामकं कर्मान्तरं विधीयते। न त्वग्निहोत्रशब्देन प्रसिद्धाग्निहोत्र-मनूद्य गुणविधिः। प्राप्ते कर्मणि आनन्तर्यमासरूपानेकगुणविधौ वाक्य भेदापत्तेरिति प्रकरणान्तरादत्र कर्मभेदः। प्रसिद्धाग्निहोत्रं**

---

यथा उक्तवाक्यविहितस्य कर्मणोऽग्निहोत्रसंज्ञा तथा प्रकृतवाक्य-विहितस्यापीति नानुपपत्तिरिति भावः ।। ननु प्रयोगप्राचुर्यात् 'अग्निहोत्रं जुहोती'ति वाक्यविहिते कर्मण्येवाग्निहोत्रपदं शक्त्या निरूढलक्षणया वा वर्तते। नचैवं प्रकृतेऽपि वर्तिष्यत इति वक्तुं युक्तम्। **'अन्यायश्चाने-कार्थत्व'**मिति न्यायात्।। तथा च कथं मासाग्निहोत्रस्य तत्संज्ञकत्वमिति चेदाह। **प्रसिद्धाग्निहोत्रधर्मकमिति**।। **अयंभावः**। सत्यं न शक्तिर्निरूढ-लक्षणा वा मासाग्निहोत्रेऽग्निहोत्रपदस्य तथाऽपि तु स्वशक्य-प्रसिद्धाग्निहोत्रसम्बन्धिधर्मपदवाच्याङ्गसदृशाङ्गकलापवत्त्वसम्बन्धेन लक्षणया तस्य पदस्य तत्र प्रवृत्तौ न किञ्चिदनुपपन्नमिति। अयमेव नामातिदेश इत्युच्यत इत्यलम्। नन्वग्निहोत्रमिति नाम श्रूयमाणं प्रसिद्धाग्नि-होत्रं सन्निधापयिष्यतीति नात्रापूर्वस्य कर्मणस्सन्निधानरूपं प्रकरणान्तर-मात्मानं लभते। नैवमित्याह।। **नत्विति**।। **आनन्तर्येति**।। 'उपसद्भिश्च-रित्वे'ति क्त्वाप्रत्ययार्थोऽयम् ।। **वाक्यभेदापत्तेरिति** ।। तथा च प्रसिद्धाग्निहोत्रस्योपस्थितावपि तत्रानिविशमाना अनेके गुणा अत्र वाक्ये 'उपस्थितस्य' कर्मणोऽपूर्वत्वमापादयन्तीति अपूर्वकर्मसन्निधानरूपं प्रकरणान्तरमप्रतिहतमिति भावः ।। एषा तु प्रकरणान्तरस्य भाष्यानुसारिणी सरणिः ।। अत्र गुणस्यैव भेदकत्वं भङ्ग्यन्तरेणोक्तम्। यत्रैक एव गुणः 'मासं दर्शपूर्णमासाभ्या'मित्यादौ तत्र प्रकरणान्तराद्भेदानापत्तिश्चेति

**नैयमिकाग्निहोत्रं नित्याग्निहोत्रमिति यावत् । तदेवं शब्दान्त-राभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरैः कर्मभेदो दर्शितः ।**

**तत्र वेदादिप्रमेयोऽर्थस्त्रिविधः = क्रत्वर्थः-पुरुषार्थः-उभयार्थश्चेति। प्रयाजादिः क्रत्वर्थः। फलं तत्करणञ्च पुरुषार्थः यथा-स्वर्गादिर्ज्योतिष्टोमादिश्च। दध्यादि तु उभयरूपम्। 'दध्ना जुहोती' ति फलासंयुक्तवाक्येन क्रत्वर्थत्वात्। 'दध्नेन्द्रियकामस्य जुहुया' दित्यनेन फलाय विधानात् पुरुषार्थत्वात्। तदुक्तम् - 'एकस्य तूभयत्वे संयोगपृथक्त्व' मिति। संयोगो वाक्यम्। तस्य पृथक्त्वं भेदः, एकस्य उभयार्थत्वे नियामक इत्यर्थः। क्रत्वर्थे प्रयाजादौ क्रतुः प्रयोजकः। पुरुषार्थे फलं प्रयोजकम्।**

---

वार्तिककारः प्रकरणान्तरमन्यथा वर्णयाञ्चकार। तद्यथा - अनुपादेय-गुणसहितः पूर्वकर्मासन्निधिरेव प्रकरणान्तरम्। यत्र अनुपादेयो गुणो नास्ति तत्र 'यदाहवनीये जुहोती' त्यादौ सत्यप्यसन्निधौ कर्मभेदाभावात् सन्निधिसत्त्वेऽनुपादेयगुणसत्त्वेऽपि 'सायं जुहोती' त्यादौ तदभावाच्चेति॥ अथ केऽनुपादेयगुणाः ? तदुच्यते - **देशः कालो निमित्तञ्च फलं संस्कार्यमेव च। इति मीमांसकैरुक्तमनुपादेयपञ्चकम्॥**

तृतीयाध्यायार्थः प्रसङ्गात्प्रागेव निरूपितः । अथाद्य चतुर्थाध्यायार्थं प्रयोजकत्वं प्रदर्शयितुमाह। **सचेति**॥ क्रत्वर्थत्वपुरुषार्थत्वे व्याख्याते॥ **फलमिति**॥ अस्य पुरुषार्थत्वं भाक्तम्॥ क्रत्वर्थपुरुषार्थयोः प्रयोजकं क्रमेणाह **क्रत्वर्थे प्रयाजादा** वित्यादिना॥ उभयार्थस्योभयं प्रयोजकमिति स्पष्टत्वान्नोक्तम्॥ नन्वनुष्ठापकत्वरूपं प्रयोजकत्वं विधेरेव

**प्रयोजकत्वं नामानुष्ठापकत्वमित्यर्थः । विधिः यदर्थं यदनुष्ठापयति स तत्र प्रयोजकः । दर्शादिविधिः स्वर्गाद्यर्थं दर्शादिकमनुष्ठापयतीति स्वर्गादिः दर्शादौ प्रयोजकः। प्रयाजादिविधिः प्रयाजादीन् दर्शाद्यर्थमनुष्ठापयतीति दर्शादिः प्रजायादीनां प्रयोजकः । दध्यानयनविधिर्दध्यानयनमामिक्षार्थ-मनुष्ठापयति न वाजिनार्थम्। आमिक्षार्थं दध्यानयनानुष्ठाने सति**

---

नान्यस्य सम्भवतीति चेदाह। **विधिरिति**॥ यद्यपि मुख्यप्रयोजकत्वं विधेरेव तथाऽपि स यदर्थमनुष्ठापयति तस्यापि प्रयोजकत्वव्यवहारश्शास्त्रकृतामिति भावः ॥ विशिष्य प्रयोजकान्युदाहरति। **दर्शादीति**॥ प्राधान्यात्क्रममुल्लङ्घ्य प्रथममेतदुक्तिः ॥ **प्रयाजानां प्रयोजक इति** ॥ अत्र '**दध्ना जुहोती**'ति '**दध्नेन्द्रियकामस्य जुहुया**' दिति च विधिद्वयं होमार्थमिन्द्रियार्थञ्च दध्यनुष्ठापयतीति दध्नः होम इन्द्रियमित्युभयं प्रयोजकमित्यप्यनुसन्धेयम् ॥ प्रयोजकापवादत्वेनाप्रयोजकोऽपि चतुर्थाध्यायार्थः । स द्विविधः । स्वाङ्गस्वाप्यप्रयोजकः कश्चित्। इतराङ्गं सत्स्वोपकारकं यत्तस्याप्रयोजकः कश्चित् ॥ तत्रान्त्यमुदाहरति । **दधीति** ॥ '**तप्ते पयसि दध्यानयती**'ति विधिरित्यर्थः ॥ नन्वामिक्षावाजिनयोर्द्वयोरपि, पयसि दध्यानयनादेकस्मा-न्निष्पत्त्यविशेषेण तस्योभयाङ्गत्वावगमात् कथमामिक्षैव तत्प्रयोजिका न तु वाजिनमित्यत्राह । **आमिक्षार्थमिति** ॥ '**पयो वा तत्प्रधान्रत्वा**' दित्याष्टमिकन्यायेन दध्यानयनसंस्कृतपयस एवामिक्षात्वात् दध्यानयन-विधिना च स्वघटकपयश्शब्दोपात्तामध्याहृतांवाऽऽमिक्षामुद्दिश्यैव दध्यानयनविधानादामिक्षार्थमेव स विधिर्दध्यानयनमनुष्ठापयतीति भावः ॥

वाजिनस्य स्वतः सिद्धत्वात् । अत आमिक्षैव दध्यानयने प्रयोजिका। न वाजिनम्। 'पुरोडाशकपालेन तुषानुपवपती'ति तुषोपावापङ्गत्वेन पुरोडाशर्थंकपालं विधीयते । तथापि तुषोपवापः कपालस्य प्रयोजको न भवति। पुरोडाशार्तमुपात्तेनैव कपालेन तुषोपवापसिद्धेः । किन्तु पुरोडाश एव कपालस्य प्रयोजक इत्याद्यूह्यम्।

ननु विधिना साङ्गं प्रधानं कर्त्तव्यतया चोद्यते । तत्र अङ्गानां प्रधानानाञ्च कर्मणां बहुत्वात् क्रमेणानुष्ठानं वाच्यम्। तत्क्रमनियामकं प्रमाणं किमिति चेन्न । श्रुत्यादीनामेव क्रमनियामकत्वात् । तथाहि - 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यत्र श्रुत्या गृहपतिदीक्षानन्तरं ब्रह्मदीक्षेति

---

स्वत इति ।। वाजिनप्रयोज्यत्वं विनेत्यर्थः । आद्यमप्रयोजकमाह । **पुरोडाशेति** ।। पुनरपि प्रयोजको द्विविधः - कश्चित्स्वार्थं प्रयोजयति यथा स्वर्गो यागम्। परार्थन्तु कश्चित् यथा निमित्तं पापध्वंसार्थं नैमित्तिकं कर्म प्रयोजयतीति। एवं स्वरूपोपादानधारणेषु कश्चिदेकस्यैव कश्चिदुभयोः कश्चित्तु त्रयाणामपि प्रयोजको भवतीति पुनरनेकधा प्रयोजक इत्यन्यत्र विस्तर इत्याशयेनाह। **इत्याद्यूह्यमिति** ।।

अथ पञ्चमाध्यायार्थभूतक्रमप्रमाणानि दर्शयितुं तदनुगुणमाक्षेपमुपक्षिपति । **नन्विति** ।। **विधिना** प्रयोगविधिना ।। **श्रुत्यादीनां** श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तीनाम्।। **श्रुत्येति** ।। क्त्वारूपयेति शेषः ।। पाठात्

**श्रौतक्रमः । 'समिधो यजति', 'तनूनपातं यजती'त्यादिविधि-वाक्यपाठक्रमादेव समिदादियागानुष्ठानक्रमः । 'अग्निहोत्रं जुहोति' 'यवागूं पचती' त्यत्र यवागूपाकस्य होमार्थत्वेन पाकात् पूर्वं होमस्य कर्तुमशक्यत्वात् पाठक्रमं त्यक्त्वा अर्थक्रमः स्वीकर्तव्यः । अर्थः प्रयोजनं होमरूपं । तदर्थं क्रमोऽर्थक्रमः । तेन पूर्वं पाकः पश्चाद्धोमः । तथा 'सप्तदशप्राजापत्यान् 'पशूनालभेते' त्यत्र सप्तदशपशुद्रव्यकप्रजापतिदेवताक-सप्तदशयागाः कर्तव्यत्वेन बोधिताः । तत्रोपाकरणाख्य आद्यः**

---

क्रममाह । **समिध इति** ।। अयं द्विविधः - मन्त्रपाठब्राह्मणपाठभेदात् । उदाहृतो द्वितीयः । आग्नेयाग्नीषोमीययोः क्रमस्तत्साधनीभूतयाज्यानु-वाक्यारूपमन्त्रपाठक्रमेणेति तत्र मन्त्रपाठात् क्रम इति ध्येयम् ।। अस्य मूलेऽर्थक्रमानन्तरमभिधानेऽपि शब्दत्वसामान्यात् श्रुत्यनन्तरमत्रोक्तिरिति भाति ।। आर्थं क्रममाह । **अग्नीति** ।। अर्थक्रमपदं विगृह्य व्युत्पादयति । **अर्थ इति** ।। अर्थपदव्याख्यानं **प्रयोजनमिति** । प्रकृतप्रयोजनोक्ति-**र्होमरूपमिति** ।। अर्थाय क्रम इति विग्रहवाक्यस्थचतुर्थ्यर्थकथनं **तदर्थमिति** ।। 'तदधीन' इति पाठक्रमस्साधीयान् ।। सूत्रकृता पाठक्रमानन्तरन्निरूपितं प्रवृत्तिक्रममाह । **तथेति** ।। **सप्तदशयागा इति** ।। न चात्र सप्तदशपशुद्रव्यक एकएव याग इति संशयितव्यम् । पशूनां प्रजापतिदेवतासम्बन्धोत्तरं तत्र सप्तदशत्वसंख्यान्वयेन तावद्द्रव्यदेवता-सम्बन्धानुमिततावद्यागविधानस्यावश्यकत्वात् । अन्यथा पश्वेकता-प्रापकातिदेशबाधापत्तेश्चेति ।। **तत्रोपेति** ।। आहवनीयस्य पुरस्तात्प्रत्यङ्मुख-मवस्थितस्य पशोर्बर्हिर्भ्यां प्लक्षशाखया चोपस्पर्शनपूर्वकं देवतार्थत्वेन

पदार्थो यतः कुतश्चिदारभ्य यत्र क्वचित् पशौ समापनीयः। नियोजनादिकं तु येन क्रमेणोपाकरणं प्रवृत्तं तेनैव क्रमेण कर्तव्यम्। कथम्। प्रकृतौ अग्नीषोमीयपशोरेकत्वेन उपाकरणमादौ कृत्वा द्वितीयक्षण एव नियोजनं तृतीयक्षण एव प्रोक्षणम्। व्यवधानप्रयोजकाभावात्। अत्र तु सप्तदशपशूनां सहानुष्ठेयत्ववचनात् प्रथमतो यत्र क्वचित् पशौ कृतमुपाकरणं स्वाश्रयकर्तव्यनियोजनाय षोडशभिः क्षणैर्व्यवधानं सहते न त्वधिकैः। तत्रोपाकरणक्रमेण नियोजनं प्रथमपशावकृत्वा पश्वन्तरेषु नियोजनं कृत्वाऽनन्तरं प्रथमपशौ नियोजनकरणे षोडशक्षणाधिकक्षणव्यवधानं शास्त्राननुमतमापद्यते। तन्निरासायोपाकरणं येन क्रमेण प्रवृत्तं तेनैव क्रमेण नियोजनादिकं कार्यमिति प्रवृत्तिक्रमः। तथा ज्योतिष्टोमे औपवसथ्यमहरारभ्य क्रमेणानुष्ठेयानामग्नीषोमीयसवनीयानुबन्ध्यानां पशूनां त्रयाणां साद्यस्क्राख्ये सोमयागे 'सह पशूनालभेत' इत्येकदाऽनुष्ठान-

---

सङ्कल्पनमुपाकरणम्॥ **स्वेति**॥ स्वस्य उपाकरणस्य आश्रये प्रथममुपाकृते पशौ कर्तव्यं यन्नियोजनं तस्मा इत्यर्थः॥ उपाकरणनियोजनयोः षोडशक्षणाधिककालव्यवधाने शास्त्रप्रकोपः स्यादित्याह। **तत्रेति**॥ **अननुमतमिति**॥ प्रयोगाविधिप्रमितस्याङ्गप्रधानसाहित्यस्य एककालिकत्वरूपत्वादनेकेषाञ्चैकस्मिन्कालेऽनुष्ठातुमशक्यत्वात् '**आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी**'ति न्यायेन यावताऽनुष्ठानं सम्भवति तावदेवानुमन्यते स विधिर्नातोऽधिकमिति भावः॥ स्थानात् क्रममाह। **तथेति**॥ **सोमयाग इति**॥ अव्यक्तत्वरूपसादृश्यकल्पितेनाति-

**लक्षणं साहित्यं बोधितम्। तदपि सवनीयस्य स्थाने विहितम्। तत्र प्राकृतक्रमं परित्यज्य सवनीयस्य स्थाने साहित्यविधानादादौ सवनीयपशोरुपाकरणं ततोऽग्नीषोमीयस्य ततोऽनुबन्ध्यायाः इति स्थानात् क्रमः। सुत्यादिवसात् पूर्वमहरौपवसथ्यम्। तथा दर्शे सान्नाय्यधर्माणां शाखाच्छेद-**

---

देशेन प्राप्तानामिति शेषः ॥ **एकदेति** ॥ **एकदा** एककालिकं यदनुष्ठानं तद्रूपमित्यर्थः ॥ **तदिति** ॥ तदपि साहित्यमपि ॥ विहितं साहित्यमपि सवनीयस्य स्थाने भवतीत्यन्वयः। ज्योतिष्टोमे प्रधानदिने '**आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोती**'ति आश्विनग्रहग्रहणोत्तरकाले सवनीयः पशुर्विहितः। एतत्पूर्वदिने औपवसथ्ये दैक्षः पशुः। सवनीयोत्तरकालेचानूबन्ध्यः। साद्यस्क्रस्यच एकदिन-साध्यत्वात्तत्र पशूनां विधीयमानं साहित्यं तद्दिनकर्तव्यस्य सवनीय-पशोर्यत्स्थानं तत्रैव भवतीत्यर्थः ॥ **प्राकृतेति** ॥ प्रथममौपवसथ्यः। अथ सवनीयः। अथानूबन्ध्य इति क्रममित्यर्थः ॥ **विधानादिति** ॥ अवगमादित्यर्थः ॥ विहितस्य साहित्यस्य सवनीयस्थानकत्वादित्यत्र तु तात्पर्यम् ॥ आश्विनग्रहग्रहणोत्तरकालरूपं हि सवनीयपशोः स्थानं तद्ग्रहणे वृत्ते सवनीयमेवोपस्थापयतीति तस्यैवानुष्ठानमुचितमिति भावः ॥ **तत इति** ॥ नन्वेतत्क्रमे किं विनिगमकमिति चेन्न। बाधकाभावे प्राकृतक्रमस्यैव नियामकत्वात् ॥ **सुत्येति** ॥ प्रधानहविस्सोमरसरूपं सुत्या ॥ अथाद्य मुख्यक्रममाह। **तथेति** ॥ **शाखेति** ॥ गोभ्यो वत्सानां पृथक्करणरूपापा-करणोपयुक्तायाश्शाखायाः '**शाखामाच्छिनत्ती**'ति विहितं छेदनं

**नादीनां पूर्वमाग्नेयधर्माणां निर्वापादीनाञ्च अनन्तरं प्रवृत्तावपि मुखयोराग्नेययागसान्नाय्ययागयोर्मध्ये आग्नेययागस्य पूर्वमनुष्ठा-नान्मुख्ययागक्रमेणादावाग्नेयपुरोडाशस्य प्रयाजशेषाभिघारणं ततः पयसोऽभिघारणमिति मुख्ययागक्रमादभिघारणक्रमः । इत्येवं श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिक्रमैरेव कर्मानुष्ठानम् ।**

---

शाखाच्छेदनम् ॥ **निरिति** ॥ पुरोडाशोपयुक्तानां व्रीहीणां मुष्टिना पृथक्कृत्योपादानं निर्वापः ॥ **प्रवृत्तावपीति**॥ एतेन मुख्यक्रमाभावे प्रवृत्तिक्रमेण प्रथमं सान्नाय्यपयसोऽभिघारणम् । अनन्तरं तु आग्नेयपुरोडाशस्येति स्यादिति मुख्यस्य क्रमनियामकत्वविशदीकारपुरस्सरं प्रवृत्तिक्रममुख्यक्रमयोर्विरोधे मुख्यक्रमः प्रबल इति सूचितम् ॥ एवं श्रुत्यर्थपठनस्थानमुख्येषु अनेकसमवाये पारदौबल्यमिति विस्तरोऽन्यत्र ॥ उपक्षिप्ताक्षेपसमाधानरूपेण प्रतिपादितं पञ्चमाध्यायार्थमुपसंहरति । **इत्येवमिति** ॥ ननु श्रौत एव एकः क्रम आदर्तव्यः । श्रुतिप्रमाणकत्वात् । नान्ये, अतथात्वात् । 'योह्यर्थादर्थो न स चोदनार्थ' इति हि भाषितम् । **मैवम्**। अनुष्ठेयानामर्थानां साहित्यावगतौ एकक्षणवृत्तित्वरूपे तस्मिन्नसम्भवति आवश्यके पूर्वापरीभावे कतमः पूर्वः कतमोऽपर इति येयमाकाङ्क्षोदेति तामेतां शमयन्ती यथा श्रुतिः क्रमनियामिका तथाऽर्थपाठादयोऽपीति सर्वः क्रमस्समानमादरमर्हति । यत्र तु नैव काचिदाकाङ्क्षा श्रुतस्यार्थस्य, अर्थाच्च कश्चिदुदासीनोऽर्थः प्रतीयते तद्विषयमिदं 'योह्यर्थादर्थ' इतीति । तदिदं सर्वमभिसन्धायाह । **अन्यथाऽनुष्ठाने वैगुण्यमिति** ॥ एवं पञ्चानामध्यायानामर्थस्सङ्गृह्य

**अन्यथाऽनुष्ठाने वैगुण्यमित्यलम् ।**

**इति श्रीकृष्णयज्वकृता मीमांसापरिभाषा समाप्ता ।।**

❖ ❖ ❖ ❖

---

प्रत्यपादि । षष्ठार्थस्तु प्रयोगविध्यादि निरूपणावसरे फलवाक्योदाहरणेन अत्रोक्तप्रायः । फलसमानाधिकरणकर्तृत्वरूपोह्यधिकारः फलवाक्येनैव बोध्यते । अत एव 'फलसम्बन्धबोधको विधिरधिकारविधि' रिति वदन्ति । एतावता उपदेशातिदेशभेदेन द्विविधे द्वादशलक्षण्यर्थे उपदेशरूपोऽसौ पूर्वषट्कार्थो बालव्युत्पत्तिसम्पत्त्यनुगुणं निरूपितो भवति । एतदध्ययनसम्पन्नव्युत्पत्तिभिस्तु अतिदेशसमाचारोऽन्यतः अधिगन्तव्य इत्युपरम्यत इत्याशयान आह । **अलमिति** ।।

**अत्रैता मूलोक्तार्थानां सङ्ग्रहकारिकाः -**

महर्षिजैमिनिप्रोक्तद्वादशाध्यायगोचरौ ।<br>धर्माधर्मौ तयोस्त्रेधा प्रमाणं परिदर्शितम् ।। १ ।।

तत्रादिमा श्रुतिर्द्वेधा मन्त्रब्राह्मणभेदतः ।<br>विध्यर्थवादभेदेन ब्राह्मणं द्विविधं मतम् ।। २ ।।

गुणकर्मोभयफलसम्बन्धविधिभेदतः ।<br>विधिवाक्यविवेकोऽथ प्रयोगविधिरीरितः ।। ३ ।।

अपूर्वकल्पनारीतिरपूर्वादिविधित्रयम् ।<br>अथाङ्गत्वे प्रमाणानि तार्तीयानि प्रसङ्गतः ।। ४ ।।

द्विधाऽङ्गसंविभागोऽथ गुणकर्मार्थकर्म च।
आदिमं द्विविधं तत्र प्रतिपत्तिस्तथेतरत् ॥ ५ ॥

पुनश्चतुर्धाचोत्पत्तिराप्तिर्विकृतिसंस्कृती।
त्रेधा स्यादर्थकर्मापि नित्यनैमित्तकैच्छिकम् ॥ ६ ॥

उक्तेषु विधिवाक्येषु तदर्थस्तदनूच्यते।
आर्थी शाब्दीति विधिषु भावना द्विविधोदिता ॥ ७ ॥

स्वाध्यायविधिवाक्ये तु शाब्द्याः कर्तव्यतोच्यते।
अथनामसमाचारस्तत्प्रख्यादिप्रमाणकः ॥ ८ ॥

तत्प्रसङ्गाद्ग्रहैकत्वारुणाधिकरणक्रमः।
अर्थवादस्ततो मन्त्रः परिसंख्यात्रिदोषता ॥ ९ ॥

विकल्पस्याष्टदोषत्वं कार्यैक्याद्वचनाच्च सः।
व्यवस्थितः क्वचित्सोऽयमिति वेदप्रमाणता ॥ १० ॥

स्मृत्याचारावथो कर्मभेदश्शब्दान्तरात्तथा।
अभ्याससङ्ख्यासंज्ञाभिः गुणात्प्रकरणान्तरात् ॥ ११ ॥

क्रत्वर्थश्च पुमर्थश्चोभयार्थश्चेत्यथावदत्।
वेदस्यार्थं संविभज्य प्रयोक्तृत्वाप्रयोक्तृते ॥ १२ ॥

अथ श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिभिः।
अनुष्ठेयपदार्थानां क्रमः स्फुटमुदीरितः ॥ १३ ॥

मीमांसापरिभाषेयं प्रवृत्ता बालबोधने ।
उपदेशन्निरूप्यैवमत्रैव स्थातुमिच्छति ।। १४ ।।

केनापि कौतुकेनासौ तत्र व्यधित चापलम् ।
गुरवश्चेत्प्रसीदन्ति कृतार्थोऽस्मि कृतम्परैः ।। १५ ।।

पेण्णोर्मिपवनपावितपरिसरमातस्थिवानसौ रङ्गम् ।
श्रीशैलस्तातार्यः परिष्करोतिस्म तन्त्रपरिभाषाम् ।। १६ ।।

टीकोपकारमनपेक्ष्य समस्तमर्थ-
मत्रावगन्तुमखिलाः प्रभवन्तु कामम् ।
शास्त्रार्थलेखनविधौ गहने गभीरा
व्युत्पत्तिरस्ति तु फलं मम लेखनस्य ।। १७ ।।

इति

**मीमांसाकेसरि-मीमांसार्णव-पण्डितराजेत्यादि**
**बिरुदभूषितानां श्री श्रीशैलताताचार्याणां कृतिषु**
**मीमांसापरिभाषापरिष्कारः पूर्णतामगात् ।**

अथ

पण्डितराज

श्रीशैलताताचार्यप्रणीतः

मीमांसापरिभाषाव्याख्यारूपः

# अक्षरार्थः

|| श्रीः ||

|| श्रीमते रङ्गराजपरब्रह्मणे नमः ||

# || अक्षरार्थः ||

**मीमांसापरिभाषाव्याख्यारूपः**

**लिखिता परिभाषायाः प्रौढहृद्या परिष्कृतिः ।**
**अत्यन्तविशदं सम्प्रत्यक्षरार्थो विलिख्यते ॥**

**न पुनरिह लिख्यते तत् यद्विशदं विलिखितं परिष्कारे ।**
**तद्यदि किञ्चिदपेक्षितमत्र स्यात् तत्ततोऽवगन्तव्यम् ॥**

अथ तत्र भवान् कृष्णयज्वा नाम मीमांसाभिज्ञो महति मीमांसाशास्त्रे प्रवेशमभिलषतां बालानामनुग्रहाय मीमांसापरिभाषा अभिधानं प्रकरणग्रन्थं कर्तुं प्रवर्तमानः तस्याविघ्नपरिसमाप्तिकामनया कृतं भगवत्स्वरूपविशेषतदीयशक्तिविशेषरूपस्वेष्टदेवतावन्दनरूपं मङ्गळं कृतज्ञतानुसन्धानाय कृतं स्वा चार्यवन्दनं च शिष्याणामेतदवश्यकर्तव्यता ज्ञापनाय ग्रन्थारम्भे निबध्नाति **सूर्येति** । सूर्यनारायणस्त्रिपुरसुन्दरीति कृष्णयज्वनः पित्रोर्नामनी इत्यपि वक्तारो भवन्ति । **अधिगतार्थानिति** । अधिगता अधीता विज्ञाता अर्थाः शास्त्रार्था यैस्तान् गुरून् । विज्ञातसर्वशास्त्रार्थानां गुरूणामनुग्रहादेव खल्वद्य ग्रन्थकरणसामर्थ्यमिति कृतज्ञताऽनुसंहिता । अधिगता ग्रन्थकारेणार्था येभ्य इति पञ्चमीबहुव्रीहिर्वा ।

**शास्त्रेति** । शास्त्रे सिद्धाः शास्त्रसिद्धाः । शास्त्रसिद्धाश्च ते अर्थाश्च शास्त्रसिद्धार्थाः । अक्लेशेन बोधः अक्लेशबोधः । शास्त्रसिद्धार्थानाम्

अक्लेशबोधः शास्त्रसिद्धार्थाक्लेशबोधस्तस्मै । **मीमांसेति** । मीमांसायाः परिभाषा मीमांसापरिभाषा । पूजितं विषयमधिकृत्य प्रवृत्तो विचारो मीमांसेत्युच्यते । वेदो हि नः परमपूजितः । तस्माद्वेदार्थविचारो मीमांसा । सोऽयं विचारो यस्मिन् शास्त्रे क्रियते तच्छास्त्रमपि मीमांसा । तदिदं शास्त्रमिह मीमांसापदेन विवक्षितम् । परिभाष्यत इति परिभाषा समयः सङ्केत इति यावत् । सङ्केतसिद्धो योऽर्थः सोऽपि परिभाषा । इह लक्षणयाऽसाधारणेऽर्थे परिभाषापदं वर्तते । एवञ्च मीमांसाशास्त्रस्यासाधारणतया प्रतिपाद्यो योऽर्थस्स मीमांसापरिभाषापदेनाभिधीयते । अथ च बालानां व्युत्पत्त्यै मीमांसाशास्त्रसम्बन्धिनः कतिपयानसाधारणानर्थान् प्रतिपादयितुं प्रवृत्तोऽयं कृष्णयज्वनो ग्रन्थसन्दर्भोऽपि मीमांसापरिभाषापदेनाभिधेयो भवतीति स एवेह श्लोके विवक्षितोऽर्थः । विषयप्रयोजने अभिदधानः प्रबन्धमवतारयति (२) **इह खल्विति** । **द्वादशेति** । द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी तस्याम् । द्वादशाध्याय्यामित्यर्थः । **पूर्वेति** । पूर्वा च सा मीमांसाच पूर्वमीमांसा । विंशतेः किलाध्यायानां मीमांसेति नाम भवति । तेष्वन्तिमानां चतुर्णां ब्रह्ममीमांसापरनामधेयानामुत्तरमीमांसेति व्यवहारः । तदपेक्षयाच आदिमानां षोडशानामध्यायानां पूर्वमीमांसेति । अत्र पूर्वमीमांसायां द्वादशलक्षण्यामित्यन्वयः । षोडशाध्याय्यां पूर्वमीमांसायां देवताविचारपरां चरमां चतुरध्यायीं विहाय याऽऽदिमा द्वादशाध्यायी तस्यामित्यर्थः । **धर्मेति** । अनेन मीमांसाशास्त्रस्य विषय उक्तः । **अनुष्ठानेति** । अनुष्ठानोपयोगिनो भावः अनुष्ठानोपयोगिता तया । इत्थंभूतलक्षणे इयं तृतीया । तदर्थो धात्वर्थेऽन्वेति । वेगेन गम्यत इतिवत् । अनुष्ठानोपयोगिता-विशिष्टः अनुष्ठानोपयोगी यो विचारस्तत्कर्मीभूतौ धर्माधर्मावित्यर्थः ।

विचारेण हि संशयनिरसनपुरस्सरं सम्यङ्निर्णये सति धर्माधर्मानुष्ठानं कर्तुं शक्यत इति विचारस्यानुष्ठानोपयोगिता॥ तृतीयार्थस्य धर्माधर्मयोरन्वयः। धर्माधर्मावनुष्ठानोपयोगिनौ विचारितौ। असन्दिग्धौ निर्णीतौ यथा भवेतां तथा विचारिताविल्यर्थ इत्यपि व्याचक्षते। हेतावेव वा इयं तृतीया द्रष्टव्या। विचारसाध्यं हि धर्माधर्मयोरनुष्ठानोपयोगित्वं विचारस्य हेतुर्भवतीति। सर्वथाऽप्यनेन मीमांसाशास्त्रस्य विषयप्रयोजनयोरभिहितयोः तदनुसृत्य प्रवृत्तस्यास्यापि प्रकरणग्रन्थस्य ते एव विषयप्रयोजने अभिहिते भवत इत्यलम्। अत्र धर्मस्यानुष्ठानं करणम् अधर्मस्यानुष्ठानं वर्जनमिति बोध्यम्॥

धर्मं लक्षयति **तत्रेति**। वेदेन बोधिता वेदबोधिता, इष्टस्य साधनम् इष्टसाधनं, तस्य भाव इष्टसाधनता, वेदबोधिता इष्टसाधनता यस्य स वेदबोधितेष्टसाधनताकः। लक्ष्यमाह **यथेति**। "**यजेत स्वर्गकाम**" इति वेदवाक्यम्। अत्र स्वर्गकामपदोपात्तस्वर्गोद्देशेन यागस्य करणत्वेन विधानमिति वक्ष्यते। एवञ्च यागनिष्ठा या स्वर्गरूपेष्टनिरूपितसाधनता तस्या अनेन वेदवाक्येन बोधितत्वात् वेदबोधितेष्टसाधनताकत्वं यागेऽस्तीति लक्षणसमन्वयः। आदिना "**अग्निहोत्रं जुहुयात्स्वर्गकाम**" इति विहितो होमः, "**हिरण्यमात्रेयाय ददाती**"ति विहितं दानमित्यादिकं गृह्यते। अत्र इष्टसाधनत्वमात्रस्य लक्षणत्वे क्षुन्निवृत्तिरूपेष्टसाधने भोजनेऽतिव्याप्तिः; अत इष्टसाधनतायां वेदबोधितत्वविशेषणम्। भोजनवृत्तिक्षुन्निवृत्ति-साधनता लोकत एवान्वयव्यतिरेकाभ्यामवगता न वेदेनेति वेदबोधितेष्टसाधनताकत्त्वाभावात् नोक्तदोषः। ननु वेदबोधितत्वमात्रं लक्षणमस्तु भोजनस्य वेदबोधित त्वाभावेनातिव्याप्त्यभावादिति चेन्न। "**सत्यं ज्ञानमनन्तं ब्रह्मे**"त्यादिवेदवाक्यबोधिते ब्रह्मणि "**यत्र दुःखेन**

**सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम्**'' इत्यनेन बोधिते स्वर्गे चातिव्याप्त्यापत्तेः । अथ एतद्दोषपरिहारायवेदबोधितत्वम् इष्टसाधनत्वमित्युभयं लक्षणमस्तु, ब्रह्मस्वर्गयोर्वेदबोधितत्वसत्त्वेऽपि स्वयमिष्टभूतयोरिष्टान्तरसाधनत्व-विरहेणातिव्याप्तिवारणात् किमिति इष्टतष्टसाधनतायां वेदबोधितत्वं विशेषणत्वेन विवक्ष्यत इति चेन्न। ''उद्भिदा यजेत पशुकामः'', ''कारीर्या यजेत वृष्टिकामः'' इत्यादिवाक्यबोधित पशुवृष्ट्यादिफलेष्वतिव्याप्तेः । तेषां तत्तद्वेदवाक्यबोध्यत्वे सति तृप्तिसस्यादिरूपेष्टान्तरसाधनत्वात् । वेदबोधितेष्टसाधनताकत्वविवक्षणे च पशुवृष्ट्यादिवृत्तितृप्तिसस्यादि-साधनताया लोकावगतत्वेन वेदबोध्यत्वाभावान्न दोष इति दिक् ।

अधर्मं लक्षयति **वेदेति** । वेदेन बोधिता अनिष्टसाधनता यस्य स वेदबोधितानिष्टसाधनताकः । **यथेति** । न कलञ्जं भक्षयेदिति श्रुतिः। अत्र कलञ्जभक्षणं न कुर्यादिति प्रतिषिध्यते । एवम् आप्ततमवेदप्रतिषेध-विषयत्वेन हेतुना कलञ्जभक्षणस्यानिष्टसाधनत्वमनुमीयते । लोके हि यद्यदाप्ताः प्रतिषेधन्ति तत्तदनिष्टसाधनं दृष्टम् । आप्ततमश्च नो वेदः । तस्मात् तत्प्रतिषेधविषयत्वेन कलञ्जभक्षणस्य नरकरूपानिष्टसाधनत्वमनुमीयत इति न कलञ्जं भक्षयेदिति वेदेन बोधिता या नरकरूपानिष्टसाधनता तद्वत्वात् कलञ्जभक्षणमधर्म इति लक्षणसङ्गतिः । आदिना नानृतं वदेदिति प्रतिषिद्धानृतवदनादिकं गृह्यते। अत्रानिष्टसाधनत्वमात्रस्य लक्षणत्वे विषभक्षणेऽतिव्याप्तिरित्यनिष्ट साधनत्वे वेदबोधितत्वविशेषणम् । वेदबोधितत्वानिष्टसाधनत्वयोरुभयोः परस्परविशेषणविशेष्यभावमन्तरेण लक्षणत्वे यागादावतिव्याप्तिः । तस्यानुष्ठाने किञ्चिद्दुःखोत्पत्तेः तस्य

चानिष्टत्वात् तादृशानिष्टसाधनत्वस्य वेदबोधितत्वस्य चोभयोरपि यागादौ सत्वात् । यथोक्तप्रकारानुसरणे च तादृशानिष्टसाधनत्वस्य यागनिष्ठस्य वेदबोधितत्वाभावेन वेदबोधितानिष्टसाधनताकत्वस्य यागादावभावात् न दोष इति ।

एवं प्रबन्धमवतारयता विषयप्रयोजने अभिहिते । विषयस्य लक्षणमप्युक्तम् । अनन्तरं शास्त्रप्रतिपाद्या अर्था निरूपयितव्याः । तत्र प्रथमाध्याये धर्माधर्मप्रमाणानां निरूपितत्वात् स्वयमप्यादौ तान्येव निरूपयन् विभज्य निर्दिशति(३) **तयोश्चेति** । **तयोः** धर्माधर्मयोः । वेदः ऋगादिभेदेन चतुर्धा प्रसिद्धः । स्मृतिर्मन्वादीनां महर्षीणाम् । आचारो वैदिकानां शिष्टानाम् ।। एषां त्रयाणां धर्माधर्मप्रमाणानां प्रामाण्ये विशेषमाह **तत्रेत्यादिना** । **तत्र** त्रयाणां मध्ये । **स्वतन्त्रेति** । स्वतन्त्रञ्च तत्प्रमाणञ्च स्वतन्त्रप्रमाणम् । स्वतन्त्रम् अनन्याधीनम् अन्यनिरपेक्षमित्यर्थः । लोकेह्याप्ताः पुरुषाः प्रत्यक्षेणानुमानेन वाऽवगतमर्थं शब्देन प्रतिपादयन्तो दृश्यन्ते नानवगतम् । तत्र तस्य शब्दस्य तादृशार्थप्रमापकत्वं तत्पूर्ववृत्तिप्रत्यक्षानुमानान्यतरप्रमाणाधीनमिति लौकिकं शब्दप्रमाणं नियमेन प्रमाणान्तरसापेक्षतया परतन्त्रं भवति । स्मृत्यादीन्यपि वेदाधीनप्रामाण्यत्वात् परतन्त्राणि । एवं प्रमाणान्तरसापेक्षत्वविरहात् वेदरूपशब्दप्रमाणं स्वतन्त्रमित्युच्यते ।

ननु लोके सर्वः शब्दप्रयोगः पुरुषनिर्मितो दृष्टः । तेन वैदिकशब्दप्रयोगस्यापि पुरुषनिर्मितत्वमनुमीयते । एवञ्च स पुरुषो येन प्रमाणेन वेदप्रतिपाद्यानर्थानुपलभ्य वेदञ्चकार तादृशप्रमाणाधीनं वेदस्य स्वार्थप्रमापकत्वमिति वेदस्यापि पारतन्त्र्यमिति चेन्न । वेदस्य पुरुषनिर्मितत्वे

प्रमाणाभावात्। अनुमानं प्रमाणमित्युक्तमिति चेन्न। तस्य योग्यानुपलब्ध्या बाधितत्वात् । यदि वेदस्य कर्ता कश्चिदासीत् कथं रघुवंशकर्तारं कालिदासमिव तमपि वैदिकवृद्धा न स्मरन्ति । तेनावश्यस्मर्तव्यस्य स्मरणाभावरूपया योग्यानुपलब्ध्या कर्तुरभावसिद्धेरनुमानं बाधितं भवतीत्यपौरुषेयत्वाद्वेदस्य युक्तमस्य स्वातन्त्र्यमित्यन्यत्र विस्तरः ।

एवं वेदस्य स्वतन्त्रप्रमाणत्वे प्रतिपादिते सत्यर्थात् स्मृत्याचारयोरुभयोरपि परतन्त्रप्रमाणत्वं सिध्यति । परस्पर व्यावृत्तं तु तयोर्विशेषमाह। **वेदेत्यादिना**। वेदो मूलमुपजीव्यं यस्य तद्वेदमूलक तत्वेन। वेदोपजीवित्वेन वेदमुपजीव्य प्रवृत्तत्वेनेति यावत् । स्मृतेर्यत् प्रामाण्यं धर्माधर्मप्रमितिजनकत्वं तत् वेदोपजीवित्वप्रयोज्यमित्यर्थः। वेदप्रतिपादितमष्टकाश्राद्धादिकं मन्वादयो महर्षयो वेदादुपलभ्य तादृशार्थप्रतिपादकस्मृतिग्रन्थान् जग्रन्थुः। तेन वेदमूलिकात्वं स्मृतीनाम्। **आचारस्येति** । वेदस्मृत्योरुभयं वेदस्मृत्युभयं तत् मूळं यस्य स वेदस्मृत्युभयमूलकः तत्वेन। वेदमुपजीव्य प्रवृत्ताया महर्षीणां स्मृतयः ता उपलभ्य शिष्टास्तदर्थमाचरन्तीति वेदमूलकस्मृतिमूलकत्वादाचारस्य उभयमूलकत्वम्। न तु साक्षाद्वेदमूलकत्वमप्यस्तीति भ्रमितव्यम्। एवञ्च साक्षाद्वेदमूलकत्वं स्मृतेराचारापेक्षया विशेषः स्मृतिव्यवहितवेद-मूलकत्वञ्चाचारस्येति प्रतिपादितं भवति।

जैमिनिना धर्माधर्मप्रमाणनिरूपणपरे प्रथमाध्याये तृतीयपादे स्मृत्याचारौ निरूपितौ। प्रथमद्वितीयपादयोर्वेदो विचारितः। तत्रापि प्रथमे विधिभागः द्वितीयेऽर्थवादमन्त्रौ। अनेनैव क्रमेण स्वयमपि विचारयिष्यन्

वेदं विभजते **सचेति** । **द्विविधो** द्व्यंशः द्विभागः भागद्वयवानित्यर्थः । मन्त्रो रूपं स्वरूपं यस्य स एको भागः । ब्राह्मणं रूपं यस्य सोऽपरो भागः । मन्त्रब्राह्मणरूपाभ्यां द्वाभ्यां भागाभ्यां घटितस्स वेद इति **घट्टार्थः** । विभागवाक्ये प्रथमं मन्त्रस्योपादानात्तस्य प्रथमविचार्यत्वभ्रमं वारयति **तत्रेति** । तत्र मन्त्रब्राह्मणयोर्मध्ये । **प्रयोगेति** । प्रयोगकालिका यागानुष्ठानकालवर्तिनो ये अर्थाः कर्तव्यपदार्थाः तेषां स्मरणहेतुतयेत्यर्थः । प्रयोगकालिकं यदर्थानां स्मरणं तद्धेतुतयेति वा । **उपयोग** उपकारकत्वम् । यागापेक्षितोपकारजनकत्वेन सार्थक्यमित्यर्थः । ब्राह्मणस्वरूप-मवगमयन्नाह (४) **विधायकमिति** । **विधायकं** पुरुषाणां प्रवर्तकम्। प्रवर्तनाबोधकलिङादिप्रत्ययघटितमित्यर्थः । एवं ब्राह्मणस्वरूप-परिचयार्थमुक्तस्य विधायकवाक्यत्वस्य ब्राह्मणलक्षणत्वं मन्यमानः कश्चित् **वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती**त्याद्यर्थवादानां मन्त्रत्वप्रसिद्ध्यभावेन मन्त्रत्वाभावात् विधायकवाक्यत्वरूपब्राह्मणलक्षणस्य अभावेन ब्राह्मणत्वस्याप्यभावे वेदत्वमेव न स्यादिति यदि शङ्केत तस्य तां शमयितुमाह **ब्राह्मणेति** । ब्राह्मणस्य शेषोऽङ्गमित्यर्थः । अङ्गं हि प्रधानस्योपकरोति । तद्वत् ब्राह्मणापेक्षितप्राशस्त्यप्रतीतिरूपोपकारं जनयन्नर्थवादो ब्राह्मणस्याङ्गं भवति । एवञ्च वायव्यं श्वेतमालभेत भूतिकाम इति ब्राह्मणवाक्यघटकानां यत्किञ्चिद्विशेषणसमर्पकाणां श्वेतादिपदानामिव प्राशस्त्यरूपविशेषण-समर्पकस्योक्तार्थवादस्य ब्राह्मणत्वमस्त्येवेत्युक्ताशङ्कापरिहारः । अस्यैव **सूचीकटाहन्यायेन** प्रथमनिरूपणशङ्कां वारयति **तस्येति** । **विधेयेति** । विधेयस्य प्राशस्त्यं तस्य [illegible] जननं तदेव द्वाः तया । प्राशस्त्यम्

अतिशयितफलजनकत्वम् । **विधीति** । विधिरूपं वाक्यं विधेर्वाक्यं वा विधिवाक्यम् तेनैकवाक्यता तया । तेन सह एकवाक्यत्वं नाम तदर्थान्वितार्थबोधकत्वम् ॥ विधिवाक्यैरनुष्ठेयतयाऽवगतानामर्थानां स्मरणमात्रजनकत्वेन अज्ञातज्ञापकत्वाभावात् **मन्त्राणामुपयोग** इति पूर्वमुक्तम् । प्रकारान्तरेणाज्ञातस्यैव प्राशस्त्यस्यार्थवादेन ज्ञापनात् **तस्य प्रामाण्य**मित्यत्रोक्तमिति विभावनीयम्। **मन्त्राणामुपयोग इति वक्ष्यत** इत्येतत्समुच्चयाय **इति च वक्ष्यत** इति चकारः।

विधिवाक्यं निरूपयितुं विभजते तच्चेति। विधिवाक्यप्रमेयं त्रेधा भवति - यागादिरूपं वा कर्म, द्रव्यदेवतादिरूपो वा गुणः, स्वर्गपुत्रादिरूपं वा फलमिति। एषु त्रिषु एकैकमात्रविधायकतया प्रथमं विधिवाक्यस्य त्रयो भेदाः। पुनः गुणफलयोः गुणकर्मणोः कर्मफलयोरिति द्वयोर्द्वयोः प्रमापकतया त्रयो भेदाः । पुनश्च त्रयाणामपि प्रमापकतया एको भेदः । आहत्य सप्त । अत्र अन्तिमौ द्वौ भेदौ आदिपदेन सङ्गृह्णन् अन्यान् पञ्च भेदान् निर्दिशति **कर्मोत्पत्तीति** । विभक्तानि विधिवाक्यानि क्रमेण निरूपयन् आदौ कर्मोत्पत्तिवाक्यं निरूपयति (५) **तत्रेति**। स्वेतरव्यावृत्ताकारेण परिच्छिन्नं कर्मेत्यर्थः। लक्ष्यमाह **यथेति** । लक्ष्ये लक्षणसङ्गतिमाह **अत्रेति** । अग्निहोत्रमिति होमोऽग्निहोत्रहोमः ।

ननु गुणविधायकवाक्यस्य गुणवाक्यमितिवत् कर्मविधायक-वाक्यस्य कर्मवाक्यमित्येव कथं व्यवहारो न क्रियते किमिति कर्मोत्पत्तिवाक्यमित्युच्यते इति चेत्। श्रूयताम्। कर्मणो द्वेधा विधिर्भवति। क्वचित् विजातीयोऽयं यागः कर्तव्य इति इतरव्यावृत्ताकारेण

परिच्छिन्नकर्मस्वरूपमात्रबोधनं क्रियते । यथा अग्निहोत्रं जुहोतीत्यत्र । इयमेवोत्पत्तिरित्युच्यते । एवमवगतस्य कर्मणः इदं फलं भवतीति क्वचित्फलविशेषमात्रबोधनम् । यथा वक्ष्यमाणे अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्मिन्वाक्ये । अयमेव विनियोग इत्युच्यते । तत्र विनियोगवाक्येऽपि कर्मण एव विधिः । न तु फलस्य । तस्य स्वयं पुरुषैरभ्यर्थ्यमानत्वात् । पुरुषार्थस्य हि अन्यत् साधनं कर्तव्यतया बोधनीयम् । न तु यागार्थं पुरुषार्थफलं भवतीति कर्मण एव विधिः नोद्देश्यस्य फलस्य । एवंसति कर्मस्वरूपमात्रबोधकं वाक्यं यदि कर्मविधायकत्वेन कर्मवाक्यमित्य-भिधीयेत तर्हि फलवाक्यमित्यभिधीयमाने फलबोधकवाक्येऽपि कर्मविधानात् कर्मवाक्यत्वं स्यादिति तद्वारणाय विनियोगविधिव्यावृत्तो-त्पत्तिघटनेन कर्मोत्पत्तिवाक्यमिति व्यवहार इति ।

ननु सगुणकर्मोत्पत्तिवाक्येऽपि कर्मोत्पत्तेस्सत्वात् कथं पृथग्विभाग इति चेन्न । कर्मोत्पत्तिमात्रविधायकत्वस्य प्रकृते विवक्षितत्वात् ।

गुणवाक्यं निरूपयति **विहित** इति । **यथेति** । होमोद्देश्यका दधिकरणिका भावना विधिविषय इति बोधः । अत्राग्निहोत्रं जुहोतीत्यनेन विहितं होमरूपं कर्मोद्दिश्य दधिरूपस्य गुणस्य विधानादिदं गुणवाक्यम् । अत्रापि गुणमात्रविधायकत्वं विवक्षितम् । तेन सगुणकर्मोत्पत्तिवाक्यस्यापि न गुणवाक्यत्वापत्तिः । एतदर्थमेव **विहिते कर्मणी**त्युक्तं न तु केवलं कर्मणीति । विहित इति हि भूतकालवाचि क्तप्रत्ययघटिततया एतद्वाक्यप्रवृत्तिप्राक्कालप्रवृत्त विधिविषयत्वमाचष्टे । तेन वाक्यान्तरप्राप्त-कर्मोद्देशेनेत्यर्थलाभान्नोक्तो दोष इति । **अन्यदत्र परिष्कारे** द्रष्टव्यम् ।

(६) **उद्देश्यत्वं नामेति** । ननु अत्रोद्देश्यत्वस्य होमगतस्य पूर्वमनुक्तत्वात् अधस्तादुक्तस्य निरूपणार्थमिव **अत्रोद्देश्यत्वं नामे**त्यारम्भो न युज्यत इति चेन्न। **विहिते कर्मणी**त्यत्र सप्तम्योद्देश्यत्वस्य प्रतिपादितत्वात्। **मानान्तरेति** । प्रमाणान्तरेत्यर्थः। वाक्यान्तरेति फलितम् । **विधेयेति** । विधेयस्यान्वयोऽस्मिन्नस्तीति विधेयान्वयी तत्तया । विधेयप्रतियोगिक अन्वयानुयोगित्वेनेत्यर्थः । सचान्वयः स्वविषयकभावनाभाव्यत्वं स्वविषयककृतिकर्मत्वम्। स्वविषयिण्या कृत्या ईप्सितत्वमिति यावत्। अत्र विधेयान्वयित्वमेवोद्देश्यत्वम्। मानान्तरप्राप्तत्वे सति निर्देश्यत्वमिति तु अनन्तरवक्ष्यमाणानुवाद्यत्वकथनमात्रम्। तस्य किमर्थमत्र कथनमिति चेत् अनुवाद्यत्वे सत्येव विधेयान्वयित्वरूपमुद्देश्यत्वं प्रत्येतुं शक्यते नान्यथेति ज्ञापनायेति ध्येयम्।

नन्वेवं सति प्रथममनुवाद्यत्वं निरूप्य पश्चादुद्देश्यत्वं निरूपणीयमिति चेन्न । विहिते कर्मणीत्यत्र सप्तम्योद्देश्यत्वस्यैवोपस्थितत्वात् तन्निरूपणे कृते तत्प्रसङ्गादेवान्यनिरूपणात्।

**तस्यैवेति** । यस्योद्देश्यत्वमुक्तम् तस्यैवेत्यर्थः । एतच्च निरूपितोद्देश्यत्वसमानाधिकरणत्वेन उपस्थितत्वादनुवाद्यत्वं निरूप्यत इति सङ्गतिसूचनायोक्तमिति विभाव्यम् । उद्देश्यत्वेनोपस्थितं त्रिकमुक्त्वा विधेयत्वेनोपस्थितं त्रिकान्तरमाह **दध्यादेस्त्विति**। तुकार उक्तवक्ष्यमाणयोर्विरोधं द्योतयति। विधेयत्वमज्ञातज्ञाप्यत्वम्। **अनुष्ठीयमानत्वाच्चे**त्यत्र **मानान्तरप्राप्तत्वा**दित्यादिपञ्चम्यन्तार्थ हेतुसमुच्चयार्थश्चकारः । उपादेयत्वञ्चेत्यत्र विधेयत्वादिसाध्यसमुच्चयार्थः । अत्र त्रिकद्वये

उद्देश्यत्वोपादेयत्वयोः अनुवाद्यत्वविधेयत्वयोः प्राधान्यगुणत्वयोश्च निरूप्यनिरूपकभावः। तत्र पूर्वत्रिके उद्देश्यत्वस्य प्रथमं निरूपितत्वेनान्यत्र तत्प्रतियोगिन उपादेयत्वस्य प्रथमनिरूपणीयत्वेऽपि गुणवाक्ये गुणनिष्ठविधेयत्वस्यैवोपस्थितत्वेन अनुवाद्यत्वप्रतियोगिनोऽपि तस्यैवात्र प्रथमं निरूपणम्। एतदनन्तरञ्च पूर्वत्रानुवाद्यत्वानन्तरनिरूपितप्राधान्य-प्रतियोगिनो गुणत्वस्य। अन्ये च स्वस्थानभ्रष्टस्योपादेयत्वस्येति सूक्ष्मेक्षिकानुभवः।

अथ उद्देश्यत्वविधेयत्वयोः परस्परं निरूप्यनिरूपकभावविरहे इदमुद्दिश्य इदं विधीयत इति कथं शास्त्रकृतां व्यवहारः। इदमनूद्य इदं विधीयते इदमुद्दिश्य इदमुपादीयत इत्येव हि वक्तव्यमिति चेदुच्यते। विधानं नाम कर्तव्यतया बोधनम्। विधीयत इति कर्तव्यतया बोध्यत इत्यर्थः। इदमेव कर्तव्यत्वमुपादेयत्वमित्युच्यते। तत्र यदा यागमनूद्य गुणो विधीयत इत्युच्यते तदाऽनूद्यपदार्थस्य विधीयत इत्यत्र धात्वर्थे विशेष्यभूते बोधनेऽन्वयः। यागानुवादपूर्वकं गुणकर्तव्यताबोधनमित्यर्थः। यदा तु यागमुद्दिश्य गुणो विधीयत इत्युच्यते तदा उद्दिश्यपदार्थस्य धात्वर्थघटके विशेषणभूते उपादेयत्वापरपर्याये कर्तव्यत्वेऽन्वयः। यागोद्देशेन यदुपादेयत्वं गुणस्य तद्बोधनं क्रियत इत्यर्थः। तस्मादुपपन्नः शास्त्रकृतां व्यवहार इति।

ननु अनुवाद्यत्वलक्षणे मानान्तरप्राप्तस्येत्युक्तम्। तदसङ्गतम्। नहि **अग्निहोत्रं जुहोतीति** मानान्तरात् होमस्य दण्डादिव घटस्य प्राप्तिर्भवति तस्मादसङ्गतमित्याशङ्क्य विवक्षितमर्थमाह **अत्रेति**। कारकहेतोर्दण्डात् घटस्य प्राप्तिरुत्पत्तिः। ज्ञापकहेतोर्वाक्यात् होमस्य प्राप्तिर्ज्ञानमेवेति

नासङ्गतिरिति भावः। क्रमप्राप्तं तृतीयं फलवाक्यं निरूपयति **उत्पन्नस्येति**। फलस्य विधानासम्भवात् **फलसम्बन्धस्य बोधक** इत्युक्तम् । फलसम्बन्धबोधकविधित्वमात्रोक्तो फलाय गुणवाक्येऽतिप्रसङ्गः । तत्रापि गुणस्य फलसम्बन्धबोधनात् । **अतः कर्मण इति** । एवमपि वक्ष्यमाणे कर्मोत्पत्तिसहितफलसम्बन्धबोधके उद्भिदा यजेतेति वाक्येऽतिप्रसङ्गः । अत **उत्पन्नस्येति** कर्मविशेषणम्। **अस्यापि** क्तप्रत्ययान्ततया विहिते कर्मणीत्यत्रोक्तप्रकारेण वाक्यान्तरविहितत्वार्थकत्वं बोध्यम् । तेन उत्पद्यमानस्य कर्मणः फलसम्बन्धबोधके तस्मिन् वाक्ये नातिप्रसङ्गः । ननु **अग्निहोत्रं जुहुयात् स्वर्गकाम** इति फलवाक्ये पुनर्जुहुयादिति विधिश्रवणेन अग्निहोत्रं जुहोतीति वाक्यविहितहोमात् भिन्नो होमो विधीयताम् । तस्यैव फलसम्बन्ध उद्भिद्वाक्य इवास्तु । इत्याशङ्कापरिहारायोक्तं **फलाकाङ्क्षाया** मिति । **अयं भावः** - आकाङ्क्षितस्य हि विधानं श्रेयः। अन्यथा फलवाक्ये विधिगौरवापादककर्मान्तरविधानं कर्मोत्पत्तिवाक्ये **विश्वजिन्न्यायेन** फलान्तरकल्पनञ्चापद्येत । तस्मात् फलसम्बन्धबोधनमिति युक्तमिति । फलसम्बन्धबोधकं वाक्यं फलवाक्यमिति वक्तव्ये तद्बोधको विधिः फलविधिरित्युक्तिरस्मिन् प्रकरणे सर्वत्र वाक्यं वाक्यमिति विधिवाक्यं विवक्षितमिति ज्ञापनार्था । अत एवैतल्लक्षणसङ्गमनान्ते **फलवाक्यमिद** मित्याह ॥ (७) **भावयेदिति** । कुर्यादित्यर्थः ।

चतुर्थं फलाय गुणवाक्यं निरूपयति **प्राप्तमिति** । होमाश्रितत्वं नाम होमवृत्तित्वम् । तस्य च दधनि बाधितत्वात् होमाश्रितेनेत्यस्याभिप्रेतार्थमाह (८) **होमाश्रितेन होमकरणीभूतेनेति** । होमाश्रितेन होमसम्बन्धिनेत्यर्थः । दधनि च होमसम्बन्धः तत्करणत्वरूप एवेति भावः ।

व्युत्पत्त्यै अस्यैव विधेर्नामान्तरमाह। **अयमेवेति**। **अपिचे ति** समुदायश्चार्थे। पञ्चमं सगुणकर्मोत्पत्तिवाक्यमाह **द्रव्येति**। द्रव्यदेवतादिभिर्गुणैर्विशिष्टस्य कर्मणो विधायकमित्यर्थः। **सगुणेति**। गुणेन सह वर्तत इति सगुणम् सगुणञ्च तत् कर्म च सगुणकर्म तस्योत्पत्तिः तस्या वाक्यम् सगुणकर्मोत्पत्तिवाक्यम्। **आदिपदसङ्गृहीतं** षष्ठं विधिवाक्यं निरूपयति **क्वचिदिति**। **उद्भिदेत्यस्य** गुणविशेषपरत्वभ्रमं वारयति (९) **उद्भिन्नामक इति**। उद्भिदिति नाम यस्य सः। अस्य कर्मोत्पत्तिवाक्यत्वमावश्यकमिति प्रतिपादयितुमाह **वाक्यान्तराविहित एवेति**। पुरुषवाचकस्यैव पशुकामपदस्य फलसमर्पणे तात्पर्यमिति द्योतयितुं पुरुषवाचकत्वेनैव तत्पदमनुवदति **पशुकामस्येति**। पशौ कामो यस्य तस्य पुरुषस्येत्यर्थः। तात्पर्यार्थमाह **पश्विति**। पशुश्च तत्फलञ्च पशुफलम्। तस्मै।

अथ कर्मोत्पत्तिवाक्यादीनामिव अस्यापि विभागवाक्ये साक्षान्निर्देशमकृत्वा किमित्यादिपदेन ग्रहणं कृतमिति चेत् तथा करणे को दोषः। न दोषः कश्चित्। सति प्रकारान्तरे एकप्रकारानुसरणे नियामकं किञ्चिदभिधानीयमिति चेत् ग्रन्थकर्तुरिच्छैवेति गृह्यताम्। अथ विभागस्य न्यूनाधिकव्यवच्छेदेन इयत्तापरिच्छेदकत्वात् तत्रादिपदेन केषाञ्चित् ग्रहणे तत्परिच्छेदाभाव एव दोष इति चेत् सत्यम् इयत्तापरिच्छेदफलको विभागश्चेदत्र क्रियेत तर्हि भवदुक्तो दोषः स्यादेव। नत्वेतदस्ति। इयत्तापरिच्छेदमन्तरैव कतिपयविधिवाक्यनिरूपणमात्रतात्पर्येण निरूपणीयानां निर्देशमात्रस्य बुद्धिसौकर्याय प्रथमं कृतत्वात्। अत एव पञ्च सप्तेति संख्याविशेषमनुपादाय **तच्चानेकविध** मित्येवोक्तम्। नन्वेवं सति निर्दिष्टेषु निरूपितेषु अनन्तरं यद्वक्तव्यं तदेव वक्तव्यम्। न

त्वादिपदार्थस्य कस्यचिन्निरूपणं कर्तुमुचितम्। निरूपणीयानां निर्देशे कृते यावन्त्येव निर्दिष्टानि तावद्विधान्येव विविधिवाक्यानीति बुद्धिः कस्यचिन्मा भूदित्येवमर्थमादिपदेन केषाञ्चित् ग्रहणं न तु निरूपणीयतयेति हि भवतोऽभिप्रायं पश्यामः। तदत्र आदिपदसंगृहीतषष्ठविधिप्रकारनिरूपण-मनुचितमिति चेत् सम्यक् पृष्टम्। तत्र ब्रूमः - तदनिरूपणबुध्यैव प्रथमं साक्षादनिर्दिश्यादिपदेन तस्योपादानम्। तथाऽपि निर्दिष्टेषु पञ्चस्वपि निरूपितेषु निर्देशवाक्ये यदादिपदमुपात्तं तेन किं गृह्यत इति शिष्यप्रश्ने सति षष्ठमपि विधिवाक्यमन्ते निरूपणीयमासीदिति। नचैवं तर्हि **सौर्यञ्चरुं निर्वपेत् ब्रह्मवर्चसकाम** इति गुणकर्मफलत्रितयबोधकस्यापि वाक्यस्यादिपदेन सङ्गृहीतत्वात् तस्य कथमनिरूपणमिति वाच्यम्। आदिपदसङ्गृहीतानां सर्वेषामेव निरूपणीयत्वे निर्बन्धविरहात्। कस्यचिदेकस्य निरूपणेनैव तत्सार्थक्ये बोधिते शिष्यजिज्ञासानिवृत्तेः। **'अग्निहोत्रं जुहोति', 'सोमेन यजेत', 'उद्भिदा यजेते'**त्यादाविव उदाहृतसौर्यवाक्ये, विधेयस्य कर्मणोऽनुमानपुरस्सरं निर्वपतिधातुना लक्षणीयत्वस्योपरि व्युत्पादयिष्यमाणत्वेन, कर्मविधायकत्वस्य अस्पष्टत्वाच्चेत्यलम्।

पुनरपि प्रकारान्तरेण विधिवाक्यविभागं मनसि कृत्वा तत्र कर्मोत्पत्तिवाक्यस्यैवोत्पत्तिविधित्वमिति स्पष्टत्वात् गुणवाक्ये गुणस्य कर्मणि फलवाक्ये कर्मणः फले च विनियोगेन विनियोगविधित्वस्यापि स्पष्टत्वात् फलवाक्य एव स्वर्गकामोऽग्निहोत्रहोमेऽधिकारी पशुकाम उद्भिद्यागेऽधिकारीत्याधिकारबोधादधिकारविधित्वस्यापि स्पष्टत्वाच्च प्रयोगविधिमात्रं व्युत्पादयति **प्रधानेति**। प्रधानस्य कर्मणो विधिः

विधिवाक्यमित्यर्थः । अङ्गानां विधयः तैः । अङ्गविधिवाक्यैरेकवाक्यता नामाङ्गविधिविहितार्थान्वितार्थबोधकत्वं तेनेत्यर्थः । महावाक्यतामापन्नः प्राप्त इत्यर्थः । महावाक्यस्वरूपमन्ते दर्शयिष्यति ॥ **सर्वेति** । सर्वाङ्ग-विशिष्टस्य प्रधानस्य कर्मणो यः प्रयोगः तद्विधायकत्वादिति । सर्वपद प्रयोजनं वक्ष्यते । एवं सामान्यत उक्तं प्रयोगविधित्वम् उदाहरणविशेषेण विशदयितुं प्रथमं किञ्चित् प्रधानविधिवाक्यं पठति **यथेति** । प्रधानविधि-वाक्यस्याङ्गविधिवाक्यैः एकवाक्यतायामाकाङ्क्षायाः कारणत्वात् तत्सद्भावं प्रतिपादयितुं प्रधानविधिवाक्यार्थमाह (१०) **अत्रेति** ।

ननु पूर्वं फलवाक्योदाहरणतयोपात्तस्यास्यैव वाक्यस्य स्वर्गकामः पुरुषोऽग्निहोत्रहोमं भावयेदित्यर्थो वर्णितः । तत्कथमिदानीम् अग्निहोत्रहोमेन स्वर्गं भावयेदित्यर्थो वर्ण्यत इति चेत् अयमेवार्थः तात्त्विकः, यथाश्रुतार्थस्तु पूर्वमुक्त इति तत्रैव परिष्कारेऽस्माभिरुक्तम् ।

**व्रीहीन् प्रोक्षणेन भावयेत्, स्वाध्यायमध्ययनेन भावयेत्** इत्यादौ व्रीहिस्वाध्यायादीनामिव स्वर्गस्य प्राप्यसंस्कार्यादिकर्मत्वं वारयन्नाह **भावयेदिति** । भावयतेः ध्यानाद्यर्थान्तरपरत्वस्यापि सत्वात् प्रकृतोपयोगिनमर्थमाह भावयेदिति इत्यपि केचिदवतारयन्ति । एतद्ग्रन्थाधिकारिणो भावयतिपदार्थव्युत्पत्तिविरहस्य सम्भावितत्वात् तद्व्युत्पादनं करोति भावयेदितीत्यवतारणं तु नास्मभ्यं रोचते । नन्वग्निहोत्रं जुहुयात्स्वर्गकाम इति वाक्यस्य अग्निहोत्रहोमेन स्वर्गं भावयेदित्यर्थ इत्युक्तम् । तत्र भावयेदित्यस्य वाचकं पदं नोपलभामहे । तत्कस्यायमर्थ इत्याशङ्कायामाह **कुर्यादिति** । कुर्यादित्यनेन यावदुक्तं भवति तावदुक्तं

भवति भावयेदित्यनेनेति वाक्यशेषपूरणेनार्थो बोध्यः। भावयेदिति पदं कुर्यादिति पदेन समानार्थकमिति फलितम् । एवञ्च पचेत् गच्छेदित्यादौ पाकं कुर्यात् गमनं कुर्यादित्यर्थावगमेन लिङाख्यातस्य कुर्यादित्यर्थवाचकत्वात् कुर्यात्पदपर्यायभावयेत्पदप्रतिपाद्यार्थवाचकत्वम् अपि तस्य भवतीति तदर्थ एव **भावये**दित्यनेनोक्त इति भावः ।

नन्वत्र प्रथममेव स्वर्गं कुर्यादिति व्याख्यानं कस्मात् न कृतम्। अनतिप्रसिद्धेन भावयेदित्यनेन प्रथममर्थमभिधाय पुनस्तदर्थस्य लिङ्वाच्यत्वसमर्थनेन किमिति क्लेशोऽनुभूयत इति चेत् ब्रूमः । अस्मिन् शास्त्रे भूरिशः आख्यातार्थस्य भावनापदेनैव प्रतिपादनात् तद्व्युत्पादन-हेतोरेवमुक्तमिति । अथ पूर्वं फलवाक्यनिरूपणावसरेऽपि भावयेदित्येवं लिङर्थविवरणात् तत्रैव तद्व्युत्पादनमकृत्वा किमर्थमत्र कृतमिति चेत् तस्य विधिवाक्यस्य तात्त्विकार्थकथनावसर एव तद्युक्ततरमिति गृहाण ।

एवमर्थमभिधाय तत्र जायमानाकाङ्क्षास्वरूपमाह **अत्रेति कथम्भावेति**। कथं कीदृश इत्यर्थः । तस्य भावः कथम्भावः । तस्याकाङ्क्षा कथम्भावाकाङ्क्षा। कथम्भाव इत्याकाङ्क्षा कथम्भावा-काङ्क्षेत्यन्ये। करणेन साध्योत्पादने विहिते कथम्भावाकाङ्क्षासद्भावे लौकिकं निदर्शनमाह **यथेति**। द्विप्रकारको **द्विधा**। **द्विधैव** द्वैधम्। अद्वैधं द्वैधं भवति द्वैधीभवति द्वैधीभूयते इति द्वैधीभावः भावे घञ् । एवमेकवाक्यतानिर्वाहिकाया आकाङ्क्षायाः सद्भावमुपपाद्यानन्तरं तत्प्रयुक्तया परस्परार्थान्वयरूपया एकवाक्यतया निष्पन्नं महावाक्यं प्रतिपादयन् प्रथमं लौकिकनिदर्शनस्थले प्रतिपादयति **अत्रेति**। **उद्यमनेति**। उद्यमननिपातनादिः सहाय उपकारको यस्य तेन।

सहायेनेत्यस्यानन्तरं कुठारेण द्वैधीभावं कुर्यादिति शेषः । इतिशब्दस्यानन्तरं महावाक्यमिति शेषः । तथा च कुठारेण द्वैधीभावं कुर्यादिति प्रधानवाक्यस्य कुठारमुद्यच्छति निपातयतीत्याद्यङ्गवाक्यानाञ्च आकाङ्क्षावशात् परस्परार्थान्वयेनैकवाक्यतायामुद्यमननिपातनसहितेन कुठारेण द्वैधीभावं कुर्यादिति । महावाक्यं गम्यत इत्यर्थः । प्रकृतस्थले महावाक्याकारं प्रतिपादयति **तद्वदिति** । **तद्वदित्यस्य अत्रापीत्यस्य** च **कल्पितेन महावाक्येने**त्यत्रान्वयः । **प्रणयतीति** । आहिताग्निना नित्यमग्निर्ध्रियते । स यदा यागं करोति तदा तस्मान्नित्यं ध्रियमाणादग्नेरेकदेशमादाय यागवेदीमानयति तदिदं प्रणयनमित्युच्यते । **इत्याद्यङ्गेति** । आदिना **'उपलिम्पन्त्यायतनानि'** इत्यायतनशब्दवाच्याग्निनिधानस्थानोपलेपनविध्यादिकं गृह्यते । क्रमेण क्रियमाणानां क्रियारूपाणां प्रणयनाद्यङ्गानां प्रधानस्य चाग्निहोत्रहोमस्य स्वरूपेण साहित्यासम्भवादनुपदं वक्ष्यमाणप्रकारेणोपकारद्वारैव साहित्यमिति मत्वाऽङ्गकलापसहितेनेत्यनुक्त्वा तज्जनितोपकारसहितेनेत्युक्तम् । अत्राग्निं प्रणयतीत्यारभ्याङ्गविधिविहितेत्येवमन्तं प्रणयनादेरुपलक्षणविशेषणम् । प्रणयनेत्यारभ्य कुर्यादित्यन्तं प्रकृतेऽङ्गविधिवाक्यानां प्रधानविधिवाक्यस्य चैकवाक्यतया निष्पन्नमहावाक्यस्वरूपमिति विविच्यावधारणीयम् । **कुर्यादितीति** । इत्येवरूपेणेत्यर्थः । नन्वाकाङ्क्षावशेनाग्निहोत्रवाक्यस्य अग्निं प्रणयतीत्यादिभिरेकवाक्यतेत्युक्तम् । तत्र को नियमः । समिधो यजतीत्यादिप्रयाजाद्यङ्गविधिवाक्यैरप्येकवाक्यता किं न स्यात् । यदि न तैः प्रणयनादिविधिभिर्वा कथं स्यादित्याशङ्कायामाह **प्रकरणेति** । प्रकरणेन कल्पितं तेन । कल्पितम् अनुमितम् । कथम्भावाकाङ्क्षायां सत्यां येषामङ्गविधीनां

सन्निधिर्भवति तैरेव सहैकवाक्यता प्रधानविधेः न त्वन्यकर्मप्रकरणपठितैः प्रयाजादिविधिभिः। तेषामन्यस्मिन् प्रकरणे पठितानामन्यस्मिन् प्रकरणेऽनुपस्थिततत्वादिति प्रणयनादिसन्निधापनद्वारा उक्तविधमहावाक्यकल्पने प्रकरणं नियामकमिति भावः । **महावाक्येनेत्यन्तेन** ग्रन्थेनैतत्फक्किकारम्भोक्तस्य **प्रधानविधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतामापन्नस्सन्** इत्यंशस्य विवरणं कृतम् । तदुपरितनमंशं विवृणोति **स्वर्गायेत्यादिना** । वक्ष्यमाणाक्षेपप्रतिपत्तिसौकर्याय पुनरिह स्वर्गायेत्युक्तम्। **इतिशब्देन** तत्रत्यपञ्चम्यर्थ उक्तः। **एतादृश इति**। एवंरूप इत्यर्थः । ननु दर्शपूर्णमासप्रकरणे **व्रीहिभिर्यजेत, यवैर्यजेतेत्युभय**-विधावपि तयोर्विकल्पेनाङ्गत्वमिति यथा व्रीहियवान्यतरसहितेन यागेनेष्टं भावयेदिति प्रयोगविधिः कल्प्यः तथाऽत्र प्रकरणपठितेष्वङ्गेष्वन्यतमसहितेन अग्निहोत्रहोमेनेति कथं न कल्प्यते किमर्थमङ्गकलापसहितेनेत्युच्यते इति नाशङ्कनीयमित्यभिप्रेत्याह **सर्वमिति**। **अयमाशयः**- व्रीहियवयोर्यागस्वरूपनिष्पत्तिरूपद्वारैकत्वाद्युक्तो विकल्पः । अत्र तु प्रणयनादीनां सन्निपत्योपकारकाणामग्निसंस्कारादिद्वारभेदात् तत्तत्सम्पादनाय समुच्चयः स्पष्ट एव । **प्रणयनादिक** मित्यत्रादिपदसंगृहीतानाम् आरादुपकारकाणामपि भिन्नभिन्नादृष्टद्वारकत्वात् तावददृष्टनिष्पत्तिहेतोः समुच्चय आवश्यक इति। अन्यत् परिष्कारे।

स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयत इति यदुक्तं तदाक्षिपति (१२) **नन्विति**। **आश्विति**। अतिशयेनाशुः आशुतरः स चासौ विनाशश्च आशुतरविनाशः स एषामस्तीत्याशुतरविनाशीनि तेषाम्। **स्वर्गादीत्यादिना** नरको गृह्यते। शीघ्रं विनश्यतां कर्मणां मरणानन्तरभाविस्वर्गनरकरूपकार्य-

पूर्ववृत्तित्वाभावात् स्वर्गनरकसाधनत्वं नोपपद्यते । एवं साधनत्वाभावे चाग्निहोत्रसंज्ञकर्मविशेषप्रयोगस्य स्वर्गोद्देशेन विधानमनुपपन्नमित्युक्तं भवति। **विहितेति**। विहितानि च निषद्धानि च विहितनिषिद्धानि। तानि च तानि कर्माणि च विहितनिषिद्धकर्माणि तेषाम्। **तत्तद्वाक्यैरिति**। तानि तानि तत्तानि तत्तानि च तानि वाक्यानि च तत्तद्वाक्यानि। तैः। **अग्निहोत्रं जुहुयात् स्वर्गकाम** इत्यादिविधिवाक्यैः **न कलञ्जं भक्षयेदि**त्यादिनिषेधवाक्यैश्च। **तत्तत्फलेति** । स्वर्गादिरूपेष्टफलनरकादिरूपानिष्टफलेत्यर्थः । **कालान्तरेति**। कालान्तरभावीनि यानि फलानि तन्निरूपितसाधनत्व-निर्वाहार्थमित्यर्थः । **अन्तरा** कर्मफलयोर्मध्ये । तज्जन्यत्वे सति तज्जन्यफलजनकत्वरूपव्यापारत्वेनेत्यभिसन्धिः । **पुण्येति** । विहितकर्मजन्यमपूर्वं पुण्यम्, निषिद्धकर्मजन्यं पापमिति। **कल्प्यत इति**। अर्थापत्तिप्रमाणेनेति शेषः। यथा दिवा भोजनमकुर्वतो देवदत्तस्य पीनत्वमन्यथा नोपपद्यत इति पीनत्वान्यथाऽनुपपत्तिरूपया अर्थापत्त्या रात्रिभोजनं कल्प्यते तद्वत् क्षणिकानामग्निहोत्रादिकर्मणां कालान्तरभावि-फलजनकत्वमाप्ततमेन वेदेनावगतमन्यथा नोपपद्यत इति श्रुतफलसाधन-त्वान्यथानुपपत्तिरूपया अर्थापत्त्या कर्मफलयोर्मध्ये व्यापारत्वेनापूर्वं कल्प्यते। तथा च प्रकृते अग्निहोत्रहोमस्वर्गयोर्मध्ये अपूर्वस्य कल्पनात् अग्निहोत्रस्य स्वर्गसाधनत्वानुपपत्तिरिति भावः । अत्राशुतर-विनाशिनोऽग्निहोत्रहोमस्य कालान्तरभाविस्वर्गसाधनत्वानुपपत्तेरित्या-क्षेपहेतौ तस्य **अग्निहोत्रं जुहुयात् स्वर्गकाम** इति वाक्येन स्वर्गसाधनत्वेऽवगते आशुतरविनाशिनस्तस्य कालान्तरभाविस्वर्ग-साधनत्वोपपत्त्यर्थं मध्ये किञ्चिदपूर्वं कल्प्यत इति समाधाने च

प्रकृतस्थलानुरोधेन विशेषेण वक्तव्ये विहितनिषिद्धसर्वकर्मसाधारण्येनाक्षेपहेतोः तन्निरासस्य च प्रतिपादनं व्युत्पादनार्थमिति वेदितव्यम् ।

ननु कर्मफले अन्तरा अपूर्वकल्पनेन क्षणविनाशिनः कर्मणः स्वर्गोत्पत्त्यव्यवहितपूर्वकालवृत्तित्वरूपस्य स्वर्गसाधनत्वस्यकथमुपपत्तिरिति अत्राह **ततश्चेति** । अपूर्वकल्पनच्चेत्यर्थः । कारणानां कार्याव्यवहितपूर्वकालवृत्तित्वं साक्षात्सम्बन्धेनैवेति न नियमः । अपि तु व्यापारघटितपरम्परासम्बन्धेनापि भवति । चक्रं भ्रामयित्वा दण्डस्यापनयनेऽपि घटोत्पत्तिदर्शनेन स्वजन्यभ्रमणघटितसम्बन्धेन दण्डस्य घटकारणत्वोपपादनात् । अतश्च कर्मणि क्षणभङ्गुरेऽपि तज्जन्यस्य तद्व्यापारभूतस्यापूर्वस्य स्वर्गोत्पत्तिपर्यन्तमवस्थानात् तद्घटितेन स्वजन्यापूर्ववत्वसम्बन्धेन कर्मणः स्वर्गसाधनत्वमुपपन्नमेवेति भावः । यागादेः स्वर्गसाधनत्वमपूर्वद्वारेत्यन्वयः । अपूर्वमेव द्वाः तया । द्वाः द्वारं व्यापार इत्यर्थः । यागादेः स्वर्गसाधनत्वमपूर्वप्रयोज्यम् अपूर्वघटितसम्बन्धनिर्वाह्यमिति निष्कृष्टार्थः । **यागादेरि**त्यादिना होमो गृह्यते । **न साक्षादिति** । समवायादिसाक्षात्सम्बन्धेन यागादिस्वरूपस्य स्वर्गसाधनत्वं नेष्टमित्यर्थः । एवं साधितस्यापूर्वस्य साधयिष्यमाणापूर्वान्तरेभ्यो व्यावृत्ताकारेण व्यवहारोपयोगिनीं संज्ञामाह **तदेवेति** । यागादेः स्वर्गादिफलसाधनत्वान्यथानुपपत्त्या कल्पितेमेव फलापूर्वमिति व्यवह्रियत इत्यर्थः । अपूर्वान्तरं साधयितुमुपक्रमते **तत्करणत्वञ्चेति** । **तत एवेति** । अङ्गरहितप्रधानमात्रजन्यफलापूर्वादेवेत्यर्थः। **आनर्थक्यापत्तेरिति** । निष्प्रयोजनत्वापत्तेरित्यर्थः । एवमपूर्वान्तरसाधनाय अर्थापत्तिमुपदर्शयन् आदावङ्गानां प्रधानस्य च वैशिष्ट्यरूपमनुपपद्यमानमर्थं प्रतिपादयामास ।

तत्रानुपपत्तिमेव शिष्याणां विस्पष्टग्रहणायाक्षेपरूपेण विशदीकरोति **नन्विति** । अपूर्वजनकत्वं फलापूर्वजनकत्वम् । अयुक्तत्वे हेतुमाह **आश्विति** । अयमाशयः - अङ्गवैशिष्ट्यं प्रधानस्य रूपवैशिष्ट्यमिव घटस्य समवायेन न भवति । न हि घटे रूपमिव प्रधानेऽङ्गं समवायेन वर्तते । क्रिययोः परस्परं समवायविरहात् । नापि कुण्डलवैशिष्ट्यमिव देवदत्तस्य संयोगेन भवति क्रिययोः संयोगविरहात्। अतोऽङ्गसाहित्यमेवाङ्गवैशिष्ट्यमिति वक्तव्यम् । साहित्यं नाम एकदेशवृत्तित्वरूपं सामानाधिकरण्यं वा एककालिकत्वरूपं समानकालिकत्वं वा । तत्र प्रधानस्य यजमान-कर्तृकत्वादङ्गानाञ्च ऋत्विक्कर्तृत्वात् सामानाधिकरण्यरूपं साहित्यं प्रधानस्य अङ्गानाञ्च न सम्भवति । अतः परिशेषादेककालवृत्तित्वमेव साहित्यमिति प्रकृते वक्तव्यम् । तच्च न युज्यते । प्रधाने कृते सद्य एव तस्य नाशात् उत्तराङ्गानुष्ठानसमये तदभावेन तेषामङ्गानां प्रधानस्य च एककाल-वृत्तित्वाभावादिति ।

ननु पूर्वाङ्गैरपि प्रधानस्य साहित्यं न युज्यते । तेषामपि क्षणिकानां सद्यो नष्टत्वेन प्रधानानुष्ठानकालेऽभावात् । तत्कथं तदनभिधायोत्तराङ्ग-साहित्यासम्भवमात्रं हेतुत्वेनाभिधीयत इति चेदुच्यते । पूर्वाङ्गसाहित्यं प्रधानस्य सम्भवत्येव । तथा हि - अनुपदमङ्गानामपि द्वारीभूता-पूर्वजनकत्वं वक्ष्यते । तेन क्षणिकानामङ्गानां सद्यः स्वरूपनाशेऽपि तदनन्तरं स्वजन्यापूर्वद्वारा सत्वमस्त्येव । तथा च तादृशापूर्वद्वारा प्राच्याङ्गसाहित्यं स्वकालेऽनुष्ठीयमानस्य प्रधानस्य निराबाधम् । प्रधानानुष्ठानानन्तरं तु उत्तराङ्गानां तज्जन्यापूर्वाणाञ्च सत्वेऽपि प्रधानस्वरूपस्य नष्टत्वात् न तस्योत्तराङ्गसाहित्यं सम्भवतीति । इदमभिप्रेत्यैव आशुतरविनाशिनामङ्ग-

प्रधानानां साहित्यासम्भवादिति सामान्यतो हेतुमनुपादाय उत्तराङ्ग-साहित्याभावसाधकहेतुप्रतिपादनाय प्रधानस्याशुतर विनाशित्व-विशेषणमुपात्तम् । न हि पूर्वाङ्गसाहित्याभावे प्रधानस्याशुतरविनाशित्वं हेतू भवितुमर्हति । पूर्वाङ्गानां क्षणिकत्वस्य प्रधानानुत्पत्तेश्च तत्र हेतुत्वात् । नापि सिद्धान्ते कथ्यमानमुत्पत्त्यपूर्वकल्पनं पूर्वाङ्गानां प्रधानस्य च साहित्यमुपपादयितुमीष्टे । तस्मादुत्तराङ्गसाहित्यमेव न सम्भवतीत्युच्यते । तद्द्वारा तु सर्वाङ्गसाहित्यमाक्षिप्तं भवतीति विभावनीयम् ।

विहितानामङ्गानां सार्थक्याय वेदेन सर्वाङ्गविशिष्टस्य प्रधानस्य फलापूर्वजनकत्वबोधनात् प्रधानेऽङ्गवैशिष्ट्यस्य च स्वरूपेणानुप-पन्नत्वात् श्रुतिबोधितसर्वाङ्गवैशिष्ट्यान्यथाऽनुपपत्तिरूपयाऽर्थापत्त्या प्रधानानुष्ठाना-नन्तरमुत्पत्तिसंज्ञं किञ्चिदपूर्वं जायत इति कल्प्यते । तच्च फलापूर्वोत्पत्ति-पर्यन्तं वर्तते । एवञ्च प्रयोगसमाप्तिपर्यन्तं यावन्त्यङ्गान्यनुष्ठीयन्ते तेषां सर्वेषां प्रधानानुष्ठानानन्तरजन्योत्पत्त्यपूर्वस्य च समकालिकत्वात् **स्वजन्योत्पत्त्य-पूर्वद्वारा** प्रधानस्याङ्गसाहित्यमुपपादितं भवतीति परिहरति (१३) **नेति** । **स्वरूपेणाङ्गसाहित्याभावे अपि** पूर्वपक्षाभिप्रायोऽनूदितः । अर्थापत्तिप्रमाणमुपपादयति **प्रधानस्येति** । पूर्वोक्तफलापूर्वापेक्षयाऽस्य भेदं स्फुटयन्नाह **प्रधानेत्यादि जन्यमित्यन्तम्** । प्रधानञ्च तत्कर्म च प्रधानकर्म परमञ्च तदपूर्वञ्च परमापूर्वम् प्रधानकर्म च परमापूर्वञ्च प्रधानकर्मपरमापूर्वे तयोः। **प्रधानमात्रेति** । मात्रशब्देनाङ्गवैशिष्ट्यं व्यवच्छेद्यम् । तथा च प्रधानकर्मफलयोर्मध्ये **क्लृप्तं साङ्गप्रधानजन्यं** फलापूर्वम् । अस्य कर्मणश्च मध्ये क्लृप्तमङ्गानपेक्षं प्रधानानुष्ठानानन्तरक्षण एव जायमानमुत्पत्त्यपूर्वमिति तयोर्भेद इति । **उत्पत्त्यपूर्वेति** पूर्वोक्तस्य व्युत्पत्तिमाह **उत्पत्तिनामकमिति** ।

नन्वेतावता इदमुक्तं भवति - प्रधानप्राक्कालिकाङ्गेष्वेकैकस्मिन्ननुष्ठिते एकैकमुत्पत्त्यपूर्वं जायते । अनन्तरं प्रधानेऽनुष्ठिते प्रधानोत्पत्त्यपूर्वमुत्पद्यते । तदनन्तरमुत्तराङ्गानामनुष्ठाने तावदङ्गोत्पत्त्यपूर्वाणि निष्पद्यन्ते । तत्र सर्वान्त्ये उत्तराङ्गेऽनुष्ठित तदपूर्वे च निष्पन्ने सर्वेषामङ्गोत्पत्त्यपूर्वाणां प्रधानोत्पत्त्यपूर्वस्य च एककालवृत्तित्वेन यत्साहित्यं तदेव प्रधानस्य सर्वाङ्गवैशिष्ट्यं नाम । एवमपूर्वद्वारा सम्पन्नसाहित्येन सर्वाङ्गविशिष्टप्रधानेन प्रयोगे परिसमाप्ते फलापूर्वमुत्पद्यते । तेन कालान्तरे फलमनुभूयते इति ॥ अत्रोच्यते यद्यागजन्यमुत्पत्त्यपूर्वं यानि च तत्पूर्वोत्तरक्रियमाणकर्मजन्यान्युत्पत्त्यपूर्वाणि तैस्सर्वैरेव यदि परस्परसाहित्यवद्भिः फलापूर्वमुत्पद्यते तर्हि केन कारणेन यागस्य प्राधान्यं ततः प्राच्योदीच्यकर्मणाञ्च अङ्गत्वमुच्यते । न हि दण्डचक्रादीनां सम्भूय घटरूपमेकं कार्यं कुर्वतां परस्परमङ्गाङ्गिभावोऽस्तीति चेन्नैवम् । न हि यागजन्योत्पत्त्यपूर्वस्येव ततः प्राच्योदीच्यकर्मजन्योत्पत्त्यपूर्वाणां साक्षात्फलापूर्वजनकत्वमङ्गीक्रियते येन समप्राधान्यं स्यात् । किन्तु चरमाङ्गोत्पत्त्यपूर्वे उत्पन्ने प्रथमाङ्गोत्पत्त्यपूर्वमारभ्य सर्वैरङ्गापूर्वैरेककालवृत्तित्वेन परस्परसहितैः प्रधानोत्पत्त्यपूर्वं काचन योग्यता फलापूर्वजननानुकूलशक्तिरूपाऽऽधीयते । तद्विशिष्टं प्रधानोत्पत्त्यपूर्वं फलापूर्वं जनयति । तथा च यागेन स्वोत्पत्त्यपूर्वद्वारा फलापूर्वे जनयितव्ये तत्रोपकारविशेषं कृत्वैवोपक्षीणत्वात् न स्वातन्त्र्येण फलापूर्वजनकत्वं प्राच्योदीच्यपदार्थानामिति न समप्राधान्यप्रसङ्ग इति ।

अङ्गोत्पत्त्यपूर्वं साधयति **एवमिति** । उक्तप्रकारेणैवेत्यर्थः । अत्राप्यर्थापत्तिप्रमाणं प्रदर्शयितुं परस्परसाहित्यरूपमनुपपद्यमानमर्थं

प्रतिपादयन्नाह **परस्परसहितानामेव प्रधानोपकारकत्वादिति** । अङ्गत्वोपपत्तिसूचनाय प्रधानोपकारकत्वकीर्तनम् । अनुपपत्तिमाह स्वरूपेण साहित्यभावादिति । अनयाऽर्थापत्त्या कल्पनीयमर्थमाह **तत्तदिति** । एवमङ्गानां परस्परसाहित्योपपत्त्यर्थमङ्गोत्पत्त्यपूर्वस्य कल्पनं प्रधानस्य सर्वाङ्गसाहित्योपपत्त्यर्थं प्रधानोत्पत्त्यपूर्वस्य कल्पनं प्रधानस्य फलसाधनत्वोपपत्त्यर्थं परमापूर्वस्य कल्पनमित्यपूर्वत्रयस्य कल्पकत्रयं विविच्य बोधनीयम् । **फलापूर्वेति** । फलस्यापूर्वं फलापूर्वम् । साक्षात्फलजनकमपूर्वमिति । तस्य जननं । तस्मिन् सामर्थ्यं शक्तिः । अत्र **प्रधानस्येत्यस्यान्वयः** । तादृशसामर्थ्यस्योन्मुखीकरणम् । कर्मणि षष्ठी । उन्मुखीकरणमुत्पादनम् । उन्मुखीभवति उत्पद्यते । तथा करणमुन्मुखीकरणम्। अथवा सामर्थ्ये उन्मुखीकरणमिति सप्तमीतत्पुरुषः । **प्रधानस्येति** कर्मणि षष्ठी । उन्मुखीकरणेऽन्वयः । **प्रधानस्य** लक्षणया प्रधानजन्योत्पत्त्यपूर्वस्येत्यर्थः । एवकारेण स्वरूपनिष्पादकत्वं व्यवच्छिद्यते । प्रधानस्वरूपनिष्पत्तिर्हि द्रव्यदेवताभ्यामेव जायते । नात्रापूर्वजनकाङ्गापेक्षेति भावः ।

दर्शेति । दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ तयोः । अल्पातरत्वाद्दर्शपदस्य पूर्वनिपातः । **'अपूर्वविषये प्रतिपाद्यते'** इति शेषपूरणं कर्तव्यम् । अङ्गोत्पत्यपूर्वं प्रधानोत्पत्यपूर्वं फलापूर्वमिति त्रिविधेष्वपूर्वेषु सर्वयागसाधारणेषु वक्ष्यमाणसमुदायापूर्व-संज्ञकापूर्वान्तररूपो विशेषो दर्शपूर्णमासयोः प्रतिपाद्यत इत्यर्थः । आग्नेय उपांशुयाजोऽग्नीषोमीय इति त्रयो यागाः पूर्णमासपदेनाभिधीयन्त इति प्रतिपादयन् तत्तद्विधायकवाक्योदाहरणपुरस्सरं तान् यागानाह **यदित्यादिना** ।

यद्वा समुदायापूर्वसाधनाय दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलवाक्यस्यार्थमभिधास्यन् तद्धटकस्य पूर्णमासपदस्य दर्शपदस्य चार्थं क्रमेण वक्तुमुपक्रमते **यदित्यादिना**। (१४) **भवतीतीति**। इत्यनेन वाक्येनेत्यर्थः। **यजतीतीति**। इतिवाक्योत्पन्न इत्यर्थः। ननु पौर्णमास्यां प्रयाजादीनि कर्मान्तराण्यपि हि सन्ति। तानि कथं नोदाह्रियन्त इत्यत्राह **एतानीति**। **एतानि** उदाहृतैस्त्रिभिर्वाक्यैर्विहितानि त्रीणि। **पौर्णमास्यां** पौर्णमासीकाले कर्तव्यानि। **प्रधानानि** अङ्गीनि कर्माणीत्यर्थः। एवञ्च पूर्णमासपदवाच्यानीमानि त्रीणि प्रधानकर्माण्येव न तु प्रयाजादीन्यङ्गभूतानि कर्माण्यपि। तस्मात्तेषामनुदाहरणमिति भावः। एवमेतान् त्रीन् यागान् प्रतिपाद्य एषां त्रयाणामप्यभिधायकं पूर्णमासपदमित्यत्र प्रमाणमुपन्यस्यन्नाह **एषामिति**। **तत्तदिति**। तत्तद्वाक्यावगतश्चासौ पौर्णमासीकालसम्बन्धश्चेति कर्मधारयः। **निमित्तीकृत्येति**। अस्य **समुदायरूपेण अनुवाद** इत्यत्रान्वयः। एकवचनान्तपौर्णमासीपदकर्तृकः समुदायरूपेणानुवादः तत्तद्वाक्यावगत पौर्णमासीकालसम्बन्धे निमित्तीकरणपूर्वक इति। एतत्प्रतिपादनप्रयोजनं परिष्कारे। **विद्वदिति**। विद्वत्पदघटितं वाक्यं विद्वद्वाक्यम्। नन्वत्र यजत इति धातुना प्रकृतसर्वकर्मणामनुवादसम्भवात् कथं त्रयाणामेवानुवाद इत्याशङ्कापरिहाराय **पौर्णमासीपदेने**त्युक्तम्। शक्त्या पौर्णमासीकालवाचकं पौर्णमासीपदमस्मिन् वाक्ये यजधातुसमभिव्याहारात् यागपरं सत् लक्षणया पौर्णमासीकालसम्बन्धिन एव यागान् प्रतिपादयितुं शक्नोति। पौर्णमासीकालसम्बन्धश्चैषां त्रयाणामेव यागानां तत्तदुत्पत्तिवाक्येऽवगतः। एवं पौर्णमासीपदेन पौर्णमासीकालसम्बन्धवतामेवानुवादे सामान्यप्रवृत्तो धातुरपि तेषामेवानुवादको भवतीति भावः।

नन्वेवं यागत्रयवाचित्वे पौर्णमासीपदस्यैकवचनान्तत्वं कथमित्याशङ्क्य तत्समाधानार्थमुक्त**मेकवचनान्तेन समुदायरूपेणेति**। अयं भावः - घटानित्यत्र यथा घटपदस्य बहवो घटाः स्वातन्त्र्येण वाच्या भवन्ति तद्वत्पौर्णमासीपदस्य प्रकृते आग्नेयाग्नीषोमीयोपांशुयाजास्त्रयो यागा न स्वातन्त्र्येण वाच्या भवन्ति। तथा हि सति पौर्णमासीर्यजेतेति बहुवचनं भवेत्। किन्तूदाहृतानां त्रयाणां कर्मणां समुदायो वाच्यः। तस्यचैकत्वादेकवचनोपपत्तिरिति।

अथैवम् आग्नेय- अग्नीषोमीय- उपांशुयाजघटितमेकं समुदायमिति **पौर्णमासी**मितिपदस्यार्थ उक्तो भवति तथा च तस्य धात्वर्थेऽन्वयो न सम्भवति। नह्याग्नेयादिसमुदायं यागान् कुर्यादिति वाक्यार्थो युक्त इति चेदत्र **केचित्** - पौर्णमासीपदस्याग्नेयादि-समुदायलक्षणानन्तरं पुनरपि समुदायिषु लक्षणा कर्तव्या। तथाचाग्नेयादि-घटितैकसमुदायघटकान् यागान् करोतीति विद्वद्वाक्यार्थे इति वदन्ति। परे तु यजतिना प्रकृतसर्वयागग्रहणप्रसक्तौ पौर्णमासीपदसमभिव्याहारबलात् पौर्णमासीकालसम्बन्धिनामाग्नेयादीनां त्रयाणामेव यजतिना ग्रहणमित्यवधारिते तदनुरोधेन पौर्णमासीपदस्य बहुयागवाचित्वे सत्येकवचनं बहुत्वलक्षणार्थं भवति। लक्षणा च स्वाश्रयसमुदायघटक-वृत्तित्वसम्बन्धेन। स्वम् एकत्वं तदाश्रयः समुदायः पौर्णमासीकालिका-ग्नेयाग्नीषोमीयोपांशुयाजत्रयरूपः तद्घटका आग्नेयाग्नीषोमीयोपांशुयाजाः तद्वृत्तित्वं बहुत्वे वर्तत इति। एवञ्च य एवं विद्वान् आग्नेयाग्नीषोमीयो-पांशुयाजान् यागान् करोतीति विद्वद्वाक्यार्थ इति प्राहुरिति **कौस्तुभे** विस्तरः।

न च समुदायस्योपस्थापकाभावेनानुपस्थितस्य तस्य लक्षणा वा

लक्षणाघटकत्वं वा न सम्भवतीति वाच्यम् । पौर्णमासीकालसम्बन्धिनां त्रयाणां यागानां यजेतेत्येकेन पदेन तन्त्रेण युगपदुपादानादेकप्रतीतिविषयत्वेन तत्समुदायप्रतीतेः । नचैवं समुदायस्योपस्थितिसम्भवेऽपि तस्य लक्षणीयत्वे प्रमाणाभावः । नह्युपस्थितिमात्रेण सर्वं लक्षणामर्हति । अतिप्रसङ्गात् । एकवचनस्यान्वयोपपत्त्यर्थं तु एकवचनस्यैव एकत्वाश्रयपौर्णमासीकालवृत्ति यागवृत्तित्वसम्बन्धेन बहुत्व एव लक्षणाऽङ्गीक्रियताम् । अथ वा ग्रहं सम्मार्ष्टीत्यत्रेव एकत्वस्य सामानाधिकरण्यसम्बन्धेनैव बहुत्वलक्षणाऽस्तु । नत्वेतदर्थं प्रातिपदिके समुदायलक्षणायां वा विभक्तौ समुदायघटितलक्षणायां वा किञ्चिन्नियामकमस्तीति वाच्यम् । एवं समुदायाद्वारकबहुत्वेनानुवादाङ्गीकारे वाक्यस्यैव वैय्यर्थ्यापत्तेः । न च तवापि तत्तुल्यमिति वाच्यम् । समुदायरूपेणानुवादप्रयोजनस्यानुपदं वक्ष्यमाणत्वात् । न च कर्मान्तरविधायकत्वाङ्गीकारान्न वैयर्थ्यमिति न समुदायलक्षणा अवश्यम्भाव इति वाच्यम् । यच्छब्देन लट्प्रत्ययेन च विधित्वाभावप्रतीतेः । द्रव्यदेवतयोरभावाच्च । तदुक्तं प्रकरणं तु पौर्णमास्यां रूपावचनादिति । द्रव्यदेवतयोर्यागरूपयोरप्रतिपादनात् य एवं विद्वान् पौर्णमासीं यजत इति वाक्ये प्रकृतयागानामेवानुवादः । नान्यकर्मविधिरित्यर्थः । समुदायसिद्धिफलकानुवादमात्रेण वाक्यसार्थक्ये सम्भवत्यपूर्वान्तरकल्पनापादककर्मान्तरविध्यङ्गीकारस्यायुक्तत्वाच्च एवमेव युक्तम् । न च यजतिना प्रकृतसर्वयागग्रहणप्रसक्तौ यथा पौर्णमासीपदसमभिव्याहारात् श्रुतपौर्णमासीकालसम्बन्धानां त्रयाणामेव ग्रहणमिति सङ्कोचः क्रियते तथा एकवचनबलात् तादृशस्यैकस्यैव ग्रहणमित्यपि सङ्कोचः कथं नाङ्गीक्रियत इति वाच्यम् । त्रयाणां तत्कालसम्बन्धाविशेषे

कस्यैकस्य ग्रहणमित्यत्र विनिगमनाविरहेण एकवचनस्य सङ्कोचकत्वा-योगात् ग्रहमित्यत्र ग्रहस्येवात्र पौर्णमासीकालकर्तव्यस्य कर्मणो विध्यभावात् यथाप्राप्त्यनुवादे परिच्छेदकसंख्याया अनपेक्षितत्वाच्च। पाशाधिकरणन्यायाच्चैवमेव युक्तं वाक्यवैयर्थ्यतादवस्थ्याच्चेति।

एवं पौर्णमासीपदाग्नेयादियागत्रययोः विद्वद्वाक्यसिद्धस्य वाच्यवाचकभावस्योपयोगमाह (१५) **तेनेति** । तेन विद्वद्वाक्ये पौर्णमासीपदस्याग्नेयादित्रिकप्रतिपादकत्वावधारणेन। **पौर्णमासीशब्द** इति। श्रुत इति शेषः। **नन्वित्यादि**। श्रुतस्य हि विध्यन्वये सति विधानं भवति। **यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो** भवतीति वाक्ये यागो न श्रुतः। तस्मादस्मिन् वाक्ये यागविधानं न सम्भवतीत्याक्षेपः। अत्र समाधानग्रन्थो बुध्यारोहणसौकर्याय व्युत्क्रमणेन व्याख्यायते। अस्मिन् वाक्ये श्रुतेन द्रव्यदेवतासम्बन्धेन हेतुनाऽस्य वाक्यस्य यागविधायकत्व-मनुमीयते । एतदनुमानानन्तरमनुमितयागविधायकत्वोपपत्त्यर्थम् आग्नेयेनाष्टाकपालेन अमावास्यायाञ्च पौर्णमास्याञ्च यजेतेति विपरिणामो अङ्गीक्रियते । अस्य च विपरिणमितस्य वाक्यस्य यागविधायकत्वं स्पष्टमेवेति समाधानं **अत** इत्यादिनोच्यते। **अतः** द्रव्यदेवतासम्बन्धस्य यागव्याप्यत्वात् । श्रुतेति श्रुतश्चासौ द्रव्यदेवतासम्बन्धश्चेति विग्रहः। **यजतेति कल्पिते**त्युक्तविधविपरिणतवाक्यस्योपलक्षकम्। विपरिणामेन कल्पितस्य पर्यवसितशाब्दबोधाकारमाह **अग्निदेवत्येति**। अग्निर्देवताऽस्य अग्निदेवत्यः तादृशः पुरोडाशो द्रव्यं यस्य तथाभूतो अमावास्याकाल-कर्तव्यश्च यो यागस्तेन। अग्निदेवत्यः पुरोडाशद्रव्यक उक्तकालकर्तव्यश्चेति वा । एवमस्मिन् वाक्ये यागानुमापकस्य द्रव्यदेवतासम्बन्धरूपस्य

हेतोर्यागनिरूपितां व्याप्तिमुपपादयति **स च यागमन्तरेण न सम्भवतीति।** **स च** द्रव्यदेवतासम्बन्धश्च। **यागमन्तरेण** यागाभावे। **न सम्भवति** न भवति न वर्तितुमर्हतीत्यर्थः। एतेन यागाभाववदवृत्तित्वरूपा यागनिरूपिता व्याप्तिर्द्रव्यदेवतासम्बन्धस्योपपादिता भवति। ननु कथं यागाभावे द्रव्यदेवता सम्बन्धो न भवतीत्यत्राह **द्रव्येति। अन्यत्र** अन्यस्याम्। यागेतरक्रियायां सत्यां द्रव्यदेवतासम्बन्धस्यासम्भवादनुत्पपत्ते-र्यागक्रियायामेव सम्भव उत्पत्तिः वक्तव्या। न हि देवदत्ते तण्डुलं पचति वहति वा तस्य तण्डुलस्य देवतासम्बन्धो जायते। तस्माद्यागेनैव स जायत इति वक्तव्यम्। तथा च द्रव्यदेवतासम्बन्धस्य यागजन्यत्वे सति कारणाभावे कार्यस्याप्यभावात् यागाभावे द्रव्यदेवतासम्बन्धो न भवतीति व्याप्तिसिद्धिरिति भावः। ननु यागक्रियासत्वे द्रव्यदेवतासम्बन्ध उत्पद्यत इत्यत्र किं प्रमाणमित्यत्राह **देवतेति। यागेति।** यागस्य रूपं तस्य भावो यागरूपत्वम्। देवतोद्देशेन द्रव्यत्यागो यागस्य रूपमित्यङ्गीकारादित्यर्थः। यजमानेन देवतोद्देशेन द्रव्यस्य त्यागे सति तस्य द्रव्यस्योद्दिष्टदेवतासम्बन्धो जायत इति देवतोद्देशेन द्रव्यत्यागरूपयागवाचिना यजतिपदेनैवावगम्यत इति भावः। नन्वस्तु द्रव्यदेवतासम्बन्धस्य यागजन्यत्वेन तद्व्याप्यत्वम् अस्तुचास्य तेनानुमानम्। तथाऽप्यस्मिन् वाक्ये द्रव्यदेवतासम्बन्धोऽस्तीति कथं प्रतीयत इति शङ्कायां यदाग्नेय इति वाक्यरूपे पक्षे द्रव्यदेवतासम्बन्ध-रूपहेतुसत्वमुपपादयति **अग्निर्देवतेति। इत्यर्थ** इत्यस्य विहितेत्यत्रान्वयः। **विहितेति।** देवतावाचकस्तद्धितो देवतातद्धितः विहितश्चासौ देवतातद्धितश्च सोऽन्ते यस्य स विहितदेवतातद्धितान्तः। तथाचास्मिन् वाक्ये श्रूयमाणेनाग्नेयशब्देनैव द्रव्यदेवतासम्बन्धोऽव-गम्यत इति भावः। ननु

आग्नेयशब्देन अग्निदेवतासम्बन्धीत्यर्थो लभ्येत तावता पुरोडाशरूपस्य द्रव्यस्य देववतासम्बन्धः कथमवगतो भवतीत्याशङ्क्य आग्नेयपदस्य पुरोडाशवाचकाष्टाकपालपदस्य च समानविभक्तिकत्वेनैकार्थकत्वप्रतीतेः अष्टाकपालपदसमानाधिकरणेनाग्नेयपदेनाग्निदेवतासम्बन्धी पुरोडाश इत्यर्थो लभ्यत इति समादधान आह **तस्येति** । आग्नेयशब्दस्येत्यर्थः । **पुरोडाशेति** । पुरोडाशवाचकं पदं पुरोडाशपदं अष्टाकपालपदमित्यर्थः । तेन सह सामानाधिकरण्यं समानविभक्तिकत्वमिति । एवं प्रतिपादितस्याग्नेयवाक्येऽश्रुतयागानुमानस्य अप्रामाणिकत्वशङ्कायां द्वितीयाध्याये तृतीयपादे **वायव्यं श्वेतमालभेत भूतिकामः सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम** इत्यादौ केवलस्य स्पर्शरूपस्यालम्भस्य निर्वापस्य च फलार्थं विधानं श्रुतत्वात् न तु यागस्य अश्रुतत्वात् इति पूर्वपक्षं कृत्वा **यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात्** इति सूत्रेण यागव्याप्यस्य द्रव्यदेवतासम्बन्धस्य श्रवणात् तेन व्यापकस्य यागस्यानुमानात् तस्यैव विधानमिति सिद्धान्तितं स एव न्यायोऽत्रानुसर्तव्य इति समाधानं मनसि निधायाह (१६) **एवमिति** । **इत्यादौ यत्रे**त्यन्वयः । **न कश्चिद्दोष** इति । आग्नेयवाक्ये यागस्यानुमानेनोपस्थितत्वादश्रुतत्वरूपो दोषो नास्ति । यजेतेति विपरिणामाङ्गीकारात् अशाब्दत्वरूपो दोषो नास्ति । सौर्यन्यायस्य अत्राविघातादप्रामाणिकत्वमपि नास्तीति भावः । क्वचिदश्रुतस्य यागस्य कल्पनमस्तीत्युक्तम् । अथ क्वचिद्विधेरपि कल्पनमस्तीति प्रतिपादयितुमाह **नन्विति** । **यजीति** । यजधातु-श्रवणेऽपीत्यर्थः । **विधिप्रत्ययेति** । विधिश्चासौ प्रत्ययश्च विधिप्रत्ययः । तस्य । विधेः प्रवर्तनाया वाचकः प्रत्ययो विधिप्रत्ययस्तस्येति वा ।

**लिङादेरिति**। सोमेन यजेतेत्यादाविव लिङः स्वाध्यायोऽध्येतव्य इत्यादाविव तव्यप्रत्ययस्य वाऽभावादित्यर्थः। **विधायकत्वसम्भवादिति**। नन्वेवमश्रुतस्यापि विधिप्रत्ययस्य स्वयं कल्पनेन विधायकत्वोपपादनेऽतिप्रसङ्गः। **यस्य पर्णमयी जुहूर्भवति न पापं श्लोकं शृणोती**त्यत्रापि शृणुयादिति विपरिणामेन फलविधित्वाङ्गीकारापत्तेः। तथा च सति द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति चतुर्थाध्यायाधिकरणविरोधादिति चेन्न उपांशुयाजवाक्यस्य विपरिणामेन विधायकत्वानङ्गीकारे वैयर्थ्यापत्तेः। समीपे विध्यन्तराभावेन विध्यन्तरैकवाक्यतया विधेयप्राशस्त्यपरत्वस्यासम्भवादर्थवादविधयाऽपि सार्थक्यस्य वक्तुमशक्यत्वात्। तस्मादत्र वाक्यवैयर्थ्यपरिहाराय विधिकल्पनमावश्यकम्। न पापं श्लोकं शृणोतीत्यत्र तु यस्य पर्णमयी जुहूर्भवतीति वाक्येन जुहूद्देशेन पर्णतायां विहितायां तत्प्रशंसापरत्वेनार्थवादविधया सार्थक्यसम्भवात् विधिकल्पने प्रमाणाभाव इति वैषम्यम्। अनेनैवाभिप्रायेण विधायकत्वादित्यनुक्त्वा विधायकत्वसम्भवादिति सम्भवपर्यन्तमुक्तम्। अर्थवादविधया हि सार्थक्ये सम्भवति विधायकत्वस्यासम्भवः। यथा न पापं श्लोकं शृणोतीत्यत्र। अत्र तु तथा सार्थक्यासम्भवाद्विधायकत्वसम्भव इति।

बहुषु स्थलेष्वेवमङ्गीकर्तव्यं भवतीत्याह **एवमिति**। एवं विपरिणामाङ्गीकारे श्रूयमाणस्य लट्प्रत्ययस्य मन्दं फलमिति प्रकारान्तरेण विधायकत्वमुपपादयतां मतमाह **केचित्त्विति**। **पञ्चमेति**। पञ्चमलकारो हि लेट् लिङर्थे लेडिति ३/४/७ सूत्रेण लिङ्समानार्थको विधायको भवतीति।

ननु किमर्थमुपांशुयाजवाक्यमुपादाय विधिकल्पनाप्रकारः प्रदर्शितः न पुनरुपस्थितमाग्नेयवाक्यमुपादाय। तत्रापि हि **भवतीति** लट एव श्रवणं न लिङादेः। तेन यागस्येव विधेरपि तत्र कल्पनमावश्यकमेव। अत एव हि यजेतेति लिङन्तपदस्य विपरिणामेन कल्पनं पूर्वं ग्रन्थकृताऽभिहितम्। नतु यजत इति लङन्तपदस्य। नचैवं तेनैव तत्र विधिकल्पनस्य दर्शितत्वात् पुनरुपांशुयाजवाक्ये तत्प्रदर्शनं नानुपपन्नमिति वाच्यम्। तत्र विधिकल्पनप्रदर्शने तात्पर्यविरहात्। यागकल्पननिरूपणमात्रे हि तात्पर्यं तत्र। **यागवाचकपदस्याश्रवणात् कथं यागविधायकत्वमिति** तन्मात्रस्याक्षिप्तत्वात्। किमर्थं तर्हि यजेतेति लिङन्तपदकल्पनं पूर्वमुक्तमिति चेत् उपांशुयाजवाक्ये प्रतिपादयिष्यमाणप्रकारेण तत्रापि विधिकल्पनमावश्यकमित्यभिप्रायेण तथोक्तत्वात्। न हि तावता विधिकल्पनप्रकारो दर्शितो भवति। स हि उपांशुयाजवाक्य एव प्रदर्श्यते। तादृशन्यायानुसरणमात्रं तु लिङन्तपदोच्चारणेनात्र सूच्यते। अत एव लिङ्घटितस्य यागमात्र-कल्पनस्थलस्य एवमित्यादिनोपष्टम्भकतया प्रदर्शनं सङ्गच्छते। तस्मादुपस्थिताग्नेयवाक्यपरित्यागेन उपांशुयाजवाक्योपादानस्य निमित्तं किञ्चिदवश्यं वाच्यमिति। **अत्रोच्यते** - विपरिणामस्त्रेधेति परिष्कार एवोक्तम्। तत्र प्रथमोपस्थिताग्नेयवाक्ये प्रथमं यागकल्पनमात्रमभिदधता प्रकृतेर्विपरिणाम उक्तः। प्रत्ययविपरिणामप्रकारस्तु विशिष्य प्रत्ययमात्रविपरिणामस्थलस्योदाहर्तव्यतया तत्रैव प्रदर्शनीय इति मत्वा नात्र दर्शितः। प्रकृतिप्रत्ययोभयविपरिणामस्थलमिदमिति तु प्रदर्शयितुं यजेतेति लिङन्तपदकल्पनमुक्तम्। सौर्यवाक्योदाहरणेन प्रकृतिमात्रविपरिणामस्थलमपि दर्शितं भवति। तदनन्तरमुपांशुयाजवाक्यमुपादाय

प्रत्ययमात्रविपरिणामं दर्शितवानित्ति। एतदुक्तं भवति- विपरिणामत्रैविध्य-प्रदर्शनाय स्थलत्रये उदाहर्तव्ये आग्नेयवाक्यस्येवोपांशुयाजवाक्यस्याप्युपस्थितिस्समाना । तत्र प्रथममेकत्र प्रकृतिविपरिणामे दर्शिते अन्यत्र प्रत्ययविपरिणामप्रदर्शनं नायुक्तमिति। (१७) **वाक्येति** । वाक्याभ्यां विहिताविति विग्रहः । **सान्नाय्येति** । ऐन्द्रं दधि ऐन्द्रं पय इत्याभ्यां विहितयोर्दध्नः पयसश्च सान्नाय्यमिति संज्ञा। सान्नाय्ययोः सान्नाय्याभ्यां वा यागौ सान्नाय्ययागौ । **विहिताग्नेयश्चेति** । यदाग्नेय इति वाक्ये अमावास्यायाञ्च पौर्णमास्याञ्चेति कालद्वयश्रवणात् पौर्णमास्यामिवामावास्यायामप्याग्नेययागो विहितो भवतीति भावः। एवं प्रतिपादितानां त्रयाणां प्रधानकर्मणां दर्शपदं वाचकमित्यत्र प्रमाणं प्रदर्शयन्नाह **एषामिति**। **अमावास्यामितीति** । एतत्प्रयोजनं पौर्णमासीपदेनेतिवत् । **नाम्नेति**। नामाख्याते इत्यत्रेवाख्यातप्रतियोगि नामात्र द्रष्टव्यम् । अमावास्यामिति पदेनेत्यत्र तात्पर्यम् । यद्वा नामधेयेनेत्येवार्थः । तदभिधानञ्च धातुसामानाधिकरण्यप्रदर्शनार्थम् । पूर्णमासविद्वद्वाक्येऽपीदं योजनीयम् । **एकवचनान्तेन समुदायरूपेणे**त्यनयोरपि पूर्ववत्प्रयोजनं वक्तव्यम् । तत्तद्वाक्यावगतामावास्याकालसम्बन्धं निमत्तीकृत्येत्येतदप्यत्र योज्यम् । **द्वितीयेति** । द्वितीयाया विभक्तेरेकवचनं तदन्ते यस्य तेन नाम्नेति । द्वितीयाविभक्तिमत्वकीर्तनञ्चानुवादत्वमुपोद्वलयितुम्। तृतीया-विभक्तिर्हि श्रुयमाणा **दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते**त्यादाविव विधेयत्वं गमयेत् । द्वितीया तु साध्यत्वेनोद्देश्यत्वं बोधयन्ती अन्यतः प्राप्तिमपेक्षत इति भवत्यनुवादत्वाबोधिनीति । पूर्वत्रापीदमुक्तं वेदितव्यम् । एवमनुवादबलात् सिद्धस्य आग्नेयसान्नाय्यद्वयरूपाणां त्रयाणां यागानां

समुदितानाममावास्यापदवाच्यत्स्योपयोगमाह **तेनेति**। **तेन** अनुवादावधृत-वाच्यवाचकभावानुरोधेन । नन्वमावास्याशब्दस्य कोऽर्थ इति नेदानीं निरूपणीयम् । पूर्णमासपदार्थे निरूपिते दर्शपदार्थनिरूपणं हि कर्तव्यम् । तद्विहाय कथमन्यनिरूपणमिति शङ्कायां दर्शशब्दोऽमावास्याशब्दश्च समानार्थकाविति वेदितव्यमित्यभिप्रायेणाह **दर्शशब्दोऽमावास्याशब्दो** वेति। एवं पूर्वत्रापि पौर्णमासीशब्दो वा पूर्णमासशब्दो वा इत्यभिसंहितमिति ज्ञेयम्। **श्रुत इति** । धातुसामानाधिकरण्येनेति शेषः । तेन अमावास्याया-ममावास्यया यजेतेत्यत्र सप्तम्यन्तपदस्य काल एवार्थः। तृतीयान्तपदस्य तु यागसमुदायः । तृतीयया करणत्वेन भावनान्वयियागवाचिना धातुना सह सामानाधिकरण्यावगमादिति । एवं पूर्वत्रापि । **यागेति** । उक्तानां त्रयाणां यागानां यस्समुदायस्तस्योपस्थितिरिति ।

विद्वद्वाक्ये समुदायलक्षणाऽऽवश्यकी । अन्यथा कृत्स्नं वाक्यं विधेयाभावादनर्थकं स्यादित्युक्तम् । समुदायलक्षणायां वा कथं सार्थक्यम् । तदानीमपि गुणस्य वा कर्मणो वा कस्यचिद्विधानाभावात् । एतावानेव हि पक्षद्वये विशेषः । एकत्र स्वतन्त्राणां त्रयाणां यागानामनुवादः । अपरत्र समुदायघटकत्वेनेति । विध्यभावस्तु उभयत्र समानः । तत्कथं समुदायलक्षणया वाक्यसार्थक्यमित्यत्राह **त्रिकस्येति** । द्विवचनोपपत्तेः तत्प्रयोजनत्वमुपपादयति **अन्यथेति**। विद्वद्वाक्ये समुदायरूपेणानुवादाभावे इत्यर्थः । **बहुवचनं स्यादिति** । त्रिषु घटेषु घटशब्दप्रयोगे घटा इतिवत् प्रत्येकं यागत्रयवाचिनोर्दर्शपूर्णमासपदयोः बहुवचनेऽवश्यम्भाविनि दर्शाश्च पूर्णमासाश्चेति विग्रहस्याश्रयणीयतया दर्शपूर्णमासैरिति समासेऽपि बहुवचनं दुर्वारं स्यादिति भावः । यद्यपि '**आग्नेयादीनां षट्त्वात् बहुवचनं**

**स्या**'दिति वक्तुं युक्तं तथाऽपि षट्त्वेन बहुवचनापादनमपेक्ष्य बहुत्वेन बहुवचनापादनं शीघ्रतरं बालानां बुद्धिमारोहतीत्येवमुक्तम् । एवं तर्हि आग्नेयादीनां बहुत्वात् बहुवचनमित्येवालम् । षण्णामिति किमर्थमिति चेत् कथमाग्नेयादीनां बहुत्वमित्यत्र षट्त्वादिति हेतुप्रतिपादनाभिप्रायेण तदुपादानमिति । **अयमत्राशयः** - समुदायलक्षणाया अभावे दर्शशब्दस्य त्रिषु यागेषु दर्शा इति बहुवचनमावश्यकम् । एवं पूर्णमासशब्दस्यापि । तत्र दर्शैश्च पूर्णमासैश्चेति द्वन्द्वे दर्शपूर्णमासैस्स्वर्गकामो यजेतेति बहुवचनमेवोपपद्यते न द्विवचनमिति फलवाक्ये द्विवचनस्यानुपपत्तिः । यदा तु विद्वद्वाक्यवैयर्थ्यपरिहाराय समुदायलक्षणमाश्रित्य दर्शपूर्णमासपदयोर्वा अमावास्यापौर्णमासीपदयोर्वा यागसामानाधिकरण्येन श्रवणे सति सर्वत्र समुदायोऽर्थ इत्यङ्गीक्रियते तदा फलवाक्ये दर्शपदेनैकस्य पूर्णमासपदेनापरस्य च समुदायस्य बोधनात् तद्गतद्वित्वबोधनाय द्विवचनमावश्यकमिति, द्विवचनोपपत्तिरिति भवति विद्वद्वाक्ये समुदायरूपेण लक्षणया अनुवादस्य फलवाक्ये द्विविचनोपपत्तिः फलमिति ।

ननु फलवाक्ये षण्णामपि कर्मणां ग्रहणे सिद्धे तत्र द्विवचनानुपपत्त्या तत्परिहाराय दर्शपूर्णमासपदयोस्समुदायलक्षणासिद्ध्यर्थं सत् विद्वद्वाक्यं सार्थकं स्यात् । तदेव तु न सिद्धम् । द्विवचनबलेन द्वयोरेव कर्मणोः फलसम्बन्धौचित्यादिति चेदुच्यते । षण्णामपि यागानां स्वस्ववाक्ये कालसम्बन्धश्रवणेन दर्शपूर्णमासपदाभ्यामुपस्थितौ सम्प्रनायां कयोर्द्वयोर्ग्रहणमित्यत्र कस्यचिन्नियामकस्यादर्शनात् दर्शपूर्णमासकालयुक्तवाक्यविहितानां सर्वेषामेवात्र ग्रहणे तात्पर्यमवसीयते । तत्र द्विवचनानुपपत्तिरिति । अथैवं यदि दर्शपूर्णमासपदाभ्यामेव विनिगमना-

विरहेण सर्वेषां ग्रहणं सिद्धमित्युच्यते तर्हि तत्र बहुषु द्वित्वानन्वयादन्वया-नुपपत्त्यैव द्विवचनस्य द्वित्वाश्रयौ यौ दशपूर्णमासकालौ तत्र कर्तव्ययाग-षट्कवृत्तिसम्बन्धेन बहुत्वे लक्षणा सिध्यति । यथा पाशानिति मन्त्रस्थबहुवचनोपात्तस्य बहुत्वस्य एकस्मिन्पाशेऽनन्वयात् बहुवचनस्य बहुत्वाश्रयावयवारब्धैकावयविवृत्तित्वसम्बन्धेन एकत्वलक्षणा तद्वत् । तत्र पुनरपि विद्वद्वाक्यस्य वैय्यर्थ्यापत्तिरिति चेत् अयमत्राशयः । विद्वद्वाक्याभावे फलवाक्ये दर्शपूर्णमासपदाभ्यां षण्णां कर्मणां द्विवचनेन द्वित्वस्य चोपस्थितौ सत्यां प्रकृतिप्रत्ययार्थयोः परस्परमनन्वयेन 'दर्शपूर्णमासाभ्याम्' इतीदमुपपदमप्रतीतार्थकं सत् धातूपात्तयागविशेषणेऽसमर्थं भवति । तेन व्यावर्तकाभावेन धातुना प्रकृतानां प्रयाजादीनामपि यागानामुपादानं स्यात् । एवं धातोस्सर्वयागवाचित्वे निश्चिते दर्शपूर्णमासाभ्यामिति पदस्यापि धातुसामानाधिकरण्यबलात्सर्वयागवाचकत्वमभ्युपगन्तव्यं स्यात् । एवञ्च सति फलवाक्ये आग्नेयादीनां षण्णामिव प्रयाजानुयाजादीनामपि साक्षात्फलसम्बन्धापत्त्या तेषामङ्गत्वानुपपत्तिः । विद्वद्वाक्येन, दर्शपूर्णमासपदयोः समुदायलक्षणानां ग्राहितायां तु फलवाक्ये द्विवचनोपात्तद्वित्वस्य दर्शपूर्णमासपदोपात्तयोस्समुदाययोरन्वयात् दर्शपूर्णमासाभ्यामिति पदं प्रसिद्धार्थकं भवति । तेन धातोर्विशेषणे समुदायद्वयरूपयागषट्कस्यैव तेनोपादानं भवति । न प्रयाजादीनामपि। तथा च प्रधानाङ्गभावव्यवस्थितिरितीत्येवम् आग्नेयादियागषट्क-मात्रस्य फलसम्बन्धापादनोपयोगिनो दर्शपूर्णमासाभ्यामिति विशेषणस्य प्रसिद्धार्थकत्वाय द्वित्वान्वये वक्तव्ये तदनुगुणसमुदायलक्षणाग्राहकतया विद्वद्वाक्यसार्थक्यमिति ।

**नव्यास्त्वाहुः** । न विद्वद्वाक्यस्य फलवाक्ये दर्शपूर्णमासाभ्यामिति पदस्यार्थप्रसिद्धिसम्पादनद्वारा प्रयाजादिव्यवच्छेदेनाग्नेयादिषट्कमात्रस्य फलसम्बन्धबोधः प्रयोजनम्। विद्वद्वाक्यं विनाऽपि तस्य प्रसिद्धार्थकत्वसम्भवात् । यदाग्नेय इति वाक्ये हि कालद्वयश्रवणात् द्वौ आग्नेययागौ परस्परभिन्नौ विधीयेते इति परिष्कारेऽप्युक्तम् । तत्र उत्पत्तिवाक्यावगतकालसम्बन्धबलात् दर्शपूर्णमासपदवाच्यत्वस्य द्वित्वस्य च प्रसिद्ध्या तयोः प्रतिपादकं सत् दर्शपूर्णमासाभ्यामिति पदं प्रसिद्धार्थकमेव। एवञ्च फलवाक्ये तयोर्द्वयोरेवोपादानेन फलसम्बन्धप्रसक्तौ उपांशुयाजाग्नीषोमीययोः सान्नाय्ययोश्च फलवत्सन्निधाविति न्यायेन प्रयाजादिवत्तदङ्गत्वापत्तिः । नचान्ययोरपि उत्पत्तिवाक्यावगतकालसम्बन्धयोर्द्वयोर्ग्रहणसम्भवादनयोरेव ग्रहणमित्यत्र किं नियामकमिति वाच्यम्। यथा उत्पत्तिवाक्ये कालसम्बन्धश्रवणेनाग्नेयादीनामिव झटिति दर्शपूर्णमासपदेन ग्रहणं भवति न तु प्रयाजादीनामपि। तत्र प्रधानानुरोधेन पर्वकालस्य कल्पनीयतया विलम्बितत्वादित्युच्यते तथा उत्पत्तिवाक्य एवाग्नेययोः परिच्छेदकतया द्वित्वस्यावगतत्वात् तयोरेव द्वित्वं द्विवचनात् झटिति प्रतीयते, नान्ययोरिति। एवं द्वयोरेव फलसम्बन्धे प्रसक्ते द्विवचनस्य शक्यद्वित्वाश्रयसमुदायघटकाग्नेयादिवृत्तित्वसम्बन्धेन बहुत्वलक्षणयोत्पत्तिवाक्यश्रुतकालसम्बन्धानां षण्णामपि फलसम्बन्धसिद्धिरेव विद्वद्वाक्यप्रयोजनं भवितुमर्हति । द्विवचनस्य हि उक्तरीत्या सम्भवतः शक्यार्थस्यैव ग्रहणे विद्वद्वाक्यं व्यर्थं भवति । तस्मात्तद्वैयर्थ्यपरिहाराय तद्घटकैकवचनस्येव फलवाक्यघटद्विवचनस्यापि समुदायघटितबहुत्वलक्षणाऽऽवश्यकीत्यवसीयत इति।

अथैवमपि विद्वद्वाक्यप्रयोजनं न वक्तुं शक्यते । उक्तरीत्या द्विवचनबलादाग्नेययोरेव फलसम्बन्धसिद्धौ उपांशुयाजादीनां चतुर्णामङ्गत्वे सति एतेषामुत्पत्तिवाक्येषु कालसम्बन्धश्रवणवैयर्थ्यापत्तिरिति तद्बलादेवाग्नेयतुल्यत्वावगमात् तदुपपत्त्यर्थं द्विवचनस्य बहुत्वलक्षणावधारणोपपत्तेः तदर्थं विद्वद्वाक्यानपेक्षणादिति चेदुच्यते । उपांशुयाजादीनामङ्गत्वेऽपि न कालश्रवणवैयर्थ्यम् । विशिष्य कालश्रवणाभावे हि यथा प्रयाजादीनां द्वयोरपि पर्वणोरनुष्ठानं पौर्णमास्याममावास्यायाञ्च । तथा उपांशुयाजाग्नीषोमीययोः पौर्णमास्यामिव अमावास्यायामप्याग्नेयार्थमनुष्ठानं स्यात् । सान्नाय्ययोश्च पौर्णमास्याममपि । एवं माभूदित्युपांशुयाजाग्नीषोमीययोः पौर्णमासीकालिकाग्नेयमात्रार्थत्वेन सान्नाय्ययोश्च दर्शकालिकयागमात्रार्थत्वेन च व्यवस्थया अनुष्ठानसिद्ध्यर्थं कालश्रवणमिति न तदन्यथानुपपत्त्या द्विवचनलक्षणातात्पर्यावधारणमित्यलमिति ।

ननु समुदायरूपेणानुवाद इत्युक्तम् । तत्रानुवादो नाम क इत्यत्राह **मानान्तरेणेति** । पूर्वमनुवाद्यत्वस्वरूपमुक्तम् । स्फुटतरप्रतिपत्त्यर्थमिदानीमनुवादस्वरूपमुच्यत इति ध्येयम् । **तथेति** । उक्तयागषट्कापेक्षयाऽयं **तथाशब्दः** समुच्चये । यथा आग्नेयादीनि षट् तत्तद्वाक्यविहितानि फलसम्बन्धभाञ्जि प्रधानभूतानि तथा तत्सन्निधावाम्नातानि प्रयाजादीनि फलसम्बन्धरहितान्यङ्गभूतानीति । **प्रयाजेति** । प्रयाजनामानः पञ्च यागाः आज्यभागनामानौ द्वौ अनूयाजनामानस्त्रयः एतदादीनि कर्माणीत्यर्थः । **षण्णामिति** । आग्नेयादीनामिति शेषः । **अङ्गभूतानीति** । श्रुतफलाभावात् विधीयमानानि प्रयाजादीनि स्वातन्त्र्येण फलान्तरं नाकाङ्क्षन्ति । अत्यन्तानुपस्थित-

स्वर्गादिकल्पने गौरवात् । किन्तु उपस्थितक्रतूपकारमेव प्रयोजनतया स्वीकृत्य स्वयमेव क्रत्वङ्गानि भवन्तीत्यभिप्रायेण **अङ्गभूतानीत्युक्तम्** नत्वङ्गानीति ।

**एवं स्थित** इति । दर्शपूर्णमासपदयोः प्रत्येकं यागत्रय-वाचित्वम् इति स्थित इत्यर्थः । **दर्शेति** । **दर्शपूर्णमासाभ्यामिति** व्याख्येयपदं **समुदायाभ्यामिति** व्याख्यानम् । पूर्णमासश्च दर्शश्चेतीतरेतरद्वन्द्वसमास-लभ्यं विशेषणं **परस्परेति** । परस्परेण सहितौ परस्परसहितौ ताभ्याम् । स्वर्गकामशब्दार्थः **स्वर्गेति** । लिङाख्यातार्थः **कुर्यादिति** । अत्र समुदायाभ्यां यागैरित्यनन्वयात् यजिधातोरर्थो नोक्त इति ध्येयम् । न च पूर्वोक्तरीत्या पुनरपि यागलक्षणाऽङ्गीक्रियताम् । न तु श्रुतस्य धातोः परित्यागो युक्त इति शङ्क्यम् । वस्तुतः तथैवाङ्गीकारात् । प्रकृतापूर्वविशेषसाधनोपयोगितया तु प्रकृतेसमुदायमात्रप्रदर्शनमिति । समुदायापूर्वं साधयितुमाह **तत्रेति** । तथा सतीत्यर्थः । परस्परसहिताभ्यां समुदायाभ्यामित्यर्थे सतीति यावत् । **कालद्वयेति** । पौर्णमासीकाले एकस्समुदायः, अमावास्याकाले एक इति कालद्वयवृत्तित्वम् । **परस्परसाहित्यमिति**। क्रियाणां साहित्यं हि एककालिकत्वमेव । तद्भिन्नकालिकयोः क्रियासमुदाययोर्न सम्भवतीति । **स्वरूपेणेति** । एकसमुदायस्वरूपस्य अपरसमुदायस्वरूपेण सह एककाल-वृत्तित्वविरहेऽपीत्यर्थः । अस्य **साहित्यमित्युच्यत** इत्यन्तेऽन्वयः । **त्रिकात् त्रिकादिति** । यागत्रयरूपादेकैकस्मात् समुदायादित्यर्थः । **तदिति** । तदपूर्वमेव द्वाः द्वारं तयेत्यर्थः । **उच्यत इति** । **अयं भावः** । पौर्णमासीकाले त्रयाणां यागानां प्रयोगे समाप्ते एकं समुदायापूर्वमुत्पन्नं कर्तुरात्मनि वर्तते । पश्चादमावास्याकाले त्रयाणां यागानां प्रयोगे समाप्ते अन्यत्समुदाया-

पूर्वमुत्पद्यते। तत्र उभयोस्समुदायापूर्वयोः अमावास्याप्रयोगान्ते एकस्मिन् काले वर्तमानत्वात्तयोस्साहित्यं तावन्निराबाधम्। तदिदं समुदायद्वय-जन्यापूर्वद्वयसाहित्यमेव तज्जनकयोस्साहित्यमित्यभिसंहितमिति। एवं क्षणिकक्रियाघटितस्य समुदायद्वयस्य श्रुतं यत्स्वर्गसाधनत्वं तदन्यथानुपपत्त्या फलापूर्वं पूर्वमग्निहोत्र इव कल्पनीयमिति **स्वर्गापूर्वं कुर्या**दित्यनेन प्रदर्शितम्। अनन्तरं द्वयोस्समुदाययोः साहित्या-न्यथाऽनुपपत्त्या समुदायापूर्वद्वयं कल्प्यत इत्युक्तम्। अयमेव कर्मान्तरा-पेक्षया दर्शपूर्णमासयोरपूर्वकल्पनायां विशेषो यत्समुदायापूर्वसंज्ञं फलापूर्वप्रधानोत्पत्त्यपूर्वाङ्गोत्पत्त्यपूर्वेभ्योऽतिरिक्तमपूर्वान्तरं कल्प्यत इति। इत्थं, यदर्थमयमारम्भः, तस्मिन्नपूर्वकल्पनविशेषे प्रतिपादिते अस्य प्रकरणस्योपसंहर्तव्यत्वेऽपि व्युत्पत्तिवैशद्याय कर्मान्तरसाधारणयोः प्रधानाङ्गोत्पत्त्यपूर्वयोरपि कल्पनाप्रकारं प्रकृते प्रतिपादयति (१९) **एकैकस्येति**।

तत्र **एकैकस्ये** त्युपक्रमवद्भ्यां द्वाभ्यां वाक्याभ्यां प्रधानोत्पत्त्यपूर्वकल्पनमुच्यते। तत्रापि प्रधानस्य यत्सर्वाङ्गसाहित्यं तदेवान्यथानुपपद्यमानतया अर्थापत्तिप्रमाणं सत् प्रधानोत्पत्त्यपूर्वं कल्पयतीति द्वितीयवाक्येनोच्यते। तदर्थं प्रधानानां सर्वाङ्गसाहित्य-मावश्यकमिति प्रथम वाक्येनोच्यत इति विवेकः। **त्रिकापूर्वेति**। समुदायापूर्वेत्यर्थः। **आकाङ्क्षायामिति**। इतिकर्तव्यताकाङ्क्षायामित्यर्थः।

**अत्रेदमवधेयम्**। आग्नेयादीनां यागानां प्रत्येकमेव इतिकर्तव्यताकाङ्क्षा। प्रत्येकमेव विधिवाक्ये भावनायां

करणत्वेनान्वितत्वात्। न पुनस्समुदायस्य इतिकर्तव्यताकाङ्क्षा सम्भवति। समुदायस्य यदाग्नेय इत्यादिवाक्येषु करणत्वेनानन्वितत्वात्। करणस्योपकारकाङ्क्षा हि इतिकर्तव्यताकाङ्क्षा नाम। सा च यदेव करणत्वेन भातं तस्यैव भवितुमर्हति, नान्यस्य। नच तत्तदुत्पत्तिवाक्ये प्रत्येकं करणत्वेनान्वयेऽपि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलवाक्ये समुदायस्यैव करणत्वेनान्वयात् तत्रेतिकर्तव्यताकाङ्क्षा भविष्यतीति वाच्यम्। यजिधातुनाऽन्वयसिद्ध्यर्थं पुनरपि समुदायिषु लक्षणाऽवश्यम्भावस्योपपादितत्वेन तत्रापि प्रत्येकमेव करणत्वेनान्वयात्। विनियोगवाक्ये इतिकर्तव्यताकाङ्क्षायाम् अभावाच्च। आग्नेयादीनां हि तत्तद्वाक्येषु प्रत्येकमेवोत्पत्तिः। सर्वेषां तु फलवाक्ये फलविशेषे विनियोगः क्रियते। तत्र इदं करणमिति स्वरूपबोधनरूपोत्पत्तिर्यत्र क्रियते तत्रैव केनकेनोपकृतमिदं करणं शक्तं भवतीत्युपकारकाकाङ्क्षा भवति। सिद्धस्य तु करणस्य फलविशेषाकाङ्क्षायां तन्मात्रबोधनाय फलवाक्यं प्रवर्तत इति न तत्र करणानामितिकर्तव्यताकाङ्क्षेति। अत एव प्रयाजादीन्युत्पत्त्यन्वयीनीति सिद्धान्तः। एवञ्च **एकैकस्य त्रिकस्येत्यादिना** समुदायस्य इतिकर्तव्यताकाङ्क्षाप्रतिपादनं यथाश्रुतं नोपपद्यते। तस्मात् प्रत्येकं विद्यमानैव इतिकर्तव्यताकाङ्क्षा समुदायस्य समुदाय्यनतिरिक्तत्वात् समुदायेऽभिहिता। अतएव **त्रिभिर्यागैस्त्रीण्युत्पत्त्यपूर्वाणि जन्यन्त** इत्युपरिष्टाद्वदन् अत्र [illegible] त्रिकपदेन त्रयो यागा एव विवक्षिताः नतु तेषां [illegible]नुदाय इति सूचयति। एवं क्लेशेन समुदायस्य आकाङ्क्षावत्त्वप्रतिपादनमपि **अङ्गकलापविशिष्टस्य एकैकस्य त्रिकस्येति** समुदायस्य अङ्गकलापविशिष्टत्वकथनोपयोगितया कृतम्। यस्य हि अङ्गाकाङ्क्षा

तस्यैवाङ्गवैशिष्ट्यमिति। तत्रापि किमिति समुदाये अङ्गकलापवैशिष्ट्य-प्रतिपादनम्। यागानामेव प्रत्येकं तद्वैशिष्ट्यं कस्मान्नोच्यत इत्यत्र तु परिष्कार एव समाधानमुक्तमिति।

**प्रयाजेति**। प्रयाजानूयाजादीनि यानि पूर्वोत्तराङ्गानि तेषां कलापेन विशिष्टस्येति। प्रयाजादि प्रधानात्पूर्वकालिकमङ्गम्। अनूयाजादि उत्तरकालिकमङ्गमिति यथाक्रमं वेदितव्यम्। **एकैकस्येति** पूर्वाङ्गमात्रसाहित्यं प्रधानोत्पत्त्यपूर्वं विनाऽपि उपपद्यते। प्रयाजादि-पूर्वाङ्गानुष्ठानोत्तरमुत्पन्नानां तत्तदङ्गोत्पत्त्यपूर्वाणां प्रधानयागानुष्ठानकाले विद्यमानत्वात् स्वोत्पत्त्यपूर्वद्वारा प्रयाजादीनां पूर्वाङ्गानां प्रधानयाग-स्वरूपस्य च एककालिकत्वेन साहित्यसम्भवात्। उत्तराङ्गसाहित्यन्त्वेवं न सम्भवति। प्रधाने क्षणिके विनष्टे तज्जन्यस्यापूर्वस्याऽभावे तदुत्तरकालिकाङ्गैस्सह कथमपि साहित्याभावात्। तदिदमभिप्रेत्य **सर्वाङ्गसाहित्यंस्वरूपेण न सम्भवतीति** सर्वाङ्गसाहित्यान्यथानुपपत्तिः प्रधानोत्पत्त्यपूर्वकल्पने प्रमाणतयोक्ता। अत्रत्यसर्वपदविवरणार्थमेव च पूर्वं **प्रयाजानूया-जादिपूर्वोत्तराङ्गकलापविशिष्टस्येति** विशेषणमुक्तं नाङ्गविशिष्टस्येति।

**इदमत्र बोध्यम्**। समुदायापूर्वं प्रति त्रयो यागाः करणम्। तत्र क्षणिकक्रियारूपाणां क्रमेणानुष्ठीयमानानां मेलनाभावात् समुदायापूर्वमेव नोत्पत्तुमर्हतीति समुदायापूर्वोत्पत्त्युपपत्तये त्रयाणां यागानां स्वरूपेण मेलनाभावेऽपि तद्यागजन्यानि त्रीणि उत्पत्त्यपूर्वाणि सन्ति। तद्द्वारा मिलितानि तानि त्रीणि प्रधानानि समुदायापूर्वं जनयन्तीति कल्प्यत इत्येवं

समुदायापूर्वोत्पत्त्यनुगुणप्रधानत्रयसाहित्यान्यथानुपपत्त्याऽपि प्रकृते यद्यपि प्रधानोत्पत्त्यपूर्वकल्पनं सम्भवति । तथापि यत्र एकमेव प्रधानं कर्म यथाऽग्निहोत्रसौर्यादि तत्र प्रधानोत्पत्त्यपूर्वकल्पने प्रधानस्य सर्वाङ्गसाहित्यान्यथानुपपत्तिरेव प्रमाणतया आश्रयणीयेति सर्वसाधारणतया अङ्गसाहित्यान्यथानुपपत्त्यैव प्रकृतप्रधानोत्पत्त्यपूर्वकल्पनमुपपादितमिति ।

(२०) **अङ्गानामपीति** । अपिशब्दस्समुच्चये । प्रधानानामिव एषामपि स्वरूपेण साहित्याभावात् उत्पत्त्यपूर्वद्वारा साहित्यं वाच्यमिति। अत्रेदं चिन्त्यम् । प्रयोगविधिना सर्वाङ्गसहितेन प्रधानेन फलं कर्तव्यमिति प्रधानस्याङ्गसाहित्ये बोधिते अङ्गानामपि प्रधानसाहित्यमावश्यकमित्यर्थात्प्रतीयते । तत्र प्रधानस्याङ्गसाहित्यमन्यथानुपपद्यमानं प्रधानोत्पत्त्यपूर्वं कल्पयतीत्युक्तम् । यत्तु अङ्गानां प्रधानसाहित्यं तदङ्गोत्पत्त्यपूर्वं कल्पयतीति सम्प्रति ग्रन्थकार आह । तदनुपपन्नम् । प्रधानस्योत्तराङ्गसाहित्यमेव प्रधानोत्पत्त्यपूर्वकल्पकं न पूर्वाङ्गसाहित्यमपीति पूर्वमेवोपपादितम् । नच प्रधानानन्तरभावितया कल्प्यमानं प्रधानोत्पत्त्यपूर्वं प्रधानपूर्वभाविभिः क्षणिकैरङ्गैः प्रधानस्य साहित्यमुपपादयितुमीष्ट इति । तत्र प्रधानोत्पत्त्यपूर्वकल्पनेन प्रधानस्योत्तराङ्गानां च साहित्यस्य उपपन्नत्वात् उत्तराङ्गानामुत्पत्त्यपूर्वकल्पने प्रधानसाहित्यानुपपत्तिः प्रमाणमिति न शक्यते वक्तुम् । पूर्वाङ्गानां परं क्षणभङ्गिनामपूर्वरूपद्वाराभावे कालान्तरभाविप्रधानसाहित्यमनुपपद्यमानमपूर्वकल्पकं भवेदेव । तदत्र प्रधानसाहित्यानुपपत्त्याऽङ्गोत्पत्त्यपूर्वकल्पनवर्णनमनास्थयैव । किं तर्हि अङ्गोत्पत्त्यपूर्वकल्पने प्रमाणमितिचेत् अङ्गानामेव परस्परसाहित्यान्यथा अनुपपत्तिरिति पूर्वमेवोक्तमिति ।

**तथाचेति**। तेनेत्यर्थः। साङ्गयोर्दर्शपूर्णमासयोः कालान्तरभावि-स्वर्गजनकत्वं श्रूयमाणमुपपद्यत इति प्रदर्शयति **एवञ्चेति**। सतीति शेषः। चकारः सन्देहनिवृत्त्यर्थः। **आग्नेयैन्द्रद्वयेति**। ऐन्द्रं पय ऐन्द्रं दधीति द्वे ऐन्द्रे। सान्नाय्ययागावित्यर्थः। ऐन्द्रयोर्द्वयम्। आग्नेयश्च एन्द्रद्वयश्च आग्नेयैन्द्रद्वये ताभ्यां जन्यैरिति। **आग्नेयादीति**। आग्नेयादीनामुत्पत्त्यपूर्वाणि तेषां त्रितये इति द्विवचनं ताभ्यां जन्ये ताभ्यामिति। ननु प्रधानयागजन्यान्युत्पत्त्यपूर्वाणि यदि स्वर्गापूर्वस्य स्वर्गस्य च जनकानि तर्हि प्रधानानां स्वर्गापूर्वं स्वर्गञ्च प्रत्यन्यथासिद्धत्वं स्यात्। जनकजनकत्वात्। यथा घटं प्रति कुलालपितु-रित्याशङ्कायाम् आग्नेयादीनां श्रुतस्वर्गादिसाधनत्वसिद्ध्यर्थमेव व्यापारतयोत्पत्त्यपूर्वाणां क्लृप्ततया तदधीनसिद्धीन्युत्पत्त्यपूर्वाणि प्रधानानां स्वर्गादिसाधनत्वस्य भञ्जकानि न भवन्ति। तदाहुः व्यापारेण व्यापारिणो नान्यथा सिद्धिरितीति समाधातव्यमित्यभिप्रायेण **आग्नेयाद्युत्पत्त्य-पूर्वत्रितयजन्याभ्या**मिति पुनरप्यभिहितमिति विभाव्यम्। **फलेति**। उत्पत्त्यपूर्वादिसाध्यत्वात् अपूर्वान्तरं प्रति स्वस्यासाधनत्वाच्च महापूर्वमित्युक्तम्। परमापूर्वमित्यर्थः। अस्यापूर्वस्य **तदेव फलापूर्व**मिति अपूर्वप्रकरणारम्भे फलापूर्वमिति नामोक्तम्। तस्य किं निमित्तमित्याकाङ्क्षायां तदभिधानायेह **फलापूर्वनामक**मिति तन्नामकथनम्। **फलजनकेति** विशेषणे नतु फलजनकापूर्वत्वात्फलापूर्वमिति निमित्तं कथितं भवतीति। **ततश्चेति** चकारः तुकारार्थः। ततस्तु फलम्। न कर्ममात्रात्। तेन न कालान्तरभाविफलजनकत्वानुपपत्तिरिति।

अङ्गकलापजनितोपकारसहितेनाग्निहोत्रहोमेन स्वर्गं कुर्यादिति स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयत इत्येतादृशः प्रयोगविधिरिति

प्रयोगविधिस्वरूपमभिहितम् ततः नन्विदमनुपपन्नमित्यादिना तत्रानुपपत्तिं प्रतिपाद्यापूर्वरूपद्वारकल्पनया तत्परिहार इयता प्रबन्धेन कृतः । तददिं द्वारं घटयित्वा सम्प्रति प्रयोगविधिस्वरूपं दर्शयति (२१)**तथाचेति** । **उपकृताभ्यामित्यनेनाङ्गो**त्पत्त्यपूर्वमुक्तम् । **अपूर्वद्वारेत्यनेन** प्रधानोत्पत्त्यपूर्वसमुदायापूर्वपरमापूर्वाणि त्रीण्यपि संगृहीतानि । **फलापूर्वनिष्पत्तय इति** । फलार्थानामपूर्वाणां निष्पत्तय इत्यर्थः । अपूर्वद्वारा फलनिष्पत्तय इत्यत्र तात्पर्यम् ।

**त्रिविध** इति । तिस्रो विधा यस्य स त्रिविधः । विधा नाम प्रकारः विशेषः । व्याप्यधर्मावच्छिन्न इत्यर्थः । अपूर्वविधिनियमविधि-परिसङ्ख्याविधिरूपविशेषत्रयवान् विधिरिति बोधः । नतु विधा पदस्य व्याप्यधर्मोऽर्थ इति ध्येयम् । **तत्र** विधिभेदेषु । **प्रापयति** बोधयति विदधातीति यावत् । **प्रोक्षतीति** । कतिपयावयवेषु जलसंयोगानु-कूलव्यापारः प्रोक्षणम् । नन्वत्यन्ताप्राप्तत्वे विधिर्न सम्भवति । अत्यन्ताप्राप्तमिति प्रमाणसामान्यानवगतमित्यर्थात् । अथ विधिरस्ति अत्यन्ताप्राप्तत्वं न युज्यते । तेनैव प्रमाणेन प्राप्तत्वात् । विधीयते चात्यन्ताप्राप्तश्चेति हि बिप्रतिषिद्धमित्याशङ्कां परिहरन् अत्यन्ताप्राप्तत्वं प्रोक्षणे सङ्गमयति **एतद्विध्यभाव** इति । अत्यन्ताप्राप्तिरिति यस्य विधिवाक्यस्यापूर्वविधित्वमुपपादनीयं तदितरयावत्प्रमाणानवगतत्वं विवक्षितमिति भावः । अत्यन्तांशविवरणम् **कथमपीति** । केनापि प्रकारेणेत्यर्थः पक्षेऽपीति यावत् । अथवा कथमपि केनापि प्रमाणेनेत्यर्थः । प्रत्यक्षेण तावत् व्रीहिषु प्रकृतयागोपकारकः कश्चिदतिशयः प्रोक्षणेन जायत इति नावगम्यते । नाप्यनुमानादिना तदवगमः शक्यः । तेन व्रीहीणां

पुरोडाशार्थानां तण्डुलभावनिष्पत्त्यर्थतया अवघातस्येवाक्षेपेण प्रोक्षणस्य न प्राप्तिः । तत्र हि अवघातादिकं विना व्रीहीणां पुरोडाशे उपयोगो न सम्भवतीति भवति तदर्थमुपायविशेषाक्षेपः । प्रोक्षणं तु विना किं हीयते । अप्रोक्षितैरपि व्रीहिभिरवहतैः पूरोडाशनिष्पत्त्या यागनिर्वृत्तिसम्भवादिति भावः । नन्वेवं व्रीहिभिः पुरोडाशद्वारा यागे निष्पादयितव्ये प्रोक्षणस्यानपेक्षितत्वे विधिनाऽपि तत्र प्रोक्षणं न प्राप्नोति । अप्रोक्षिता अपि हि व्रीहयः कार्यं कुर्वन्त्येवेत्यत्राह **एतदिति** । तु शब्दः शङ्कानिवृत्त्यर्थः । **तत्सम्बन्धिषु** दर्शपूर्णमाससम्बन्धिषु । एवकारेण विधिसत्वेऽपि न प्राप्नोतीति यदुक्तं तस्य व्यवच्छेदः । अवघाते तण्डुलीभावस्येव प्रोक्षणे दृष्टप्रयोजनस्य कस्यचिदभावेऽपि परमप्रमाणभूतश्रुतिवचनबलादेव प्रोक्षणं कर्तव्यतया प्राप्नोतीति भावः । ननु वेदोऽपि निष्प्रयोजनेऽर्थे पुरुषं प्रवर्तयितुं न शक्नोतीति चेन्न । अत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो जायत इत्यङ्गीकारेण निष्प्रयोजनत्वविरहात् । नच तादृशातिशयं विनाऽपि व्रीहिभिः पुरोडाशे जायमाने पुनरपि निष्प्रयोजनत्वमेवेति वाच्यम् । प्रोक्षणजनितातिशयविशिष्टव्रीहिनिष्पन्नेनैव पुरोडाशेन क्रियमाणे याग उत्पत्त्यपूर्वं जनयितुं शक्नोतीति कल्पनेन तस्यातिशयस्य प्रयोजनवत्वात् ।

अथ विधिवाक्ये व्रीहीनिति द्वितीयया व्रीहिमात्रस्य प्रोक्षणं प्रति साध्यत्वमवगम्यते । तच्च प्रोक्षणं विनाऽपि व्रीहीणां सिद्धत्वात् पुरोडाशादिकार्यकरणसमर्थत्वाच्च न सम्भवतीत्युक्तम् । यत्तु अप्रोक्षितैः व्रीहिभिः पुरोडाशं कृत्वा यागानुष्ठाने उत्पत्यपूर्वं न जायत इति यागे तज्जननानूकूलयोग्यताधानं तत्प्रयोजनमुच्यते तन्न युज्यते, तथा कल्पने प्रमाणाभावादिति चेदुच्यते । दर्शपूर्णमास-प्रकरणाम्नातेन व्रीहिभिर्यजेतेति

वचनेन व्रीहीणामपूर्वसाधनीभूतयागसाधनत्वं श्रुतम् । तेन यागद्वारा व्रीहीणामपूर्वसाधनत्वमवगतम् । एवं सति व्रीहीन् प्रोक्षतीति विधौ व्रीहिशब्देन व्रीहित्वधर्मविशिष्टस्योपस्थितौ प्रागेव सिद्धस्य तस्य द्वितीयाऽवगतप्रोक्षणसाध्यत्वासम्भवात् व्रीहित्वधर्मं परित्यज्य प्रकरणादुपस्थितम् अपूर्वसाधनत्वरूपं धर्मान्तरं लक्षयित्वा अपूर्व-साधनत्वविशिष्टस्य प्रोक्षणसाध्यत्वमुच्यते प्रकृतदर्शपूर्णमासा-पूर्वसाधनीभूतं द्रव्यं प्रोक्षणेन भावयेदिति। तेनाप्रोक्षितद्रव्यस्यापूर्वसाधनत्वं न भवतीति लभ्यत इति प्रकरणसहितं व्रीहिपदसमभिव्याहाररूपं वाक्यमेव प्रोक्षणस्य द्रव्यद्वाराऽपूर्वसम्बन्धं ग्राहयतीति न कश्चिद्दोषः। एतत्सर्वं मनसि निधायैव ग्रन्थकारः **दर्शपूर्णमासप्रकरणे दर्शपूर्णमासीयव्रीहिषु तत्सम्बन्धिव्रीहिषु** इति प्रकरणरूपं प्रमाणं तेन सिद्धं व्रीहीणां यागसम्बन्धित्वञ्चोक्तवानिति ध्येयम्।

नियमविधिं निरूपयति **य** इति। **पक्ष** इति। बहुषु पक्षेषु सम्भवत्सु एकस्मिन् पक्षे न पक्षान्तरे इत्यर्थः। कदाचिदिति पर्यवसितम्। **नियमयति** नियतमवगमयति सर्वदा कर्तव्यं बोधयतीति यावत् । **तत्रैवेति** । दर्शपूर्णमासप्रकरण एवेत्यर्थः। पक्षे प्राप्तिमवघातस्योपपादयति **एतदिति**। **उत्पत्तीति** । उत्पत्तेर्वाक्यं तेनावगतः पुरोडाशः यदाग्नेय इत्युत्पत्तिवाक्ये अष्टाकपालपदेन बोधितः । तस्य तस्मिन् वा उपयोगिनः उपयोगवन्तः तण्डुलाः तेषां निष्पत्तिः तस्या अनुकूलं वैतुष्यं तद्रूपाय कार्याय । विगतास्तुषाः येभ्यस्ते वितुषाः तेषां भावो वैतुष्यम्। **इदमत्रोक्तं भवति**। उत्पत्तिवाक्ये आग्नेययागस्याष्टाकपालः पुरोडाशो द्रव्यमित्यवगतम् । पुनस्तत्र व्रीहिभिर्यजेतेति वाक्यान्तरेण विधीयमानं व्रीहिद्रव्यं न

साक्षात्साधनं भवितुमर्हतीति व्रीहिभ्यो निष्पन्नः पुरोडाशो यागसाधन-मित्यवगम्यते। तत्र व्रीहीणां तुषविमोकेन तण्डुलीभावे पिष्टं कृत्वा पुरोडाशः पच्यते इति पुरोडाशनिष्पत्तिक्रमः । एतदर्थं कर्तव्यस्य तुषविमोकस्य उलूखले धान्यानि क्षिप्त्वा मुसलावघट्टनरूपमवहननम् अश्मना कुट्टनं, नखैर्विदलनं, यन्त्रघर्षणमिति बहूनि साधनानि । एतेष्वन्यतममपेक्षमाणं वैतुष्यं यदा अश्मघट्टनादिना निष्पाद्यते तदा अवहननं न प्राप्यते । यदात्वितरेषामभावस्तदा प्राप्यत इति पक्षे प्राप्तमवहननमिति। **अवहननवत्** प्रयोगविशेषेऽवहननमिव । **कदाचित्** तद्भिन्नप्रयोगविशेषानुष्ठानसमये। **तस्मिन् पक्षे** नखविदलनादिप्राप्तिपक्षे । **कार्यान्यथोपपत्तेरिति अवहननस्य प्राप्त्यभावात्** इत्यतः प्राग्योज्यम् । कार्यान्यथोपपत्तिर्हि अवहनप्राप्त्यभावे हेतुरिति । कार्यस्य वैतुष्यस्य अन्यथाऽवहननं विनाप्युपपत्तिरित्यर्थः । **पाक्षिकी** कादाचित्की । ननु यदि नखविदलन-मप्यवघातवत् वैतुष्यसाधनं तर्हि व्रीहीनवहन्तीति विधिसत्त्वेऽपि नखविदलनं प्राप्नोत्येव । तेनापि वैतुष्यसम्भवात् । अवघातं हि व्रीहीनवहन्तीति विधिर्विधातुं शक्नोति न नखविदलनादिकं प्रतिषेद्धुम् । अथ यदि विधिं विनाऽपि प्राप्तस्यावघातस्य विधानं व्यर्थमितीतरनिवृत्तौ तात्पर्यमुच्यते तर्हि परिसङ्ख्याविधिरयं स्यात् । तत्र नियमविधिरिति विधिप्रकारान्तरकथनमयुक्तमित्याशङ्कां परिहरन् लक्षणघटकं **नियमयतीत्यंशमुपपादयति सत्यस्मिन्निति** । अस्मिन् विधौ सति अवहननेनैव वैतुष्यं कुर्यादिति नियमो भवति तस्मिन् सति नखविदलनं निवर्तते नतु नखविदलनादिनिवृत्तिरिह विधीयत इत्यर्थः । एतदुक्तं भवति । एतद्विध्यभावे प्रयोगविशेषे नखविदलनाद्युपायान्तरप्राप्तिः । प्रयोगविशेषे

चावघातादिप्राप्तिरिति स्थितिः । तत्र यदि व्रीहीनवहन्तीति विधिरवघात-स्वरूपमात्रस्य यागे प्राप्तिं कुर्यात् तर्हि स व्यर्थः स्यात् । क्वचित्प्रयोगविशेषे उपायान्तराभावे अवघातस्य प्राप्तत्वात् । तस्मात् कदाचित्प्राप्तस्यावघातस्य नित्यं प्राप्तिं कर्तुम् अयं विधिः प्रवृत्त इति वक्तव्यम् । तत्प्राप्तिकरणञ्च द्वेधा सम्भवति यत्र प्रयोगविशेषे उपायान्तरस्य प्रसक्तिस्तत्राप्यवहननं कर्तव्य-मित्ययोगव्यवच्छेदेन वा, यस्मिन् कस्मिंश्चिदपि प्रयोगे नखविदलनादिकं न कर्तव्यमित्यन्ययोगव्यवच्छेदेन वा । तत्रायोगव्यवच्छेदो नियमः अन्ययोगव्यवच्छेदः परिसङ्ख्या । तत्र प्रकृतेऽवघातविधौ अस्य नियमः क्रियते । तेन सर्वदा दर्शपूर्णमासप्रयोगेषु अवघातः कर्तव्य इति विधिना नियमे बोधिते नखविदलनादिकमर्थान्निवर्तते न तु विधेस्तत्र तात्पर्यमिति नोक्तरीत्या विधिसत्वेऽपि नखविदलनादिप्रसक्तिः न वा परिसङ्ख्याविधित्वापत्तिरिति । नचात्र परिसङ्ख्याविधानेऽपि इष्टसिद्धौ तत्प्रतिषेधाग्रहो न युक्त इति वाच्यम् । अवघातस्य सर्वदा प्राप्तिमन्तरा नखविदलनादेः निवर्तयितुमशक्यत्वेन विधेर्नियमेऽपि तात्पर्यं वक्तव्यम्। नियमे तु सति इतरनिवृत्तिरार्थिकीति पुनस्तत्र विधेस्तात्पर्यं न सम्भवति। सन्निहितत्वाच्चात्र नियमविधित्वं युक्तं न परिसङ्ख्याविधित्वम् । अवघातो हि शब्देनोपात्त इति तद्गततया नियमस्सन्निहितः । अनुपस्थितनख-विदलनादिगतत्वेन परिसङ्ख्या विप्रकृष्टेति ।

**अवहननेनैवेति** । एवकारोऽयोगव्यवच्छेदे । **कार्यमिति** । कर्तव्यमित्यर्थः । **सर्वात्मना** सर्वथा । एवं नियमविधित्वमुपपादितम्। तत्र निष्प्रयोजनत्वमाशङ्क्य परिहरति **नचेति** । **व्यर्थः** प्रयोजनशून्यः **प्रयोजनाभावात्** प्रयोजनस्यादर्शनादित्यर्थः । यद्वा **नियमो**

नियमविधिर्व्यर्थः नियमस्य प्रयोजनाभावात् व्यर्थत्वात् । व्यर्थनियम-विधायकत्वाद्विधिः व्यर्थ इत्यर्थः । तेन न हेतुसाध्ययोरभेदः। यदि नखविदलनादिजन्यवैतुष्यापेक्षया विजातीयं वैतुष्यमवघातेन जायेत तदेव च क्रतूपयुक्तं स्यात् तदा अवघातनियमः तादृशविजातीयवैतुष्यजनकतया सप्रयोजनः स्यात् । तत्तु नास्ति । तस्मादवघातनियमो व्यर्थ इति भावः । पूर्वोक्तान्यपूर्वाण्यपेक्ष्य वैलक्षण्यं द्योतयितुं **किञ्चिदिति** । अस्यापूर्वस्य नियमादृष्टमिति व्यावहारिकीं संज्ञां प्रतिपादयितुम् इत्यङ्गीकारादित्यनुक्त्वा **इति नियमादृष्टाङ्गीकारादित्युक्तम्** । **अङ्गीकारात्** अवघातनियम-शास्त्रानुपपत्त्या कल्पनादित्यर्थः । **दृष्टकार्येति** । दृष्टप्रयोजनाभावे अपीत्यर्थः । **उत्पत्तेरिति** । **उत्पत्तेर्नियमो व्यर्थ इति नच वाच्यमि-त्यन्वयः** । प्रयोजनं हि दृष्टादृष्टभेदेन द्विविधम् । तत्रावघातस्य वैतुष्यादि-दृष्टकार्ये नखविदलनाद्यविशेषेऽपि नखविदलनाद्यजन्यादृष्टप्रयोजनायाव-घातनियमोऽनेन वाक्येन विधीयत इति न वैयर्थ्यमिति भावः ।

ननु कोऽयं नियम इति । व्यापकत्वम् । दर्शपूर्णमासव्रीहि-व्यापकत्वेन हि अवघातो विधिना बोध्यत इति । नैतद्युज्यते । यथाशक्ति क्रियमाणे नित्यप्रयोगे कदाचिदवघातस्याननुष्ठानेन तदसम्भवात् । शक्तकर्तृकदर्शपूर्णमासप्रयोगीयव्यापकत्वं नियम इत्युच्यते । तदप्ययुक्तम् । किमिदं व्यापकत्वं पुरुषेण कर्तव्यतया विधिरवगमयति उत स्वतस्सिद्धस्य तस्योपादानमात्रं विधत्ते । नाद्यः । पुरुषो हि अवघातमात्रं कर्तुं शक्नोति । न तु प्रथममवघातं कृत्वा पश्चात् तस्मिन्नुक्तविधं व्यापकत्वं सम्पादयितुम् ।न हि लोके वह्निमुत्पाद्य पश्चात् धूमव्यापकत्वं तस्य सम्पादयन्ति । न द्वितीयः । तस्य विधानायोगात् । अवघाते विहिते तस्य नित्यं प्राप्तत्वात् ।

**अभावाभावो नियम इति नः प्रथमे मीमांसागुरवः** । अत्रापीदं वक्तव्यम् । एतेनावघात एव नियम इत्युक्तं भवति । द्वितीयाभावो हि प्रथमाभाव-प्रतियोगिस्वरूपः । तथाच अवघातेनैव वैतुष्यवददृष्टमपि जायत इत्यवघातस्य वैतुष्यं फलं तन्नियमस्य दृष्टाभावेऽप्यदृष्टं फलमिति सार्वत्रिकः प्राचां व्यवस्थया व्यवहारो नोपपद्यत इति । अभावाभाव एव नियमः । अवघातनियमो नाम् अवघाताभावाभाव इति सोऽप्यवघातस्वरूप एव । अवघातादेव चादृष्टमपि जायते । अत एव अयोगव्यवच्छेदार्थक एवकारप्रयोगे श्रौतो नियम इत्यभियुक्ता लिखन्ति । अयोगव्यवच्छेदो ह्यभावाभाव एव । प्राचां व्यवस्थया व्यवहारस्य तु एवमुपपत्तिः । अवघातत्वेन रूपेणावघातस्वरूपविधिप्रतीतस्य तस्य प्रोक्षणस्येवा-दृष्टफलकत्वं न बुद्ध्यते । पुरोडाशार्थव्रीहिगतवैतुष्यरूप दृष्टफलवत्व-दर्शनात् । तत्रावघातस्याक्षेपेणैव प्राप्तत्वाद्विधिवैयर्थ्य शङ्कायामाक्षेपेणाव-घातस्येव नखविदलनादेरपि क्वचित्प्रयोगविशेषे प्राप्तिसम्भवात् तत्र प्रसक्तो योऽवघातस्याभावः तस्याभावं बोधयितुमयंविधिः इत्यवघाताभावाभाव-रूपनियमबोधकतया तत्सार्थक्यमुच्यते । तस्यापि निष्प्रयोजनत्वशङ्कायाम-दृष्टं फलमुच्यते । एवञ्च अवघातत्वेनावघातप्रतीतौ तज्जन्यतयाऽदृष्टस्या-कल्पनात् तदभावाभावरूपतया तत्प्रतीतौ तज्जन्यतया तत्कल्पनाच्च नियमजन्यमदृष्टमिति व्यवहारो नावघातजन्यमितीति ।

नन्वेवमवघातनियमो नाम अवघाताभावाभावः । अवघाता-भावाभावश्चावघात एवेति अवघातनियमोऽप्यवघात एव भवति । तत्र अवघातो नियम इति स्यात् नत्ववघातस्य नियम इति । उच्यते । नियमो ह्यभावाभावः । तत्र प्रथमाभाव एव प्रतियोगित्वेनान्वययोग्यस्य

समभिव्याहृतपदार्थस्यान्वयो व्युत्पन्नः । तस्यैव प्रतियोगिसापेक्षत्वात् । तत्प्रतियोगित्वप्रतिपादनाय च षष्ठी भवति । तेनावघातस्य नियम इत्येव प्रयोगः यथाऽवघातस्याभावाभाव इति । अवघातनियमोऽवघात इति प्रयोगस्तु अवघाताभावाभावो अवघात इतिवत् इष्ट एवेति स्थीयते ।

ननु नियमवैयर्थ्ये उक्ते अदृष्टं तत्प्रयोजनमित्युक्तम् । तदपि व्यर्थमेव । तादृशादृष्टं विनापि वैतुष्यमात्रेण तण्डुलीभावे पुरोडाशेन यागनिष्पत्त्युपपत्तेरित्यत्राह **तच्चेति** । चकारः प्रयोजनवत्वसन्देह निवृत्तौ। **यागेति** । अवघातेन व्रीहिषु वैतुष्यमिवादृष्टमपि जन्यते । तद्विशिष्टतण्डुलान् पिष्टं कृत्वा पुरोडाशं पक्त्वा यागकरणे यागे शक्तिविशेषो जायते । तादृशशक्तिविशेषविशिष्टाद्यागादुत्पत्त्यपूर्वं ततः फलापूर्वमिति भावः । उक्तमेव व्यतिरेकणे प्रदर्शयन् नियमादृष्टप्रयोजनवत्वं निगमयति **तेनेति** । उक्तविधया नियमादृष्टस्य फलापूर्वे उपयुज्यमानत्वेनेत्यर्थः । **नोत्पद्यत इति** । अवघाताभावे नियमादृष्टाभावेन यागे शक्तिविशेषाभावादुत्पत्त्यपूर्वानुत्पत्त्या फलापूर्वं नोत्पद्यत इत्यर्थः । **इतिशब्देन तच्चापूर्व**मित्यादि परामृश्यते । अवघातरूपक्रियानियमस्थले प्रतिपादितं नियमादृष्टकल्पनं तस्य फलापूर्वे उपयोगञ्च द्रव्यनियमस्थलेऽतिदिशति **एवमिति** । नियमादृष्टं तस्यावैयर्थ्यञ्च **बोध्य**मिति शेषपूरणेनेदं व्याख्यातव्यम् ।

परिसङ्ख्याविधिं निरूपयति **द्वयोरिति** । परिसङ्ख्या द्वेधा भवति क्वचित् शेषिद्वये एकस्याङ्गस्य प्राप्तौ एकस्मिन् शेषिणि तस्याङ्गस्य निवृत्तिरूपा एका परिसङ्ख्या । क्वचिच्चैकस्मिन् शेषिणि अङ्गद्वयप्राप्तौ एकतरस्याङ्गस्य तस्मिन् शेषिणि निवृत्तिरित्यपरा । अनयोराद्या

शेषिपरिसङ्ख्येत्युच्यते, इतरा शेषपरिसङ्ख्येति । उभयत्रापि **द्वयो**रित्यादिग्रन्थो योजयितुं शक्यते । तत्र ग्रन्थकारेण शेषिपरिसङ्ख्योदाहरणस्यैवोपादानात् तदानुगुण्येनायं ग्रन्थः परिष्कारे व्याख्यातः । **तत्रायमक्षरार्थः** । समुच्चित्य अविकल्पेन । अस्मिन् वा शेषिणि तस्मिन् वेति विकल्पं विनाऽस्मिन्नपि तस्मिन्नपीति समुच्चयेनेत्युक्तं भवति । **इतरेति** । इतरस्मादितरस्मिन् वा निवृत्तिरितरनिवृत्तिः । सा फलं यस्य स इतरनिवृत्तिफलक इति विग्रहः। अत्रैवमपि व्याख्यानं शङ्क्येत - द्वयोरिति षष्ठ्येव । शेषिद्वयस्यैकस्मिन् शेषे उद्देश्यत्वेन समुच्चित्य प्राप्तावितरस्य एकतरस्य इष्टादन्यस्य शेषिणो निवृत्तिः फलं यस्य स परिसङ्ख्याविधिरिति । तत्तु ग्रन्थकारस्यानभिमतं भाति । उपरि **अश्वरशनादान इव गर्दभरशनाऽऽदानेपीति** शेषिद्वये विधेयस्यैव प्राप्त्युपपादनात् । **गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति** मन्त्रस्यैव निवृत्त्युक्तेश्चेति ।

शेषपरिसङ्ख्यापक्षे तु **द्वयोः** शेषयोः शेषद्वयस्येत्यर्थः समुच्चयेनैकस्मिन् शेषिणि प्राप्तौ **इतरस्य** विधेयादन्यस्य शेषस्य निवृत्तिः फलं यस्य स परिसङ्ख्याविधिरिति व्याख्येयम् । अत्रोदाहरणं परिष्कार एवोक्तम् ।

शेषिपरिसङ्ख्योदाहरणमाह **यथेति** । **चयनप्रकरण** इति । इष्टकोपरि इष्टकानिधानं चयनम् । एतत्कर्मार्थे इष्टकानिष्पादनोपयोगि-मृदाहरणाय अश्वो गर्दभश्च विहितः । आहरणसमये मृदो बन्धनाय अश्वस्यैका गर्दभस्यापरेति द्वे रज्जू स्तः । तस्मिन्नेव प्रकरणे इमामगृभ्णन् रशनामृतस्येति मन्त्रोऽपि पठितः । एवं सतीत्यर्थः । अगृभ्णन् अगृह्णन् ।

हकारस्य भकारश्छान्दसः। ऋतस्य यज्ञस्य इमां रशनां रज्जुम्। **इति** अनेन मन्त्रेण। अश्वस्याभिधानीं रज्जुम्। नन्वत्र कस्याङ्गस्य कस्मिन् शेषिद्वये केन प्रमाणेन प्राप्तिरित्यत्राह **एतदिति**। मन्त्ररूपस्याङ्गस्य अश्वरशनादानं गर्दभरशनादानमिति शेषिद्वये लिङ्गरूपप्रमाणेन प्राप्तिरित्यर्थः। निश्चयार्थो **हि** शब्दः। **प्रकाशकः** प्रतिपादकः। लिङ्गप्रमाणसद्भावप्रदर्शनाय मन्त्रस्य रशनेत्यादिविशेषणमुपात्तम्। **रशनादानेति**। प्रकाशने सामर्थ्यं तद्रूपात्। अश्वरशनादाने मन्त्रप्राप्तेरिष्टत्वमन्यत्रानिष्टत्वं च विविच्य दर्शयितुम् उभयोरपि नियमेन प्राप्नुयादित्यनुक्त्वा अश्वरशनादान इवान्यत्रापि प्राप्नुयादित्युक्तम्। नियमविधित्वशङ्कानिवर्तकं **समुच्चित्ये** त्यनेनाभिसंहितमर्थमाह **नियमेनेति**। एवं शेषिद्वये प्राप्तिरुपपादिता। इतरनिवृत्तिफलकत्वमाह **सत्यस्मिन्निति**। अस्य **मन्त्रनिवृत्तिः भवतीत्यत्रान्वयः**। **एवकारो**ऽन्ययोगव्यवच्छेदे। तस्यैव विवरणं **न तु गर्दभरशनामिति**। ननु तस्यापि स्मृतिजननाय मन्त्रः कश्चिदपेक्षितः। यद्ययं मन्त्रस्तत्र न स्यात् तर्हि तत्र मन्त्र एव न स्यात्। अन्यमन्त्रस्य रशनादान-प्रकाशने सामर्थ्याभावात् इत्यत्राह **सात्त्विति**। सति हि मन्त्रे तेनैव स्मर्तव्यमिति नियमः। यदि मन्त्रे प्रमाणं नास्ति तर्हि तूष्णीमेव कर्तव्यम्। स्मृतिरन्यथाऽपि सम्भवतीति भावः। **गर्दभेति**। गर्दभरशनाया मन्त्रनिवृत्तिरिति पञ्चम्यन्तपाठः श्रेयान्।

**पूर्वमिति**। समुदायापूर्वनिरूपणावसर इत्यर्थः। **दर्शेति**। दर्शपूर्णमासयोरङ्गानि तेषां भाव इति। तत्र प्रयाजादिषु। अस्य **अङ्गत्वबोधकेत्यत्रा**ङ्गत्वेऽन्वयः। नित्यसापेक्षत्वान्न वृत्तिविरोधः। **षट्** षड्विधानि। **श्रुतीति**। श्रुत्यादीनां भेद इति षष्ठीतत्पुरुषः। षष्ट्यर्थ

आधेयत्वम्। भेदो नाम असाधारणधर्मः। स च प्रकृते श्रुतित्वलिङ्गत्वादि-रूपः । तृतीयाया अभेदोऽर्थः । अस्य षड्विधानीत्यत्र विधापदवाच्ये विभाजकधर्मेऽन्वयः। **भेदेनेत्य**त्रैकत्वमविवक्षितम्। तथाच श्रुत्यादिवृत्ति-श्रुतित्वादिरूपासाधारणधर्माभिन्नषट्त्वसङ्ख्याविशिष्ट विभाजकधर्मवन्ति अङ्गत्वबोधकप्रमाणानीति नैयायिकानुसारिणः। वस्तुतस्तु भेदो नाम विशेषः। व्याप्यधर्मावच्छिन्न इत्यर्थः । श्रुत्यादीनां भेद इत्यत्र षष्ठ्यर्थोऽभेदः । श्रुत्यादिश्चासौ भेदश्चेति कर्मधारय एव वा कर्तव्यः । एकत्वमविवक्षित-मित्युक्तम् । तृतीयार्थः प्रयोज्यत्वम् । एवञ्च श्रुत्यादिरूपविशेषप्रयोज्य-षड्विधत्ववन्ति अङ्गत्वबोधकप्रमाणानीति बोध इति युक्तमुत्पश्यामः । भेदपदस्यान्योन्याभावपरत्वमेव वाऽङ्गीकृत्य श्रुत्यादीनां परस्परं भेदेनाङ्गत्वग्राहकप्रमाणस्य षड्विधत्वमिति बोधोऽनुसन्धेयः । श्रुत्याऽङ्गत्वमाह **तत्रेति** । षट्सु प्रमाणेष्वित्यर्थः । श्रुत्येत्यत्रान्वयः । **तत्करणत्वेनेति**। तृतीयारूपया श्रुत्या दधि होमकरणत्वेन बोध्यत इत्यर्थः। ननु यद्यत्र दधि विधीयते तर्हि जुहोतीति धातूपादानं व्यर्थं स्यादित्यत्रोक्तं होमं **जुहोतीत्यनेनोद्दिश्येति**। उद्देश्यत्वेन होमस्यान्वयार्थं धातूपादानमिति भावः । ननु उद्देश्यत्वे अनुवाद्यत्वमावश्यकम् । तदर्थञ्च मानान्तरेण प्राप्तिर्वक्तव्येत्यत्र पूर्वोक्तमेव स्मारितम् **अग्निहोत्रवाक्यप्राप्तमिति**। यद्वा परोद्देशप्रवृत्तकृतिकारकत्वरूपमङ्गत्वमुपपादयितुं दध्नः करणकारकत्वात् परगतोद्देश्यत्वमप्यु**द्दिश्येत्यन्तेनोक्तमिति** ध्येयम्।

**लिङ्गं** लक्षयति **लिङ्गेति**। हेतुचिह्नादिषु प्रसिद्धस्य **लिङ्गपदस्य** प्रकृतविवक्षितानतिप्रसिद्धार्थविशेषपरत्वे शिष्याणामवधानं सम्पादयितुं **लिङ्गं नामेति** नामपदमधिकमुपात्तम् । अत एव वाक्यलक्षणे

समाख्यालक्षणे च प्रसिद्धस्यैवार्थस्य ग्रहणात् न नामपदोपादानम् । प्रकरणस्थानलक्षणयोस्तु लिङ्गवत् अनतिप्रसिद्धार्थपरत्वात्तदुपादानम् । श्रुतिशब्देन च वाचकशब्दस्य सुस्पष्टं प्रतीयमानतया लक्षणमपि पृथक् न कथितमिति विभावनीयम्। **सामर्थ्यं** शक्तिः । विभजते **तच्चेति** । चकारः सामान्यविभागसमुच्चयार्थः । वाक्यालङ्कार एव वा । अर्थं गतम् **अर्थगतम्** । एवं **शब्दगत**मित्यत्रापि । **इति**शब्दोऽभेदे । अर्थगतसामर्थ्यशब्दगत-सामर्थ्यरूपप्रकारद्वयवत् सामर्थ्यमिति बोधः । प्रकारोऽपि विशेष एव । अर्थगतसामर्थ्यमुदाहर्तुमाह **आद्यमिति** । तथा ब्रूम इति शेषः । आद्यं यादृशं तादृशमुदाहराम इत्यर्थः । यद्वा यथेत्युत्तरान्वयि । यथा यादृशमुदाहरिष्यमाणं तथा तादृशमाद्यं भवतीति व्याख्येयम् । **स्रुवेणेति** । स्रुवो नाम दारुमयः खजाकातुल्यः हस्तदीर्घस्तीक्ष्णमुखः पात्रविशेषः । अवद्यति अवखण्डयति । दो अवखण्डन इति धातुः । **इतीति** । इति वचनेन [illegible] अवगमेऽपीत्यत्रान्वयः । **अवदानेति** । अवदानानां स[illegible]न्' अवदानसामान्यम् । सामान्यं साधारणधर्मः । अत्र तदवच्छिन्नमर्थः । षष्ठ्यर्थ आधेयत्वमसाधारणधर्मेऽन्वेति । अवदानवृत्त्यवदानत्वरूपसाधारण-धर्मावच्छिन्नमिति अवदानसामान्यमित्यस्यार्थः । अथवा अवदानस् सामान्यं षष्ठ्यर्थोऽभेदः । अवदानाभिन्नं यत् सामान्यं साधारणधर्णावच्छिन्नं तदित्यर्थः । अथ वा सम्बन्ध एव षष्ठ्यर्थः । तस्य च सामान्यपदार्थ-साधारणधर्मावच्छिन्न एवान्वयः । अवदानसम्बन्धि यत् साधारण-धर्मावच्छिन्नं तदित्यर्थः । सम्बन्धश्च स्ववृत्त्यवदानत्वरूपधर्मावच्छिन्नत्व-रूपः अभेदरूपो वा । सर्वथा द्विर्हविषोऽवद्यतीति वचनेन प्राप्तानि पुरोडाशस्य दधिपयसोर्मांसस्य चेति सर्वाण्यवदानानि अवदानसामान्यमिति

विवक्षितानि। अवदानसामान्यस्य शेषः तत्वावगमेऽपीति। पुरोडाशाज्य-मांससर्वावदानाङ्गत्वप्रतीतावपीत्युक्तं भवति । **स्रुवस्येति** । अस्य **शेषत्वावगमेऽपीति** पूर्वत्र वा **अवदानविशेषाङ्गत्वमित्युत्तरत्र** वाऽन्वयः। अनयोः पक्षयोः क्रमादुत्तरत्र पूर्वत्र च तस्येत्यध्याहर्तव्यम् । स्रुवस्येत्युभयत्रान्वितमिति पर्यवसितम्। **सामर्थ्येति**। द्रवद्रव्यावदानमात्रे करणीभवितुं शक्तिः स्रुवस्य सामर्थ्यम्। **आज्येति**। आज्यं च सान्नाय्ये च आज्यसान्नाय्यानि । सान्नाय्ये **ऐन्द्रं** दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायामिति बिहिते दधिपयसी। तानि आदौ येषाम्। तानि च द्रवरूपाणि द्रव्याणि तेषामवदानविशेषः तस्याङ्गं तत्वम् । विशेषो व्याप्यधर्मावच्छिन्नः । अवदानस्य अवदानसम्बन्धी विशेषः, व्याप्यधर्मावच्छिन्न इत्यर्थः । द्रवद्रव्याणामवदानं तद्रूपो विशेष इत्यपि विग्रहो युज्यते। अत्र **'न तु सर्वावदानाङ्गत्वम्'** इति शेषः पूरयितव्यः। अत्र हेतुमाह स्रुवेणेति। अशक्यत्वादिति। पुरोडाशो हि पिण्डरूपः। न तस्य एकदेशस्तैलादिद्रवद्रव्यवदवखण्ड्य आदातुं शक्यते। तथा मांसस्य। तस्मादवदानान्तरे सामर्थ्याभावान्न तत्र स्त्रुवस्याङ्गत्वम् । किन्तु हस्तेनावद्यतीति विध्यन्तरात् सामर्थ्यसहकारेण हस्तः पुरोडाशावदानस्याङ्गम्। स्वधितिनाऽवद्यतीति वचनात् सामर्थ्यसहकारेणैव मांसावदानस्य स्वधितिपदवाच्योऽसिरङ्गमिति। एवं च स्रुवेणावद्यतीति विधिमात्रपर्यालोचनेन सर्वावदानेषु स्रुवस्याङ्गत्वप्राप्तौ यद्बलात् द्रवद्रव्यावदानमात्रे सः नान्यत्रेति व्यवस्थाप्यते तदिदं स्त्रुवरूपार्थगततयाऽर्थगतं सामर्थ्यमिति **प्रघट्टकार्थः**। द्वितीयं सामर्थ्यमाह **शब्देति**। तु शब्दो वैलक्षण्यार्थः। क्रियाविशेषनिष्पादनसामर्थ्यं पूर्वमुक्तम्।

इदं तु अर्थबोधनसामर्थ्यमिति । उदाहरति **यथेति** । ननु निर्वापप्रकाशन-सामर्थ्यमस्य मन्त्रस्यास्तु । तेन तदङ्गत्वमिति को निर्बन्धः । न हि कस्यचित् पाककरणसामर्थ्ये सति तस्यपाकाङ्गत्वमवश्यं भवति । अत्राह **यस्य मन्त्रस्येति** । लोके पाकसमर्थस्य पुंसः तदङ्गत्वनिर्बन्धविरहेऽपि मन्त्रस्य स्वप्रकाश्यार्थाङ्गत्वमावश्यकमेव । अन्यथा क्रतुप्रकरणपठितस्य तस्य वैयर्थ्यापत्तेः । अत एव प्रकरणविशेषेणान्यथा वा क्रतुना सह सामान्यसम्बन्धेऽवगते तन्निर्वाहाय लिङ्गमिदं प्रकरणगतार्थविशेषाङ्गत्वं बोधयतीति सम्बन्धसामान्यबोधकप्रमाणान्तरसापेक्षं सामर्थ्यमित्यस्य व्यवहार इति भावः ।

वाक्यरूपं तृतीयमङ्गत्वप्रमाणमाह **पदान्तरेति** । अन्यत्पद पदान्तरम् । यस्याङ्गत्वं वक्तव्यं तद्वाचकात् पदादन्यत्पदमित्यर्थः । तेन समभिव्याहारः सहोच्चार्यमाणत्वम् । उदाहरति **यथेति** । 'इषे त्वेति' इति पदं मन्त्रवाचकम् । तस्य 'छिनत्ति' इति पदान्तरेण सहोच्चार्यमाणत्वं तद्वाच्यस्य मन्त्रस्य पदान्तरवाच्यछेदनाङ्गत्वं बोधयतीति समन्वयः । तदिदं निष्कृष्याह **अत्रेति** । अस्मिन् वाक्य इत्यर्थः । **इत्यत्रैवेति** । लिङ्गकृताङ्ग-त्वोदाहारणतयोपात्तात् अग्नये जुष्टं निर्वपामीति मन्त्रादन्यदेव वाक्यीयाङ्ग-त्वोदाहरणं स्यादिति स्वरसतः तस्य अत्रोदाहरणत्वेनाप्राप्तौ तदेवोदाहरण-मत्रापि भवतीति प्रतिप्रसवार्थोऽयमेवकारः । **एकवाक्यतेति** । तदर्थान्वितस्वार्थकत्वतात्पर्येण सहोच्चार्यमाणत्वादित्यर्थः । एतादृशमेव सहोच्चार्यमाणत्वं समभिव्याहारपदेन विवक्षितमिति बोध्यम् ।

ननु तत्पदस्य पदान्तरेण सहोच्चार्यमाणत्वं तत्पदवाच्यस्याङ्गत्वे

प्रमाणमित्युक्तम् । इदानीं तु कथं तस्य पदस्यैवाङ्गत्वं तेन प्रमाणेनाभिधीयते। श्रूयताम् । तेन पदेन यत्प्राप्यते तस्याङ्गत्वमिति विवक्षितम् । प्रथमोदाहरणे 'इषे त्वे ति' इति पदेन विधेयतया मन्त्रः प्राप्यत इति तस्यैव वाक्यादङ्गत्वम् । द्वितीयोदाहरणे पुनः अग्नये जुष्टमित्यादिपदैः स्वरूपमेव प्राप्यते । तेषां हि नार्थान्तरं विधातुमुपादानं पूर्ववत् । किन्तु स्वरूपस्यैव यागे उच्चारणार्थं पाठः। तस्मात् स्वरूपस्यैव वाक्यादङ्गत्वमिति ।

अथेदं वाक्यं दध्ना जुहोतीत्यत्राप्यस्ति । अङ्गवाचकस्य दधिपदस्याङ्गिवाचिना जुहोतिपदेन समभिव्याहारात् । अस्तु किं तेनेति चेत् वाक्यप्रमाणेन दध्नो होमाङ्गत्वमिति स्यात् । नह्येवं क्वचिद्व्यवहारः। उच्यते । सत्यं, तत्रापि वाक्यमस्त्येव । परं तु **प्रधानेन व्यपदेशा भवन्तीति** न्यायेन श्रुतिकृताङ्गत्वव्यवहारो नान्यथा । तत्रैव हि वाक्येनाङ्गत्वव्यवहारो यत्र तृतीयादिश्रुतिर्नास्ति । नचैवं प्रकृते भवतीति ।

**परस्पराकाङ्क्षेति** । उभयाकाङ्क्षेत्यर्थः । दर्शपूर्णमासयो-रुभयाकाङ्क्षां प्रदर्शयति **यथेति** । इदम् उत्तरत्र **किमेतेषां प्रयोजन-मित्येतद**वधि सम्बध्यते । यद्वा **इत्यत्रे**त्यन्तं पृथग्वाक्यमुदाहरणस्थल-प्रदर्शनमात्रपरम् । तदुपपादनमुत्तरत्रेति योज्यम् । प्रधानानामङ्ग-विषयिणीमाकाङ्क्षां दर्शयति **दर्शपूर्णमासाभ्यां स्वर्गापूर्वमिति** । अङ्गस्य प्रधानविषये आकाङ्क्षामाह **तथेति** । अत्र प्रयाजादीनां कथम्भावाकाङ्क्षा आग्नेयादीनां प्रयोजनाकाङ्क्षेत्युभयाकाङ्क्षा किं न सम्भवतीति शङ्कां परिहर्तुमाग्नेयादीनां फलवत्त्वं प्रयाजादीनां फलरहितत्वञ्चोक्तमिति ज्ञेयम् । उक्तविधप्रकरणस्याङ्गताग्राहकत्वमुपपादयति ततश्चेति । तथाचेत्यर्थः ।

उक्तप्रकरणेति यावत् । चकार उक्तानुवादपुरस्सरं क्रियमाणमुपसंहारं द्योतयति । **प्रयोजनाकाङ्क्षायामिति** । प्रयोजनाकाङ्क्षायां कथम्भावाकाङ्क्षायां च सत्यां यत्परस्पराकाङ्क्षालक्षणं प्रकरणं निष्पद्यते तेनाङ्गत्वं निश्चीयत इति योजना । **परस्परेति** । परस्परं परस्परयोर्वाऽऽकाङ्क्षा परस्पराकाङ्क्षा सा लक्षणं स्वरूपं यस्य तत्तेन ।

अङ्गत्वे पञ्चमं प्रमाणं स्थानमाह **स्थानमिति** । उदाहरति **यथेति** । **प्रोक्षणाङ्गत्वमिति** । शुन्धध्वमिति मन्त्रस्य शुद्धिप्रकाशकत्वरूपाल्लिङ्गात् पात्रादिगतशुद्धिशब्दवाच्यातिशयाधायकप्रोक्षणाङ्गत्वे सिद्धे सन्निधानात् सान्नाय्यपात्रसम्बन्धिप्रोक्षणाङ्गत्वं भवतीति भावः । षष्ठं प्रमाणमाह **समाख्येति** । उदाहरति **यथेति** । नन्वाध्वर्यवमिति काण्डशब्दाभिधेयस्य वैदिकशब्दराशिविशेषस्य समाख्या । तत्र यदि समाख्यावशादध्वर्योरङ्गत्वं भवति तर्हि तत् काण्डं प्रत्येव वक्तव्यम् । तस्यैवाध्वर्यवमिति पदेनोपस्थितत्वात् । तत्तु न सम्भवति, अपौरुषेयस्य नित्यस्य वैदिकशब्द-राशेर्यत्किञ्चदुपकारनिरपेक्षत्वेन कथमप्यध्वर्योः तदुपकारकत्वासम्भवात् । तत् किंप्रत्यङ्गत्वं समाख्यया बोध्यत इत्यत्रोक्तम् **अध्वर्युकाण्ड-प्रतिपादिते कर्मजात** इति । सप्तम्यर्थो निरूपितत्वम् । अङ्गत्वेऽन्वेति । **अयमाशयः** । अध्वर्योरिदमाध्वर्यवमिति विग्रहे षष्ठ्यर्थस्सम्बन्धो न साक्षात् । नित्ये वेदे पुरुषसम्बन्धासम्भवात् । किन्तु परम्परया तत्कर्तृक-पदार्थविशेषप्रतिपादकत्वरूपः । यजुर्वेदपठितं हि प्रयाजादिकमध्वर्युः कर्तुं शक्नोत्येव । तेनाध्वर्यवमिति समाख्यया अध्वर्युकर्तृकपदार्थविधायकं काण्डमिति प्रतीतौ तत्काण्डविहितकर्मसु कर्ता सन्नध्वर्युरङ्गं भवतीति । प्राञ्चस्तु आध्वर्यवमिति पदार्थानामेव समाख्येति लिखन्ति । न काण्डस्य ।

ननु दध्यादिवत् करणत्वाद्यभावात् कथमध्वर्योरङ्गत्वं, किञ्च पुरुष एव हि प्रधानं कर्मतु अङ्गं तत्कथमस्याङ्गत्वमुच्यत इत्यत्रोक्तं **कर्तृत्वेनेति** । परोद्देशप्रवृत्तकृतिकारकत्वमेवाङ्गत्वमिति वाच्यम् । तेन करणत्वादिविरहेऽपि कर्तृकारकत्वादध्वर्योरङ्गत्वमुपपन्नम् । यस्मिंश्च कर्मणि यः फलभोक्ता स एव तत्र प्रधानभूतः । यस्तु कर्मनिष्पत्त्यर्थमेव भृतिदानेनोपादीयते स तस्मिन् कर्मणि शेष एव भवति । तेन कर्मसु अध्वर्योरङ्गत्वस्य नानुपपत्तिरिति भावः ।

**अत्रेदं वक्तव्यम्** । श्रुत्यादिरूपं प्रमाणषट्कम् अङ्गत्वरूपं प्रमेयमिति द्वितये प्रमाणवर्गस्यैव प्राधान्येन निरूपणं ग्रन्थकारो मन्यत इति **पूर्वमङ्गत्वमुक्तं तत्र प्रमाणानि षडिति** प्रकरणोपक्रमवशात् प्रतीयते । एवं लिङ्गं सामर्थ्यं **समभिव्याहारो वाक्यम् आकाङ्क्षा प्रकरणं स्थानं सन्निधिः समाख्या संज्ञेति** लक्षणे कथिते तत्तदनन्तरं श्रूयमाणो **यथेति** शब्दः तत्तत्प्रमाणस्यैव निदर्शनार्थं प्रवृत्तिमवगमयति । सर्वत्र तु लिङ्गादङ्गत्वं वाक्यादङ्गत्वमिति तत्तत्प्रमाणस्याप्राधान्यम् अङ्गत्वस्य प्राधान्यञ्चान्ते प्रतीयते । तत्र **यथा**शब्दान्वयो दुर्घटः । न हि भवति यथा यादृशं **निर्वपतीत्यनेनैकवाक्यतापन्नत्वात् निर्वापाङ्गत्वं तथा** तादृशं वाक्यमिति । अङ्गत्वं हि प्रमेयम् । तस्य विशेषोऽयम् अग्नये इत्यादिपदानां निर्वापाङ्गत्वमिति । तत्र वाक्यरूपप्रमाणसामान्यलक्षणे कथिते तादृशप्रमाणविशेष एव निदर्शनार्थमुपादेयः । न तु प्रमेयविशेषः । तस्मादत्र 'पदान्तरसमभिव्याहारो वाक्यम् । तेनाङ्गत्वं यथा- अग्नय इत्यादिपदानां निर्वापाङ्गत्व' इत्येवं 'पदान्तरसमभिव्याहारो वाक्यम् । यथा - अग्नय इत्यादिपदानां निर्वापाङ्गत्वग्राहकं निर्वपामीत्यनेनैकवाक्यतापन्नत्वम्' इत्येवं वा वक्तव्ये प्रमादेनैवान्यथाकथनमिति ।

समाख्यया अङ्गत्वे उदाहरणान्तरमाह **तथेति** । यथा चेत्यर्थ । **इत्यादिषु** इत्यादिवाक्यविहितेषु । अथवा व्यधिकरणसप्तमीयम् । इत्यादिषु वाक्येषु ये ऐन्द्राग्नादयो यागास्तेष्विति योजना । **काम्येति** । कामः फलं तदर्हाः काम्याः । काम्येष्टय इति समाख्याताः तेषु । **यागेष्विति** । **विनियोग** इत्यत्रान्वयः । **काम्येति** । काम्येष्टीनां याज्याश्चानुवाक्याश्च तासां काण्ड इति समाख्या तस्यावशात् अनुरोधात् । एकैकस्य यागस्य द्वौ ऋङ्मन्त्रौ । तयोराद्या ऋक् अनुवाक्येति पुरोऽनुवाक्येति चाभिधीयते । द्वितीया याज्येति । नन्वचेतनानां मन्त्राणां विशेषेण नियोगो न सम्भवतीति शङ्कापरिहाराय विनियोगपदस्य विवक्षितमर्थमाह **विनीति** । अथवा विनियोगो नाम उपयोगः। तेनास्याः समाख्याया उपयोगबोधकत्वेऽप्यङ्गत्वबोधकत्वं नास्ति । नह्युपयोगमात्रेणाङ्गत्वम् । अभ्युदितेष्टौ दधिपयसोश्चरुपाके उपयोगेऽप्यङ्गत्वाभावस्य षष्ठाध्यायपञ्चमपादादावुक्तत्वादिति शङ्कां वारयितुं विनियोगपदं व्याचष्टे **विनीति** । **अन्वय** इति । अन्वयबोधनमित्यर्थः । तेनान्वयोऽङ्गव्यापारः विनियोगो विधिव्यापार इति तयोर्भेदादिदमनुपपन्नमिति निरस्तं वेदितव्यम् ।

अत्र भिन्नदेशपठितानां यागानां मन्त्राणां च सामान्येनैतेषां यागानामेते मन्त्रा अङ्गभूता इत्येतावन्मात्रे समाख्याव्यापारः । अनन्तरं कस्य यागस्य को मन्त्र इति विशेषजिज्ञासायां यो मन्त्रो यस्य यागस्य देवतां प्रकाशयितुं शक्नोति स मन्त्रस्तस्य यागस्याङ्गमिति लिङ्गं बोधयति । अथापि समानदेवताकेषु यागेषु मन्त्रेषु च बहुषु सत्सु तद्देवताकस्य प्रथमश्रुतस्य यागस्य तद्देवताकः प्रथमपठितो मन्त्रोऽङ्गम् । द्वितीयश्रुतस्य द्वितीयपठित इति यथासङ्ख्यपाठरूपः स्थानप्रमाणविशेषो बोधयतीति परिष्कार एवोक्तम् ।

**अलसधियामरुचिकरं प्रायः पङ्क्त्यर्थशोधने सौक्ष्म्यम् ।**
**व्युत्पित्सा यदि बालाः परिश्रमं कुरुत माऽस्तु वो भीतिः ॥**

निरूपितानां षण्णां प्रमाणानां विरोधे सति प्राबल्यदौर्बल्ये व्युत्पादयति **श्रुतीति** । **एकत्र** एकस्मिन् विषये । एकस्मिन्नङ्ग इति यावत् । **समावेशे** विरोधेन सन्निपाते । भिन्नभिन्नाङ्गताबोधकत्वेन युगपत् प्राप्तावित्यर्थः। **पूर्वपूर्वस्येति** । अत्र वीप्सायां नित्यवीप्सयोरिति सूत्रेण द्विर्वचनमात्रं न समासः कश्चित् । अत्र समावेशोऽनेकधा । श्रुतिलिङ्गयोः, लिङ्गवाक्ययोः, वाक्यप्रकरणयोः, प्रकरणस्थानयोः, स्थानसमाख्ययोरिति प्रथमम् अनन्तरयोः द्वयोर्द्वयोः पञ्चधा । श्रुतिवाक्ययोः, लिङ्गप्रकरणयोः, वाक्यस्थानयोः प्रकरणसमाख्ययोः इत्येकान्तरितयोश्चतुर्धा । श्रुतिप्रकरणयोः, लिङ्गस्थानयोः वाक्यसमाख्ययोरिति द्व्यन्तरितयोस्त्रेधा । श्रुतिस्थानयोः लिङ्गसमाख्ययोरिति त्र्यन्तरितयोर्द्विधा । श्रुतिसमाख्ययोरिति चतुरन्तरितयोरेकधेति । तत्र प्रथमप्रमाणस्य श्रुतेः स्वानन्तरप्रमाणेन लिङ्गेन समावेशे तदपेक्षया प्राबल्यं निदर्शयति **यथेति** । **कदाचनेति। कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यत** इतीन्द्रदेवताप्रकाशिका ऋक् पठ्यते । इमामैन्द्रीमृचं कदाचनस्तरीरसीति प्रतीकेनोपादाय तस्या गार्हपत्यसंज्ञकाग्न्युपस्थानाङ्गत्वबोधकमिदं विधिवाक्यमग्निहोत्रप्रकरणे श्रूयत इत्यर्थः । **अग्निहोत्रप्रकरण** इति प्रामादिकम् । अग्निहोत्रप्रकरणे हि अनया ऋचाऽऽहवनीयस्यैवोपस्थानं विधीयते न गार्हपत्यस्य । अत एव सर्वैर्ग्रन्थकारैः ऐन्द्र्यधिकरणेऽग्निशब्दवाच्यचयनप्रकरणपठितत्वेनैवेदं वचनमुदाह्रियत इति बोध्यम् । अस्य मन्त्रस्य इन्द्रपदघटितत्वादिन्द्र-

प्रकाशनसामर्थ्यरूपं लिङ्गमस्येन्द्रोपस्थानाङ्गत्वं बोधयति। विधिवाक्यं तु द्वितीयातृतीयाश्रुती गार्हपत्याग्निशेषत्वं बोधयतः । एवमुभयोर्विरोधेन समावेशे श्रुतेः प्राबल्यात् तया लिङ्गस्य बाध इति न तस्य मन्त्रस्येन्द्रोपस्थानाङ्गत्वमित्याह **तत्रेति** । तस्मिन् वाक्य इत्यर्थः । **विधानादित्युत्तरत्रान्वयः** । **उपस्थानेति** । समीपे स्थित्वा मन्त्रेणाभिधानमुपस्थानम्। **लैङ्गिक इति**। लिङ्गप्रमाणक इत्यर्थः। **बाध्यते** प्रतिबध्यते। श्रुतेर्लिङ्गबाधकत्वे नियामकमाह **श्रुतिर्हीति**। हिरिति हेतौ। यतः श्रुतिः स्वतो विनियोजिका लिङ्गं तु श्रुतिकल्पनाद्वारा तस्मात् श्रुत्या बाध्यत इति पूर्वेणान्वयः। **स्वत** इति। लिङ्गादिनिरपेक्षमित्यर्थः। लिङ्गस्य स्वतो विनियोजकत्वं नास्तीत्याह **लिङ्गन्त्विति**। अस्य **विनियोजकमिति** वाच्यमित्युत्तरत्रान्वयः । तुकारो वैलक्षण्ये । **इन्द्रेति** । इन्द्रप्रकाशनसामर्थ्यरूपमात्मानमालोच्येत्यर्थः । **आलोच्य** आलोचन पूर्विका या श्रुतेः कल्पना अनुमानं तद्द्वारेत्यन्वयः। **वाच्यमिति**। नह्ययं मन्त्र इन्द्रप्रकाशनमसमर्थ इति लिङ्गज्ञानमात्रादयं मन्त्र इन्द्र प्रकाशनस्याङ्गमिति बुद्धिर्जायते। अनेन मन्त्रेण इन्द्रं प्रकाशयेदिति श्रुत्या तु तद्बुद्धिर्भवति। तेन लिङ्गस्य श्रुतिकल्पनद्वारकत्वमावश्यकमिति भावः। तथा च स्वतो विनियोजकत्वेन प्रबलया श्रुत्या श्रुतिकल्पनसापेक्ष-विनियोजकत्वेन दुर्बलस्य लिङ्गस्य बाधो युक्त इत्याशयः। नन्वेवमस्तु श्रुतेस्स्वतो विनियोजकत्वम् अस्तु च लिङ्गस्य श्रुतिकल्पना-सापेक्षविनियोजकत्वं, तावता कथं बाध्यबाधकभावः। अस्य हि मन्त्रस्य श्रुतिर्गार्हपत्याङ्गत्वं बोधयतीति तदङ्गत्वमप्यस्तु। लिङ्गं च श्रुतिकल्पनाद्वारा इन्द्राङ्गत्वं बोधयतीति तदङ्गत्वमप्यस्तु । तथा च लैङ्गिकविनियोगस्य न

युक्तो बाध इत्यत्राह (२८) **तच्चेति** । **तत्** श्रुतिकल्पनाद्वारा लिङ्गस्य विनियोजकत्वम् । चकारोऽवधारणार्थो भिन्नक्रमः **न च तत्सम्भवति इति** नैवेत्यर्थः । **अत्र** श्रुतिविनियुक्तमन्त्रविषये । **अयं भावः**। न प्रमाणसद्भावमात्रेणाङ्गत्वं सिद्ध्यति । अपितु मन्त्रस्य प्रयोजनजिज्ञासायां यत् प्रमाणं प्रथमं प्रवर्तितुं शक्नोति तेन प्रमाणान्तरं प्रतिबध्य प्रवृत्तेन प्रयोजनविशेषे बोधिते तस्य मन्त्रस्य तदङ्गत्वं भवति । तेन च नैराकाङ्क्ष्ये सति विद्यमानमपि पूर्वप्रतिबद्धं प्रमाणान्तरं न तद्विषये पुनः प्रवर्तत इति न तत्कृतमङ्गत्वं भवतीति । ननु लिङ्गस्य अङ्गताबोधनशक्तिरस्ति न वा । अस्तिचेदत्रापि तेन मन्त्रस्य इन्द्रोपस्थानाङ्गत्वं स्यात्, नास्ति चेत् यत्र क्वापि तेनाङ्गत्वं न स्यात् । तथा च लिङ्गमिति प्रमाणमेव नास्तीति स्यादिति शङ्कां परिहरन्नाह **यत्रेति** । न हि लिङ्गमित्येकैव व्यक्तिरङ्गत्वे प्रमाणं येनोक्तदूषणं स्यात्। प्रतिमन्त्रं तु तद्भिद्यते । तत्र यस्य मन्त्रस्य लिङ्गं श्रुतिविरुद्धं तत्र सदपि लिङ्गं प्रबलप्रमाणप्रतिबन्धात् न कार्यकारि भवति । यस्य तु मन्त्रस्य केवलं लिङ्गं तत्र प्रतिबन्धाभावेनाङ्गत्वसिद्धिं को वारयेदिति भावः । **इत्यादौ यत्रेत्यन्वयः** ।

**श्रुत्यादीनामेकत्रे**त्यत्रादिपदगृहीतेषु प्रथमस्य लिङ्गस्य स्वानन्तरवाक्यप्रमाणापेक्षया प्राबल्यं प्रतिपादयति **तथेति** । **तथा वाक्यापेक्षया लिङ्गस्य प्राबल्यात् सादनाङ्गत्वमिति निर्णय** इत्यन्वयः। **स्योनन्त इति** । **अयमत्र सारः** । पक्वस्य यागे उपयोक्ष्यमाणस्य पुरोडाशस्याग्नेरुद्वासितस्य पात्रे प्रतिष्ठापनं विहितम् । तदिदं सादनमित्युच्यते । यस्मिन् पात्रे इदं सादनं क्रियते तस्य पात्रस्य पुरोडाशसादनात् पूर्वमाज्येनोपस्तरणं विधीयते । तदिदं सदनकरणमित्युच्यते । सदनं स्थानम् ।

तस्मिन् प्रकरणे स्योनं ते सदनं करोमि तस्मिन् सीदेति मन्त्रोऽपि पठ्यते। अस्मिन् मन्त्रे तस्मिन् सीदेत्यंशस्य पुरोडाशप्रतिष्ठितिप्रकाशकत्वेन यदा पुरोडाशस्य प्रतिष्ठापनं क्रियते तदा प्रयोक्तव्यत्वावगमात् प्रतिष्ठापनरूप-सादनाङ्गत्वमसन्दिग्धम्। स्योनन्ते सदनं करोमीत्यत्र तु सन्देहः। अग्नये जुष्टं निर्वपामीत्यत्र निर्वपामीत्यंशस्य लिङ्गात् निर्वापाङ्गत्वे सिद्धे तदेकवाक्यत्वेन समभिव्याहारात् यथा अग्नय इत्यादिपदानां निर्वापाङ्गत्वमुक्तं तद्वत् तस्मिन् सीदेत्यनेनैकवाक्यत्वेन समभिव्याहारात् स्योनन्ते सदनं करोमीत्यंशस्य सादनाङ्गत्वं प्रतीयते। न चाग्नय इत्यादिपदानां क्रियान्वयविरहे निराकाङ्क्षत्वाभावात् निर्वपामीत्यनेनैक-वाक्यत्वमवश्यम्भावीति तत्र वाक्यप्रमाणमस्तीति युक्तम्, अत्र तु स्योनं ते सदनं करोमीत्यस्य पृथग्वाक्यत्वात् तस्मिन् सीदेत्यनेनैकवाक्यत्वाप्रतीतेः कथं तेन समभिव्याहाररूपं वाक्यमिति वाच्यम्। तस्मिन् सीदेति तच्छब्दप्रतियोगिनो यच्छब्दस्य पूर्वत्रावश्यकतया यदहं सदनं करोमि तस्मिन् सीदेत्येकवाक्यत्वप्रतीतेः। एवं वाक्यात्सादनाङ्गत्वे प्रतीयमाने सदनं करोमीति सदनकरणप्रकाशनसामर्थ्यरूपाल्लिङ्गात् सदन-करणाङ्गत्वं प्रतीयते। तत्र किं ग्राह्यमिति। एवं सन्देहे लैङ्गिकमङ्गत्वं ग्राह्यं बलवत्वादिति सिद्धान्तः। कथं बलवत्वमिति चेदेवम्। प्रथमक्षणे लिङ्गज्ञानं, द्वितीयक्षणे श्रुतिकल्पनं, तृतीयक्षणेऽङ्गत्वबोधो भवति। अन्यत्र तु प्रथमक्षणे वाक्यज्ञानं, द्वितीयक्षणे लिङ्गकल्पनं, तृतीयक्षणे श्रुतिकल्पनं, चतुर्थक्षणेऽङ्गत्वबोधः। तत्र वाक्येन श्रुतिकल्पनसमय एव लिङ्गेनाङ्गत्वस्य बुद्धत्वात् मन्त्रस्याकाङ्क्षानिवृत्तेः श्रुतिकल्पनापर्यन्तं गतमपि वाक्यं विषयस्य अन्येनापहृतत्वात् नाङ्गत्वं बोधयतीति। एवं सर्वत्र विलम्बाविलम्बकृते

प्राबल्यदौर्बल्ये उपपादनीये। अत्र दृष्टान्तमपि वार्तिककार आह।

**निश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च।**
**एकमेव फलं प्राप्तुमुभावारोहतो यदा॥**

**एकसोपानवर्त्येको भूमिष्ठाश्चापरस्तयोः।**
**उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा॥**

**विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः।**
**प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधा॥ इति।**

प्राप्तिमात्रेण ग्रहणार्थं प्रसारितहस्तसम्बन्धमात्रेण उपपद्यते हस्ते निपतीति प्राप्तिमात्रोपपादि। निश्रेण्याश्चरमं पर्वारुह्यापि हि फलस्य वृन्तसंयोगदार्ढ्ये सति ग्रहणे विलम्बो भवति। तादृशविलम्बाभाव-प्रतिपादनोयोक्तं प्राप्तिमात्रोपपादीति। यदेति प्रतिबन्धश्च नान्तरेत्येतदन्तं सम्बध्यते।

**पूर्वेति** अपेक्षया सहितस्सापेक्षः। पूर्वं च तद्वाक्यञ्च पूर्ववाक्यं, स्योनं ते सदनं करोमीत्येवंरूपं तस्यार्थः तेन सापेक्षः तत्तया। **भानात्** प्रतीतेः। **द्वयोरिति**। स्योनं ते सदनं करोमीत्येकं तस्मिन् सीदेत्येकमिति द्वयोर्वाक्ययोरित्यर्थः। **एकमन्त्रत्वम्** एको मन्त्रः तत्वम्। सादनरूपैकार्थ-प्रकाशनोपयोगितया तदेकाङ्गत्वमिति तात्पर्यम्। **भिन्नेति**। भिन्नौ मन्त्रौ तत्त्वम्। एकस्य सदनाङ्गत्वम् इतरस्य सादनाङ्गत्वमिति। कथं लिङ्गेन भिन्नमन्त्रत्वभानमिति चेत्, भिन्नभिन्नार्थप्रकाशकलिङ्गभेदादित्याह **आद्यस्येति**। एवमेतन्मन्त्रविषये सन्देह उपपादितः। सम्प्रति सिद्धान्तमाह

तत्रेति। तथा सतीत्यर्थः। एवं द्वेधा सन्देहे सतीति यावत्। **वाक्यापेक्षया लिङ्गस्य प्राबल्यमु**पपादयन् वाक्यात् तृतीयक्षणे श्रुतिकल्पना भवतीत्याह (२९) **स्योनं त इति**। **विशिष्टेति**। वाक्यद्वयघटितेत्यर्थः। **सादनेति**। सादनस्य सादनसम्बन्धि सादनप्रकाशनानुकूलं सामर्थ्यं सादनसामर्थ्यम्। सादने सामर्थ्यमिति वा। लिङ्गात् तृतीयक्षणेऽङ्गत्वनिश्चयात् वाक्यकल्पिता श्रुतिरङ्गत्वबोधने प्रतिबध्यत इत्याह **सदनेति**। सदनस्य प्रकाशनं बोधानुकूलव्यापारः अभिधा शक्तिः सामर्थ्यमिति। तद्रूपेण प्रत्यक्षेण लिङ्गेन। वाक्यस्थले लिङ्गस्यापि कल्प्यत्वेन क्षणविलम्बोऽधिकः। लिङ्गस्थले पुनः स नास्तीति द्योतयितुं प्रत्यक्षेति लिङ्गविशेषणम्। **शीघ्रं** वाक्येन श्रुतिकल्पनावसर एव। मन्त्रस्य **नैराकाङ्क्ष्यादिति**। एतदुक्तेः प्रयोजनमुक्तप्रायम्। **वाक्येति**। या वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना सा प्रतिबध्यत इत्यन्वयः। **श्रुतिकल्पना** कल्पिता श्रुतिः। **कृदभिहितो भावो द्रव्यवत् प्रकाशत** इति न्यायात्। **प्रतिबध्यते** मन्त्राकाङ्क्षानिवर्तनेनाङ्गताबोधकत्वानर्हा क्रियते। **विलम्बितत्वात्** लिङ्गकल्पितश्रुतिक्षणानन्तरक्षणे उत्पन्नत्वात्। **तथे**त्युपक्रान्तं लिङ्गप्राबल्य प्रकरणमुपसंहरति **इतीति**। एव**मादि**पदोपात्तेषु पञ्चसु प्रथमस्य स्वानन्तरापेक्षया प्राबल्यं निरूपितम्। अथ इतरेषु चतुर्षु वाक्यादीनां त्रयाणां स्वस्वानन्तर प्रमाणसमावेशे तदपेक्षया प्राबल्यं भवतीति प्रतिज्ञां कुर्वन् विस्तरभिया न स्वयं निरूप्यत इत्याह **एवमिति**। (३०) **अपि बाध इति**। वेदितव्य इति पूर्वस्मादनुषज्यते। विस्तरभयादेव नेह निरूप्यत इति भावः।

**तदेवमिति**। तदित्यव्ययं वाक्यालङ्कारे। अथवा तदेवमिति समुदाय एवेत्थमित्यर्थे वर्तते। यद्वा लुप्तप्रथमाबहुवचनान्तमव्ययमिदम्।

तानि मीमांसाशास्त्रे प्रसिद्धानि **तत्राङ्गत्वबोधकानि श्रुत्यादीनि** षडिति प्रकरणोपक्रमे प्रतिज्ञातानि वा श्रुत्यादीन्येवं निरूपितानीत्यर्थः।

ननु किमङ्गत्वं यत्र श्रुत्यादीनि प्रमाणानि भवन्तीत्यत्राह तच्चेति चकारोऽलङ्कारे । **पारार्थ्येति** । अत्र 'प्रतीयते तावत् प्रत्येतव्यम्' इति पदत्रयमध्याहर्तव्यम् । यावत् तावत् इति सामान्ये नपुंसकम् । यावत् यावानर्थः । यादृशो योऽर्थ इत्युक्तं भवति । तथा च पारार्थ्यमित्यनेन शब्देन यादृशो योऽर्थः प्रतीयते तादृशः सोऽर्थः शेषत्व-शब्देनाङ्गत्वशब्देन च प्रत्येतव्य इत्यर्थः । **परेति** । परस्योद्देशेन उद्देश्यत्वरूपविषयताविशेषेण । उपलक्षणे तृतीया निरूपकत्वसम्बन्धेन परोद्देश्यत्वोपलक्षिता तद्वती सती प्रवृत्ता या कृतिस्तद्व्याप्यत्वमित्यर्थः । अथवा उद्देश इच्छा । परेच्छया प्रवृत्तो यः पुरुषस्तस्य कृत्या व्याप्यत्वमिति परेच्छया प्रवृत्ता उत्पन्ना या कृतिस्तद्व्याप्यत्वमिति वाऽर्थः । अस्मिन् पक्षे परनिष्ठोद्देश्यतानिरूपकत्वं कृतेरर्थात्प्रत्येतव्यम्। ननु परनिष्ठोद्देश्यतानिरूपकत्वं परित्यज्य कृतिव्याप्यत्वमेवाङ्गत्वमस्तु । न च स्वर्गस्याङ्गत्वापत्तिः, तस्याप्युद्देश्यतया कृतिविषयत्वादिति वाच्यम् । उद्देश्यत्वेतरकृतिविषयत्वस्यैव कृतिव्याप्यत्वमित्यनेन विवक्षितत्वात् । न च दर्शपूर्णमासादिप्रधानेषु अतिव्याप्तिरिति वाच्यम्, स्वर्गादिफलं प्रति दर्शपूर्णमासादीना-मङ्गत्वस्येष्टत्वेनालक्ष्यत्वाभावात्। लौकिकघटादेरपि जलाहरणादिकं प्रत्यङ्गत्वस्येष्टत्वात् । अत्राह **दर्शादेरिति** । **अयमाशयः** । यद्यपि प्रधानयागानां स्वर्गादिफलनिरूपितमङ्गत्वमिष्यते तेन यागोऽङ्गमिति व्यवहारोऽपीष्यत एव, तथाऽपि यागः स्वर्गस्याङ्गमितिवत् आग्नेयादिकं प्रयाजादीनामङ्गमिति व्यवहारो न कथमपीष्यते । सोऽयं व्यवहार आपद्येत

यदि कृतिविषयत्वमेवाङ्गत्वमित्युच्येत। ननु परोद्देश्यकत्वनिवेशेऽपि स्वर्गादिरूपपरोद्देशप्रवृत्तकृतिविषयत्वरूपाङ्गत्वमादाय पूर्ववदेव प्रयाजादिकं प्रत्यङ्गत्वव्यवहारो दुर्निवार इति चेन्न। यं प्रति अङ्गत्वं वाच्यं स एव परशब्देन तत्रोपादेयः। एवं च यन्निष्ठोद्देश्यतानिरूपककृतिविषयत्वं यस्य तस्य तदङ्गत्वमिति वक्तव्यम्। तेन स्वर्गनिष्ठोद्देश्यतानिरूपककृति-विषयत्वेनाग्नेयादेः तदङ्गत्वेऽपि न तदादाय प्रयाजादिकं प्रत्यङ्गत्वव्यवहार इति। नन्वाग्नेयादेः स्वर्गोद्देशप्रवृत्तकृतिकारकत्वमादाय प्रयाजाद्यङ्गत्व-व्यवहारो मास्तु। प्रयाजाद्युद्देश्यककृतिकारकत्वमादाय तादृशव्यवहारः कथं वार्यता मित्यत्राह (३१) **केवलेति**। केवलाश्च ते प्रयाजादयश्चेति विग्रहः। **कस्यचिदपि पुरुषस्य दर्शादावप्रवृत्तेरिति** दर्शादाविति पदमध्याहृत्य योजनीयम्। दर्शादिविषयकप्रयाजादिनिष्ठोद्देश्यता-निरूपककृतेरेवाप्रसिद्ध्या तद्विषयत्वस्य दर्शादौ वक्तुमशक्यत्वान्नाति-प्रसङ्ग इति निर्गलितार्थः। दर्शादिविषयकृतेः स्वर्गोद्देश्यकत्वेन प्रयाजाद्युद्देश्यकत्वविरहात् प्रयाजाद्युद्देश्यककृत्यभावेन तादृशकृति-विषयत्वं दर्शादेर्न भवतीति परिष्कार एवेदमुक्तम्। प्रयाजादिकृतेस्तु क्रतूद्देश्यकत्वेन प्रयाजोद्देश्यकत्वमेव न भवति। प्रयाजादेश्च तत्र विषयत्वात् न दर्शादेस्तद्विषयत्वम्। यानि प्रयाजादीनामङ्गान्यभिक्रमणादीनि तत्र प्रयाजाद्युद्देश्यककृतिसत्वेऽप्यभिक्रमणादीनामेव तत्र विषयत्वं, न दर्शादेरिति कथमपि दर्शादेः प्रयाजाद्युद्देश्यककृतिविषयत्वाभावेन न तस्य प्रयाजाद्यङ्गत्वमिति। ननु कस्मात् प्रयाजादिकमुद्दिश्य दर्शादौ प्रवृत्तिर्न भवतीति शङ्कायामुक्तं **केवलेति**। प्रयाजादीनां फलरहितत्वात् प्रयाजाद्युद्देशेन दर्शादौ प्रवृत्तिर्न सम्भवतीति भावः। इदमुपलक्षणम्। दर्शादेः

फलवत्त्वेन फलोद्देशेनैव तत्र प्रवृत्तिः, न प्रयाजाद्युद्देशेनेति च बोध्यम् । अत्र प्रयाजादौ अव्याप्तिवारणपरतयाऽप्यस्य ग्रन्थस्यावतारणं परिष्कारे कृतम् । तस्मिन् पक्षेऽनभिसंहितक्रतूपकारेति **केवल**शब्दार्थः। **अप्रवृत्तेरिति** । अर्थात् प्रयाजादावेव । न तत्राव्याप्तिरिति शेषः । सर्वदा क्रतूद्देशेनैव प्रयाजानुष्ठानम् । न तु कदाचित् क्रतुमनुद्दिश्य प्रयाजमात्रानुष्ठानं तेन नाव्याप्तिरिति । अस्मिन् पक्षेऽध्याहारावश्यम्भावात् प्राक्तन एव पक्ष श्रेयान् ।

**समुदायापूर्वक्लृप्तौ प्रयाजादेरुपस्थितेः ।**
**दर्शितानि श्रुतिर्लिङ्गं वाक्यं प्रकरणं तथा ।**
**स्थानं समाख्येत्यङ्गत्वे प्रमाणानि ह्यमूनि षट् ।**
**एकत्र च समावेशे तेषामुक्तं बलाबलम् ।।**

**ततो लक्षणमप्युक्तं तस्य दोषविवर्जितम् ।**
**अथ साम्प्रतमङ्गानि प्रदर्श्यन्ते सविस्तरम् ।।**

तत्र प्रथममङ्गानां विभागः क्रियते द्विधा **तानीति** । प्रथमाध्यायार्थनिरूपणावसरे तृतीयाध्यायार्थाङ्गत्वनिरूपणस्या-सङ्गतिशङ्कायां प्रयाजाद्यङ्गविशेषप्रसक्तानुप्रसक्तत्वद्योतनाय **तानीति** विशेषणम् । पूर्वं तच्चाङ्गत्वमित्यत्राप्येतदेव प्रयोजनमिति ज्ञेयम् । सन्निपत्योपकारकाणि लक्षयन्नाह **यानीति** । **प्रधानेति** । शरीरं स्वरूपम्। **तद्द्वारा** निष्पन्नप्रधानयागद्वारा । **तदुत्पत्तीति** । प्रधानोत्पत्त्य-पूर्वजनकानीत्यर्थः । यद्यप्यत्र यानि प्रधानयागशरीरं निष्पादयन्ति तानीत्येव वक्तुमुचितं नतु **निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनीति**, तथाऽपि

सन्निपत्योपकारकाणां प्रधानोत्पत्त्यपूर्व एव पर्यवसानम् आरादुपकारकाणां तु तत्र योग्यताऽऽधानद्वारा परमापूर्व इति सन्निपत्योपकारकाणा-मारादुपकारकापेक्षया वैलक्षण्यं द्योतयितुमेवमुक्तिरिति ध्येयम् । यागशरीरनिष्पादनोपयोगीनि सन्निपत्योपकारकाणि । तानि द्विविधानि-व्यवधानेनोपकारकाणि, अव्यवधानेनोपकारकाणि चेति, लक्षणविभागौ अत्राभिसंहितौ । तत्र विभागः **साक्षात् परम्परयावेत्यनेन** प्रतिपाद्यते । द्विविधान्यप्युदाहरति **यथेति** । **तदिति** । तैर्व्रीह्यादिद्रव्यैः **संयुक्तानि** सम्बद्धानि अवहननप्रोक्षणादीनीति । व्रीहीनवहन्ति व्रीहीन् प्रोक्षतीति वाक्यतो हि व्रीहिसम्बन्धः प्रोक्षणादेरवगम्यते। **अनुवचनं** बुद्धौ गृहीतधृतस्य शब्दराशेः पुस्तकनिरीक्षणादिकं विना उच्चारणम् ।

अत्र **तत्संयुक्ते**त्यादिवाक्यद्वयेन परम्परयोपकारकाणाम् अङ्गानामुदाहरणात् देवतावत् द्रव्याणामपि साक्षादुपकारकत्वतात्पर्येण **व्रीह्यादिद्रव्याणीत्य**नेनोपादानमिति प्रतीयते। तत्र व्रीहिद्रव्यस्य पिष्टद्वारा परम्परयोपकारकत्वस्य स्वयं वक्ष्यमाणत्वात् साक्षादुपकारकत्वं न युज्यते। तस्मात् अतद्गुणसंविज्ञानोऽयं बहुव्रीहिरिति दधिमधुपुरोडाशादिक**मादि**पदार्थ इति च परिष्कारे उक्तम्। तत्र **व्रीह्यादिद्रव्याणीत्य**नेन परम्परयोपकारकाणां व्रीहिनीवारयवपशुप्रभृतीनां प्रकृतिद्रव्याणामेव ग्रहणम् । एषाञ्च अवहननयाज्यानुवचनादिवत् परम्परयोपकारकाङ्गोदाहरणत्वम्। अत एव प्रोक्षणादेरिव व्रीह्यादीनामपि परम्परयोपकारकत्वमुपरिष्टादुपपादयतीति ग्रन्थकाराशयानुगुणमिव व्याख्यानं युक्ततरं भाति, तथाऽप्यस्मिन् पक्षे **अग्न्यादिदेवता तत्संयुक्तेत्यत्र** एकेन पदेन साक्षादुपकारकोदाहरणं पदान्तरेण परम्परयोपकारकोदाहरणं च कृतमिति तत्सारूप्यं

व्रीह्यादिद्रव्याणीत्यत्र भज्यते। देवतानामेव साक्षादुपकारकत्वं द्रव्याणां सर्वत्र परम्परयोपकारकत्वमेवेति भ्रान्तिश्च स्यात्। किञ्च परम्परयोपकारकत्वोपपादनाय अवहननादेः तत्संयुक्तेति विशेषणवत् व्रीह्यादीनामपि पुरोडाशादिसंयुक्तत्वमुक्तं स्यात्। किं व्रीह्यादीनीत्यनुक्त्वा व्रीह्यादिद्रव्याणीति द्रव्यपदोपादानं, द्रव्यशब्दार्थस्य प्रकृते विवक्षां व्रीह्यादीनां तत्रोपलक्षणार्थतां च गमयति। अत एव व्रीह्यादिमात्रतात्पर्ये सति **व्रीह्यादीनामपि पिष्टद्वारेति** प्रतिपादयति। न तु व्रीह्यादिद्रव्याणामिति। **तत्राग्न्यादिदेवते**त्यत्र देवतासामान्यस्य साक्षादुपकारकत्ववत् द्रव्यसामान्यस्य परम्परयोपकारकत्वमेव प्रतिपादितं भवतीति ग्रन्थकारस्यानुपपन्नार्थाभिधायित्वं प्रसज्येत, यदि परम्परयोपकारकाङ्गोदाहरणार्थतया व्रीह्यादिद्रव्याणीत्युक्तं स्यात्। ननु पूर्वव्याख्यानेऽपि द्रव्यसामान्यस्य साक्षादुपकारकत्वमुक्तं स्यात्। केषाञ्चित् द्रव्याणां परम्परयोपकारकत्वमस्तीति न स्यात्। उच्यते। देवतोद्देशेन द्रव्यत्यागो याग इति ह्युक्तं वक्ष्यते च। तत्र देवताया इव द्रव्यस्य साक्षादुपकारकत्वं सुप्रसिद्धं भवति। क्वचित्तु प्रबलप्रमाणेन द्रव्यान्तरप्राप्तौ कस्यचित् प्रकृतिद्रव्यतया परम्परयोपकारकत्वं कल्प्यते। तत्र उत्सर्गसिद्धं प्रसिद्धं साक्षादुपकारकत्वमेव प्रकृते वक्तुमुचितम्। न त्वपवादतया क्वचित् कल्प्यमानं परम्परयोपकारकत्वमिति। अथोच्येत द्रव्याणीत्यनुक्त्वा **व्रीह्यादीति** विशेषणस्योपादानात् द्रव्यविशेषाणाम् एव प्रतीतेः तेषां परम्परयोपकारकत्वेऽभिहिते तद्भिन्नद्रव्यविशेषाणां साक्षादुपकारकत्वं प्रतीयत एवेति नोक्तरीत्या सर्वेषां द्रव्याणां परम्परयोपकारकत्वाभिधानप्रसङ्ग इति। तन्नयुज्यते, तथा सति अग्न्यादिरूपदेवताविशेषाणां साक्षादुपकारित्वं तद्भिन्नदेवताविशेषाणां तु परम्परयोपकारकत्वमप्यस्तीत्यपि प्रतीत्यापत्तेः।

यदि शङ्क्येत - नात्र श्रुतिवाक्येष्विव तावती सूक्ष्मेक्षिका युज्यते। तात्पर्यानुरोधेन सर्वं नेतव्यम् । अत्र तु परम्परयोपकारकत्वतात्पर्येणैव **व्रीह्यादिद्रव्याणा**मितीदं प्रवृत्तमिति स्वरसतः प्रतीमः । नचेदेवं कथं **देवतायाश्च साक्षादितिवत्** 'अस्य द्रव्यस्य साक्षात्' इति द्रव्यस्य कस्यचित् साक्षाद्यागशरीरनिष्पादकत्वं न प्रत्यपादयिष्यत्। कथं च प्रत्युत **व्रीह्यादीनां पिष्टद्वारेपि** परम्परयोपकारकत्वमुक्तवानभविष्यत् । तस्मात् स्वहृदयानभिमतं साहसमात्रमन्यथाग्रन्थयोजनमिति - एवं तर्हि

**यथोक्तेन प्रकारेण वाक्यसारूप्यभञ्जनात् ।**
**असाक्षादुपकारि स्यात् सर्वं द्रव्यमिति भ्रमात् ।**
**व्रीह्यादीनां पुरोडाशसंयुक्तत्वानुदीरणात् ।**
**यथाव्रीह्यादिवाक्यस्थद्रव्यशब्दाफलत्वतः ।**
**असामर्थ्यं ग्रन्थकृतः प्रसक्तं बत सह्यताम् ।**
**ननु त्वदीयपक्षेऽपि द्रव्याणामुत्तरत्र हि ।**
**साक्षाद्यागोपयोगित्वाकथनादसमर्थता ।**
**अस्तु तावदयं दोषः स वरं बह्वपेक्षया ।**
**अथवा देवतायाश्च साक्षादित्यत्र यः श्रुतः ।**
**चकारस्तेन साक्षात्त्वं द्रव्यस्यापि समुच्चितम् ।**
**व्रीह्यादिभ्यः पुरोडाशनिष्पत्तिमभिधाय यत् ।**
**तद्वारेत्याह तेनैव यदिवा तदुदीरितम् ।**
**अत्यन्तं वा प्रसिद्धत्वादवक्तव्यममन्यत ।**
**तेनास्मदीये व्याख्याने न हि दोषोऽस्ति कश्चन ।**

इत्यास्तां तावत् । **अत्रेति** । व्रीह्यादिद्रव्यादिषु चतुर्षु इत्यर्थः । **व्रीहीति**। व्रीहीन् गतोऽतिशयः संस्कृतिशब्दाभिधेयोऽदृष्टविशेषः तद्वारेत्यर्थः । **तुषेति**।। व्रीहीणामुपरि त्वचः तुषा इत्युच्यन्ते । तेषां विमोको विमुक्तिर्विगमः तद्रूपं यद्दृष्टं कार्यं, न तु प्रोक्षणादिवददृष्टं कार्यमिति, तद्वारेति ।

अत्र अवहननप्रोक्षणयोः कार्यभेदप्रतिपादनं व्युत्पादनाय केवलम् । न तु संस्कारकर्मणां विभागमभिसन्धाय । उपरि हि उत्पत्त्याप्तिविकृति-संस्कृतिभेदेन चतुर्धा गुणकर्म विभज्य विकृतिसंस्कृत्युदाहरणत्वम् अवहननप्रोक्षणयोर्ग्रन्थकारो वक्ष्यपि । ननु दृष्टार्थादृष्टार्थभेदेनात्र विभागोऽभिसंहित इति चेन्नैवमपि । दृष्टादृष्टोभयार्थस्यापि गुणकर्मणोः विद्यमानत्वेन, तादृशानां पशुपुरोडाशादीनां ग्रन्थकारेणोपरिष्टादुदाह-रिष्यमाणत्वेन च द्विविधत्वेन गुणकर्मविभागस्य ग्रन्थकाराभिप्रेतत्वस्य वक्तुमशक्यत्वात् ।

अथ पूर्वं **तत्संयुक्तावहननप्रोक्षणादी**नीति प्रथमम-वहननस्य, पश्चाच्च प्रोक्षणस्य निर्देशेनात्रापि तस्मिन्नेव क्रमे आदर्तव्ये कथं प्रथमं प्रोक्षणस्य पश्चाच्चावहननस्य उपयोगप्रतिपादनमिति । उच्यते । प्रथममुद्दिष्टानामनेकेषां पश्चान्निरूपणावसरे शास्त्रकारा द्विविधं क्रममाश्रयन्ति । प्रथमनिर्दिष्टस्य प्रथमं निरूपणम्, द्वितीयनिर्दिष्टस्य द्वितीयमिति **यथासङ्ख्ये**नैकः । चरमनिर्दिष्टस्य प्रथमं तत्पूर्वनिर्दिष्टस्य द्वितीयमिति उपस्थितिसन्निधानानुसारेणापर इति ॥ तत्र एकक्रमानुसरणे सति क्रमान्तराननुसरणमदोषायेति । नन्वेवं सति प्रकृते ग्रन्थकारेण सर्वचरमनिर्दिष्टयाज्यानुवाक्यादीनामेवोपयोगस्य प्रथमं निरूपणं कृतं स्यात् ।

तदभावेनोक्तविधः प्रतिलोमक्रमो न ग्रन्थकारस्य बुद्धिस्थ इति पश्याम इति चेदस्त्वेवम् । प्रथमं प्रोक्षितानामेव व्रीहीणामवहननादनुष्ठानक्रमसूचनार्थ-मेततत्क्रमाश्रयणमिति नानुपपत्तिरिति । नन्वेवं प्रोक्षणावहननादीनीति प्रोक्षणस्य निर्देशेऽपि प्राथम्यं स्यादिति चेदुच्यते । द्वितीयाध्याये प्रथमपादे तानिद्वैधाधिकरणे प्रथमं व्रीहीनवहन्तीति विहितस्यावहननस्य आरादुपकारित्वपूर्वपक्षं निरस्य गुणकर्मत्वं साधितम् । तदनन्तराधिकरणे व्रीहीन् प्रोक्षतीति विहितस्य प्रोक्षणस्य गुणकर्मत्वं सिद्धान्तितम् । तेन तदधिकरणक्रमेण प्रथममवहननाभिधानमिति । न च निरूपणोपयोगिक्रमं परित्यज्य अधिकरणक्रमानुसरणमिह निष्प्रयोजनमिति वाच्यम् । परम्परयोपकारकत्वप्रतिपादनोपयोगितया व्रीहिसंयुक्तत्वस्य **तत्संयुक्ते**त्यनेन कथने तत्साधनपराधिकरणोपस्थितौ तदनुसारी क्रमः प्रथममन्वसारि । उपयोगकथनावसरे तु अनुष्ठानोपस्थित्या तदनुसारी क्रम आदृत इति नासङ्गतिरिति ।

**व्रीह्यादिद्रव्याणी**ति निर्देशे अतद्गुणसंविज्ञानबहुव्रीहिरिति व्रीहीणां न ग्रहणमित्युक्तम् । तद्धि व्रीहीणां साक्षादुपकारकत्वासम्भवात् । तदेतत्कथमित्यत्राह (३२) **व्रीहीणां पिष्टद्वारेति** ॥ व्रीहिभिर्यजेतेति वाक्यमात्रालोचने यद्यपि तेषां साक्षाद्यागसाधनत्वं प्रतीयते । तथापि 'यदाग्नेय' इत्युत्पत्तिवाक्ये पुरोडाशस्य साधनत्वेन श्रुतत्वात् व्रीहीणामपि निवेशासम्भवेन पुरोडाशप्रकृतित्वेन तत्साधनत्वमिति निश्चीयते । अवहननादिविधयोऽप्येवं ग्राहयन्ति । तेन व्रीहिभ्यस्तण्डुलाः ततः पिष्टं तस्य पाकेन पुरोडाशः साक्षाद्यागसाधनभूत इति व्रीहीणां परम्परयोपकारकत्वमिति भावः । व्याख्यानान्तरपक्षे व्रीह्यादिद्रव्याणां

परम्परया यागशरीरनिष्पादकत्वं प्रतिपादयति '**व्रीह्यादीनामिति**' इत्यवतारणीयम्।

नन्वस्मिन् पक्षे प्रथमनिर्दिष्टानां व्रीहीणामुपयोगकथनस्य प्रोक्षणाद्यनन्तरत्वे किं बीजमिति चेत् पूर्वोक्त एवानुष्ठानानुसारी क्रमः। प्रोक्षणावहननसंस्कृतानामेव हि व्रीहीणां तण्डुलीभूतानां पिष्टभाव इति। तर्हि निर्देशे यत्प्राथम्यं तत्र नियामकं वाच्यमिति चेत् श्रूयताम् **तत्संयुक्तेत्यत्र** तच्छब्देन व्रीहीणां निर्देशसौकर्याय तत्प्राथम्यम्। अन्यथा हि व्रीहिसंयुक्तावहननप्रोक्षणादीनि व्रीह्यादिद्रव्याणि च' इति वक्तव्यतया गौरवं स्यादिति।

**तद्द्वारेति** ॥ पुरोडाशद्वारेत्यर्थः। एतेनैवानतिस्फुटमपि पुरोडाशस्य साक्षाद्यागशरीरनिष्पादकत्वमभिहितं भवतीति।

***व्रीह्यादिभ्यः पुरोडाशनिष्पत्तिमभिधाय यत्।***
***तद्द्वारेत्याह तेनैव यदि वा तदुदीरितम्॥***

इति पूर्वमस्माभिरुक्तम्। **यागेति**। यागस्य शरीरञ्च तस्य यागस्योत्पत्त्यपूर्वञ्च तस्य यागस्योत्पत्त्यपूर्वञ्च तयोर्हेतुस्तत्वञ्चेति। देवतायाश्चेति। देवतायास्साक्षाच्चेति योज्यम्। **तद्द्वारेति**। यागद्वारेत्यर्थः। अत्रापि याज्याऽनुवाक्याऽनुवचनस्मृताया एव देवताया यागे उपयोगात् निर्देशविपरीतः क्रमः आदृतः। अन्यदपि पूर्ववत्।

**इदमत्र बोध्यम्। यान्यङ्गानि साक्षात्परम्परया वा यागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनीति** लक्षणवाक्ये प्रथमं

यागशरीरनिष्पादकत्वमभिधाय तद्द्वाराऽपूर्वोपयोगित्वमुक्तम्। तदनुसृत्य देवतावाक्ये **देवतायाश्च साक्षाद्यागशरीरनिर्वर्तकत्वमिति** प्रथमं पश्चाच्च **तद्द्वारा तदुत्पत्त्यपूर्वोपयोगित्वञ्चे**ति यथोक्त समन्वयः कृतः। एवं प्रोक्षणादिवाक्येऽपि 'व्रीह्यादीनां पिष्टादिद्वारा यागशरीरनिष्पादकत्वं तद्वारा तदुत्पत्त्यपूर्वोपयोगित्वञ्च' इति समन्वये कर्तव्ये व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वमिति पुरोडाशनिष्पादकत्वमभिधाय स्थित्वा तद्वारा यागशरीरतदुत्पत्त्यपूर्वोपयोगित्वञ्चेति एकेन वाक्यान्तरेण प्रोक्षणादीनामुभयोपयोगित्वमभिहितम्। तत्रायमभिप्रायः - देवता-संस्कारार्थानां मन्त्राणां यत्परम्परया यागाद्युपकारकत्वं तद्देवतारूपेणैकेनैव द्वारेण व्यवधानात्। द्रव्यसंस्कारार्थानां तु पदार्थानां व्रीहिपिष्टपुरोडाशादि-रूपैः प्रकृतिविकृतिभूतैरनेकैरपि पदार्थैर्व्यवधानादिति विभागोऽवगन्तव्य इति।

यागस्येति। उद्देश्यतारूपविषयताविशेषेण देवताविशिष्टो यो द्रव्यत्यागः तद्रूपत्वादित्यर्थः। **द्रव्यदेवते हीति**। त्यागमात्रं यागः। द्रव्यं देवता च तत्र विशेषणम् इति न मन्तव्यम्। द्रव्यं देवता त्याग इति त्रितयं समप्रधानं याग इत्युच्यते। अभिधानसौकर्यात्तु परस्परसम्बन्धं घटयित्वा देवतोद्देशेन द्रव्यस्य त्यागो याग इत्यभिधीयत इत्यर्थः। केचित् पुनः न समप्रधानं त्रितयं यागशब्दवाच्यम्। समुदायस्यानतिरिक्तत्वेन प्रत्येकं शक्तिकल्पनापत्तेः। अतः उद्देश्यत्वकर्मत्वसम्बन्धाभ्यां यथासङ्ख्यं देवताद्रव्यविशिष्टस्त्याग एव यागपदवाच्यः। सूत्रस्यापि न समप्राधान्य-प्रतिपादने निर्भर इत्याहुः। एषां मते यागपदवाच्यस्य त्यागस्य ज्ञानेच्छाऽन्तररूपस्य '**अर्थेनैव विशेषो हि निराकारतया धियाम्**' इति

न्यायेन विषयैकनिरूपणीयस्वरूपत्वेन विशेषणयोरपि द्रव्यदेवतयोर्याग-शरीरनिष्पादकत्वमुपपादयितव्यम् ।

उक्तानां सन्निपत्योपकारकाणां शास्त्रकारैरसकृदुदाह्रियमाणं नामान्तरं व्युत्पादयति **एतान्येवेति**। समवायं साक्षात्सम्बन्धं लभन्त इत्यर्थे '**समवायान् समवैति**' इति सूत्रेण ठक्प्रत्यये तस्य एकादेशे आदिवृद्धौ सामवायिकानीति रूपम्। तदिदमुक्तं परिष्कारे तद्वन्तीति।

उक्तानि सन्निपत्योपकारकाणि। आरादुपकारकाण्याह **आत्मेति**। आत्मनि समवेतमपूर्वं तस्य जनकानीति । सन्निपत्योपकारकाङ्गापेक्षया वैलक्ष्यण्याभिधानपुरस्सरं उदाहृतेष्वारादुपकारकत्वसमन्वयं करोति **एतानीति** । **द्रव्येति** । व्रीहीनवहन्ति व्रीहीन् प्रोक्षति इति द्वितीयाश्रुत्या व्रीहीणां प्राधान्यावगतेः गुणभूतावघातादेर्व्रीहिद्रव्यगतसंस्कार-जनकत्वमङ्गीकृतम् । एवं याज्यानुवाक्यादीनां मन्त्राणां सामर्थ्यात् देवतागतस्मरणरूपसंस्कारजनकत्वं **दृष्टे सम्भवत्यदृष्टकल्पनस्या-न्याय्यत्वादाश्रितम्** । प्रयाजादीनां तु न तथा, द्रव्यदेवतागतसंस्कार-जनकत्वे प्रमाणमस्ति। तेन प्रकरणाद्यागाङ्गत्वे आरादुपकारकत्वं भवतीति भावः ।

(३३) **तत्रेति** । अनर्थकमिदं वाक्योपक्रमे प्रयुज्यते । नन्विह लौकिककर्मणोऽपि अर्थकर्मगुणकर्मभेदेन विभागोऽभिसंहितो न वा। आद्ये असाङ्गत्यम्। न हि लौकिककर्मनिरूपणस्य प्रकृते सङ्गतिरस्ति। असम्भवश्च। न हि लोके आत्मगतापूर्वजनकं किञ्चित्कर्मास्ति। अन्त्ये **सामान्यतः कर्म द्विविधमित्यभिधानमयुक्तम्** । सामान्यं हि व्यापको धर्मः । स च

प्रकृते कर्मत्वरूपः । तत्र कर्मसामान्यस्य लौकिकसाधारण्येन द्विविधत्वं प्रतिज्ञातं भवति। न वैदिकमात्रस्येति चेत्। मैवम्। अत्र सामान्यवाचिनाऽपि कर्मशब्देन वैदिकमेव कर्म विवक्षितम् । यथा गामानयेति प्रकरणविशेषादिनियन्त्रणवशेन सन्निहितस्वकीयगोमात्रं प्रतीयते न गोसामान्यं तद्वत् । तस्य वैदिककर्मसामान्यस्य द्विविधत्वमुच्यते । न तु क्रत्वर्थस्य पुरुषार्थस्य वा वैदिककर्मविशषस्येति सामान्यत इत्युक्तम्। तत्र सामान्यतो वैदिकं कर्म द्विविधमित्येव स्थितं वेदितव्यमित्युक्तं भवति । अथवा तत्र वेदे इत्यर्थः। अस्य कर्मण्यन्वयः, वेदे यत्कर्म तत्सामान्यतो द्विविधमिति । न चानुपस्थितत्वाद्वेदस्य तच्छब्देन परामर्शानुपपत्तिः । वैदिकवाक्यविचारस्य सम्प्रति क्रियमाणत्वेन सर्वदा तस्योपस्थितत्वादिति।

**अर्थेति**। अर्थश्च तत्कर्म च अर्थकर्म। गुणश्च तत्कर्म च गुणकर्म। प्राधान्यादर्थकर्मणः प्रथमाभिधानम्। **यथेति**। अग्निहोत्रञ्च दर्शपूर्णमासौ च प्रयाजाश्च एते आदौ यस्य यत् तथाभूतमिति । **तत्रात्मेति** । तत्र अर्थकर्मगुणकर्मणोः ।

ननु पूर्वमपि आत्मगतापूर्वजनकत्वमेवारादुपकारकाङ्गानां लक्षणमुक्तम् । अत्र अर्थकर्मणोऽपि तदेव लक्षणमुच्यते । तेनार्थकर्म सर्वमारादुपकारकमिति भवति । तथाच अग्निहोत्रदर्शपूर्णमासादीनामपि प्रधानभूतानामर्थकर्मणामारादुपकारकत्वव्यवहारः स्यादिति चेन्न । आरादुपकारकलक्षणेऽङ्गत्वस्यापि निवेशनीयत्वात् । आत्मगता-दृष्टजनकत्वे सति अङ्गत्वमारादुपकारकत्वमिति।

गुणकर्म लक्षयति **गुणेति** । कार्यान्तरोपयोगिषु द्रव्येषु

क्रियाविशेषैर्जायमाना योग्यता धर्मविशेषो वा संस्कारः । गुणकर्मविशेषं विभजते **तच्चेति** । चकारो वाक्यालङ्कारे । अथवा वैदिककर्म2सामान्यवत् तद्विशेषभूतं गुणकर्मापि द्विविधमिति समुच्चयार्थः । नायं गुणकर्मसामान्यस्य विभागः, किन्तु दृष्टार्थस्य गुणकर्मविशेषस्यैवेति परिष्कारे द्रष्टव्यम् । **उपेति** । उपयुक्तस्य भूतोपयोगस्य द्रव्यस्य संस्कारकमिति । द्रव्यस्य स्वकार्ये उपयोगानन्तरकालिकसंस्कारजनकमिति पर्यवसितम् । **उपयोक्ष्यमाणेति** । भविष्यदुपयोगस्य द्रव्यस्य संस्कारकं द्रव्यस्य स्वकार्ये उपयोगात् प्राक्कालिकसंस्कारजनकमिति । तथाच द्रव्योपयोगानन्तरकालिक-संस्कारजनकं तत्प्राक्कालिकसंस्कारजनकञ्चेति दृष्टार्थं गुणकर्म द्विविधमित्युक्तं भवति। ननु प्रतिपत्तिकर्मेति किमपि गुणकर्मास्तीति मीमांसकानां वादमुपशृणुमः, तत्कथं त्वया नोच्यत इति शङ्कां वारयन्नाह **तत्रेति** । प्रतिपत्तिकर्मैव मया उपयुक्तसंस्कारकमित्युक्तं नान्यदित्यभिप्रायः । ननु कथं प्रतिपत्तिकर्मण उपयुक्तसंस्कारकमित्यभिधानमित्यत्राह (३४) **उपयुक्तस्येति** । प्रतिपत्तिकर्मणः किं लक्षणमिति पर्यालोचय । जातसर्वोपयोगस्य द्रव्यस्योचितदेशप्राप्तिरूपसंस्कारजनकं कर्म हि प्रतिपत्तिकर्म । तेनोपयुक्तसंस्कारकमिति तदभिधानं कथं नोपपद्यत इति भावः ।

अन्येतु 'उपयुक्तसंस्कारकं निरूपयति **तत्रेति**' इत्यवतारयन्ति । तदयुक्तमिति पश्यामः । न ह्युपयुक्तसंस्कारकमित्यनेनाज्ञातं किञ्चित् प्रतिपत्तिकर्मेत्यनेन ज्ञायते । प्रत्युत प्रतिपत्तिकर्मेत्येतदेवाज्ञातरूपमिति। एवं सुज्ञानत्वाभिप्रायेणैव **उपयोक्ष्यमाणसंस्कारोऽप्यनेकविध** इति विभागमात्रं करिष्यति । न स्वरूपनिरूपणम् । न हि तन्मतेऽत्र शिष्यस्य

प्रतिपत्ति कर्मस्वरूपज्ञानमस्तीति वक्तुं शक्यम् । उपयुक्तस्येत्याद्युत्तर-ग्रन्थानवतारप्रसङ्गात् । किन्नाम प्रतिपत्तिकर्मेति जिज्ञासया हि तदवतरणं वक्तव्यम् । तच्च पूर्वमेव प्रतिपत्तिकर्मज्ञाने सति न युज्यते । प्रतिपत्तिलक्षणादिति पञ्चम्यन्तानुपपत्तिश्च । किं प्रतिपत्तिकर्मेति जिज्ञासया तद्ग्रन्थावतारे हि 'विहितदेशे प्रक्षेपः प्रतिपत्ति'रिति वा 'इति प्रतिपत्तिलक्षणम्' इति वा स्यात् । न त्विति **प्रतिपत्तिलक्षणादिति** । अस्मदुक्तप्रकारे तु इति प्रतिपत्तिलक्षणादुपयुक्तसंस्कारकं गुणकर्म प्रतिपत्तिकर्मैवेत्यन्वयः स्वारसिक इति ।

एवं वा अयं तत्रेत्यादिग्रन्थो व्याख्यातव्यः । उपयुक्तसंस्कार-कस्य गुणकर्मणः शास्त्रकारप्रसिद्धां संज्ञामाह **तत्रेति** प्रतिपत्तिकर्मेति। प्रतिपत्तिकर्मपदवाच्यमित्यर्थः । अत्र हेतुमाह **उपयुक्तस्येति** । **इति प्रतिपत्तीति** । प्रतिपत्तिपदवाच्यस्य इत्येवं लक्षणादित्यर्थः । प्रतिपत्तिपदवाच्यस्य शास्त्रकारा यल्लक्षणमाहुः तस्योपयुक्तसंस्कारक-गुणकर्मणि विद्यमानत्वात् तस्य प्रतिपत्तिपदवाच्यत्वं भवतीत्युक्तं भवति।

अत्र निर्वृत्तोपयोगस्य उचितदेशप्रापणं प्रतिपत्तिरिति निष्कृष्टलक्षणम् । तत्र यावानुपयोगस्तस्य सर्वस्य वृत्तस्वमवगमयितु **आकीर्णकरस्येति** । **द्रव्यस्येत्यर्थसिद्धानुवादः** । विहितदेश इत्युपलक्षणम् । देशविधाने सति तत्र तदभावे यागोपयुक्तदेशादन्यत्र यत्र क्वचिदिति ।

**इडेति** । इडाभक्षणञ्च कृष्णविषाणाप्रासनञ्च चतुरवत्तहोमश्च एतदादिकमिति । प्रासनं प्रक्षेपः । चतुरवत्तस्य वक्ष्यमाणावदानचतुष्टय-संस्कृतस्य पुरोडाशस्य होमः अग्नौ प्रक्षेपः आदिना चतुर्धाकरणभक्षणादिकं

गृह्यते । करिष्यमाणविचारोपयोगितया अनेकोदाहरणम् । तत्रापि इडाभक्षणकृष्णविषाणाप्रासनयोः प्रतिपत्तित्वस्य सिद्धत्वात्प्रथम-मभिधानम् । साध्यत्वा च्चतुरवत्तहोमस्य पश्चादभिधानम् । अन्यथा ह्यनुष्ठानक्रमेण चतुरवत्तहोमस्य प्रथमाभिधानं स्यादिति । ननु द्रव्याणामुपयोगो यागे वक्तव्यः। तथाच प्रतिपत्तित्वन्नाम द्रव्याणां यागोपयोगानन्तरकालिकसंस्कारकत्वमित्यायाति । तदिदमिडाभक्षणादौ सङ्गतमपि चतुरवत्तहोमे न सङ्गच्छत इति शङ्कते **नन्विति** । **प्रधानेति** । प्रधाने यागे उपयुक्तं यदाकीर्णकरं पुरोडाशद्रव्यं तस्य प्रक्षेप अत्मास्वरूपं यस्य तदात्मकं तत्वात् । **यागोपयुक्तेति** । यागे द्रव्यस्योपयोगादनन्तरं क्रियमाणसंस्कारकर्मत्वाभावादिति तात्पर्यार्थः। कथमेतदभाव इत्यत्राह **होमस्येति** । समानकाले भवः समानकालीनः यागस्य यागेन वा समानकालीनस्तत्वेन । **चतुरवत्तादेरिति** । आदिना पञ्चावत्तादिकं यागोपयुक्तं द्रव्यान्तरं सर्वं ग्राह्यम् । **उपयुक्तत्वाभावादिति** । उपयुज्यमानसंस्कारो हि होमो भवतीति भावः । **अत्रेति** । अस्मिन्नाक्षेपे मीमांसाभिज्ञा एवं समाधानं वदन्तीत्यर्थः । प्रतिपत्तिशरीरे प्रधानयागो-पयुक्तत्वनिवेशेऽनिष्टप्रसङ्गमाह **तथा सतीति** । प्रधानयागोपयुक्तत्वस्य विवक्षितत्वे सतीत्यर्थः । विशसनं प्राणवियोजनम् । लोहितं रक्तं शकृत् पुरीषं तर्योनिरसनस्यापनयनस्य । कस्मादित्यत्राह (३५) **यामेति** । वपाहृदयादिकमुद्धृत्य पक्त्वा तदनन्तरं हि यागः क्रियते । तदुद्धरणकाले तु न कस्यापि द्रव्यस्य यागे उपयुक्तत्वम् । तेन यागोपयुक्तद्रव्यप्रक्षेपरूपत्वं लोहितशकृतोर्निरसनस्य न भवतीति भावः । एवं यागोपयोगिद्रव्यैकदेश-भूतलोहितशकृन्निरसनस्य यागानन्तरकालिकत्वाभावेन प्रतिपत्तित्वाभाव-

प्रसङ्ग उक्तः । अथ यागानन्तरकालिकस्यापि कस्यचित्संस्कारस्य संस्कार्यद्रव्यस्य यागे उपयोगाभावात् प्रतिपत्तित्वाभावप्रसङ्ग इत्याह **तथेति**। **यागाङ्गेति**। यागस्याङ्गभूतं यत्कण्डूयनं तस्मिन्नुपयुक्तत्वेऽपीति । अनेन 'ननु यागोपयुक्तत्वं परम्परयाऽपि विवक्षितम्। तेन कृष्णविषाणाप्रासनस्य प्रतिपत्तित्वं न विहन्यते । यजमानो हि कर्तृत्वेन यागस्याङ्गम् । तत्र यजमानसंस्कारकं कण्डूयनं कर्तृद्वारा यागाङ्गं भवति । तस्मिन् कण्डूयने उपयुक्ता च कृष्णविषाणा परम्परया यागोपयुक्तैव इति तटस्थाशङ्का परिहृता। **प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्येत्यादि** वदतो हि पूर्वपक्षिणः साक्षात्प्रधानयागोपयुक्तत्वमेवाभिप्रेतमिति लक्ष्यते । तदभावात् कृष्णविषाणाप्रासनस्य प्रतिपत्तित्वमनुपपन्नमेवेति। अथापि पूर्वपक्षी सम्प्रति परम्परया यागोपकारकत्वमप्यनुमन्यते तथाऽपि लोहितशकृन्निरसनस्य प्रतिपत्तित्वं दुरुपपादमेवेति। **अत इति**। एवमनिष्टप्रसङ्गादित्यर्थः। **यत्रेति**। नतु यागे उपयोग इत्युपयोगविशेषो विवक्षित इत्यर्थः। एवं सत्युक्तानिष्ट-प्रसङ्गो न भवतीत्याह **यत्रेति**। इति लोहितशकृन्निरसनस्य प्रतिपत्तित्व-मुपपद्यत एवेत्येतावत्पर्यन्तं वाक्यतात्पर्यं बोध्यम् । अन्यथा उत्तरत्र पञ्चम्यन्तान्वयायोगात् । कुत्र तर्हि तदुपयोग इत्यत्राह **वपेति** । वपाहृदयाद्युद्धरणे उपयुक्तत्वमादाय प्रतिपत्तित्वमुच्यत इति न दोष इति। **शकृदिति**। शकृच्च लोहितञ्च अनयोस्समाहारः तस्य।

ननु संस्कार्यस्य हि यत्र क्वचनोपयोगो वक्तव्यः। संस्कार्यं च प्रकृते शकृल्लोहितम् । तत्कथं पशोरुद्धरणोपयोगित्वमिति शकृल्लोहितं प्रतिपत्तिसापेक्षमित्यभिधीयते। न हि पशुरेव लोहितशकृन्निरसनसंस्कार्यः। लोहितं निरस्यति शकृत्सम्प्रविध्यतीति द्वितीयाबलेन लोहितशकृतोरेव

संस्कार्यत्वावगमात् । अन्यथाऽऽरादुपकारकत्वापत्तेरितिचेदुच्यते । उपयुक्तसंस्कारकमित्यत्र उपयुक्तमिति द्विविधं विवक्षितम् । किञ्चित् साक्षादुपयुक्तम् । यथा इडासंज्ञो हुतशिष्टपुरोडाशैकदेशः । किञ्चित् साक्षादुपयुक्तद्रव्यनिष्पादने सत्यनुनिष्पद्यमानम् । यथा विश्वेभ्यो देवेभ्य आमिक्षायां निष्पाद्यमानायामनुषङ्गेन वाजिनं निष्पद्यते । तत्र वाजिन-विनिर्मोकेणमिक्षाया निष्पादयितुमशक्यत्वादामिक्षा अनुनिष्पन्नमपि वाजिनमामिक्षार्थतयोपयुक्तमेव भवति । तद्वत् वपाहृदयाद्युद्धरणार्थं पशौ उपादीयमाने नान्तरीयकतया तत्र लोहितशकृतोरप्युपादानं भवतीति पशुवत् तत्सम्बन्धिलोहितशकृतोरप्यनुनिष्पन्नयोरुपयुक्तत्वमिति । तदिदमभिप्रेत्योक्तम् **उपयुक्तस्य पशोस्सम्बन्धिन** इति ।

**प्रतिपत्तीति** । प्रतिपत्तिमपेक्षत इति प्रतिपत्त्यपेक्षं तत्वात् । एवं प्रतिपत्तिलक्षणशरीरे प्रधानयागोपयुक्तत्वनिवेशाभिमाने निरस्ते, तदनिवेशे, चतुरवत्तहोमस्य प्रतिपत्तित्वं निर्विघातमेव भवतीति प्रतिपादयितुमुपक्रमते **एवमिति** । **यत्र क्वचिदुपयोगः यथाकथञ्चिदुपयोग** इत्यनयोरे-कार्थत्वमुन्नेयम् । **प्रधानेति** । प्रधानादुत्तरः कालो यस्यास्सा प्रधानोत्तरकाला । प्रधानेन समः कालो यस्यास्सा प्रधानसमकाला । प्रधानात्पूर्वः कालो यस्यास्सा प्रधानपूर्वकाला । **तत्रेति** । तिसृष्वित्यर्थः । **द्वितीयेति** । चतुरवत्तहोमादिका प्रधानसमकाला प्रतिपत्तिरित्यर्थः । चतुरवत्तशब्दार्थ-विशदीकरणोपयुक्तानि वाक्यान्युदाहरति **दर्शपूर्णेति**। होमसाधन-पात्रस्याज्येन लेपनमुपस्तरणम् । हविष इति पञ्चमी । पुरोडाशादित्यर्थः । द्विःवारद्वयम् । सुच्प्रत्ययान्तमव्ययमिदम् । अवद्यति खण्डयित्वाऽऽदत इत्यर्थः । अवेत्युपसर्गपूर्वकः **'दो अवखण्डने'** इति हि धातुः । उपरि

आज्यसेचनमभिघारणम्। एवमुपस्तरणाभिघारणाभ्यां वारद्वयमवदानेन च संस्कृतः पुरोडाशैकदेश एव चतुरवत्तं जुहोतीति वाक्ये चतुरवत्तशब्देनोच्यत इति भावः। एवं चतुरवत्तशब्दे व्युत्पादिते तद्धोमस्य गुणकर्मत्वसिद्ध्युपयोगितया प्रधानकर्मत्वाभावं प्रतिजानीते **तत्रेति**। वाक्यचतुष्टय इत्यर्थः। **न विधीयत** इति। होमानुवादेन द्रव्यविधाने हि होमस्योद्देश्यभूतस्य प्राधान्यं भवेत्। न तु तथा विधीयते। तेन न प्रधानकर्मत्वमित्यर्थः। हेतुमाह **होमस्येति**। ननु कथं होमस्याप्राप्तिः। यदाग्नेय इति वाक्ये हि द्रव्यदेवताविशिष्टो यागो विधीयत इत्युक्तम्। तेनैव होमस्यापि प्राप्तिर्भवति। नच यागे विहिते कथं होमस्य प्राप्तिरिति वाच्यम्। यागो हि द्रव्यस्य त्यागानन्तरमग्नौ प्रक्षेपः। होमोऽपि स एव। तस्मादुभयोरभेदे यागविधानेन होमोऽपि विहितो भवतीति शङ्कां परिहरति (३६) **नचैति**। यागविधानात् होमस्य प्राप्तिर्नभवतीत्याह **तद्वाक्येति**। यागहोमयोरभेदो नास्तीत्याह **नचेति**। अत्र हेतुमाह **देवतेति**। तदिदं चतुर्थाध्यायद्वितीयपादान्ते सूत्रकारेणोक्तम् '**यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्, तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्**' इति। यजतिचोदना यागः। कृतार्थत्वात् प्रसिद्धार्थत्वात्। जुहोतिर्होमः। आसेचनं प्रक्षेपः। अन्यदत्रास्मिन्न-धिकरणे **शास्त्रदीपिकासोमनाथीययोर्द्रष्टव्यम्**। एवं **नचेत्यादिनोक्तमर्थं संगृह्णन् होमस्याप्राप्तत्वेनेत्यादिनोक्तं** हेतुमुपसंहरति तत्रेति **तत्र** तथा इति। उक्तरीत्या यागहोमयोर्भिन्नत्वे सतीति यावत्। **आग्नेयचोदनया** यदाग्नेयइत्याग्नेययागविधिवाक्येन। '**चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः।' अस्यानुवादासम्भवादिति** पञ्चम्यन्तस्य **चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयत** इति पूर्वेणान्वयः। एवं

चतुरवत्तवाक्ये होमानुवादेन चतुरवत्तं न विधीयत इत्युपपादितम् । किमनुवादेन तर्हि किं विधीयत इत्यत्राह किन्त्विति । उपस्तरणञ्च द्विरवदानञ्चाभिघारणञ्च तेषां वाक्यानि तद्विधायकानि सकृदुपस्तृणात्तीत्यादीन्युदाहृतानि वाक्यानीत्यर्थः तैरिति । चतुरवत्तभाव्यका होमकरणिकाऽर्थभावना विधिविषय इति बोधे द्रव्यस्य भाव्यत्वं संस्कार्यत्वमिति क्रियायास्तत्र करणत्वं संस्कारत्वरूपं भवति । तदिदमुक्तं **संस्कारत्वेनेति** । यद्यपि जुहोतीत्यनेन देवतोद्देशो द्रव्यत्यागः प्रक्षेप इति त्रयमप्यभिधीयते तथाऽपि विधेरप्राप्तांशमात्रविधायकत्वेन देवतोद्देशद्रव्यत्यागयोः यदाग्नेय इति वाक्ये यागविधानेनैव प्राप्तत्वादप्राप्तः प्रक्षेपांश एवेह विधीयत इति मनसि कृत्वाऽऽह **प्रक्षेप** इति । **सचेति** । ननु यागसमानकालिकत्वात् प्रतिपत्तित्वं नास्तीति वक्तुं शक्यमिति भावः । अत्र द्वितीय **तथाहिना** प्रतिज्ञातार्थावसानम् । **प्रथमतथाह्यर्थावसानम् अग्नय** इत्यत्र । **तदवयवेति** । तस्य पुरोडाशस्यावयवस्तदवयवः द्वे अवदाने यस्य तद्व्यवदानं तदवयवश्च तद्व्यवदानञ्च तदवयवद्व्यवदानं तत्कर्म यस्य स तदवयवद्व्यवदानकर्मकः स चासौ प्रक्षेपश्च तस्येति । ननु कथं त्यागप्रक्षेपयोस्समानकालिकत्वम् । यजमानो हि यागकर्ता । न हि स उभयमेकस्मिन् क्षणे कर्तुं शक्नोति । तस्मात् प्रथमं त्यागं कृत्वा पश्चात् स प्रक्षेपं करिष्यति । तत्रेडाभक्षणवदेव प्रतिपत्तित्वं सुस्थमिति व्यर्थ एतावान् कोलाहल इत्यत्राह (३७) **होमोहीति** । प्रक्षेपो हीत्यर्थः । हिर्हेतौ । वषट्कारः वौषठ्छब्दोच्चारणम्। इदं होतृकर्तृकम् । **अध्वर्युणेति** । तथाचाध्वर्युः प्रक्षेपस्य कर्ता । त्यागस्य तु यजमान इति भिन्नकर्तृकत्वादुभयोः समानकालिकत्वं सम्भवतीति भावः । ननु वषट्कृते जुहोतीति वचनात् वषट्कारादनन्तरं

प्रक्षेपमध्वर्युः करोतु । यजमानोऽपि वषट्कारात्पूर्वं वषट्कारसमय एव वा त्यागं कुरुताम् । तेन प्रधानोपयुक्तसंस्कारत्वं प्रक्षेपस्य भवत्येवेत्यत्राह **यागोपीति** । तस्मिन्नेव क्षणे यजमानेन यागोऽनुष्ठेय इत्यन्वयः । **तस्मिन्नेव** वषट्कारोत्तर एव । एवकारेण वषट्कारपूर्वसमकालव्यवच्छेदः । हेतुं हृदि निधायाह **यागस्येत्**यादि। स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयत इति श्रूयते । इयमित्थम्भूतलक्षणे तृतीया । वषट्कारज्ञाप्यं देवेभ्यो हविःप्रदानमित्यर्थः । ज्ञापनञ्च स्मारणम् । एवञ्चानेन वचनेन वषट्कारेण स्मारितस्यैव हविः प्रदानरूपस्य यागस्यानुष्ठेयत्वविधानात् वषट्कारात्पूर्वं तुल्यकालं वा यागानुष्ठानं न सम्भवतीति भावः । **इति तयोरिति** । अनेन **इति**शब्देन **होमो** हीत्यादि सर्वं परामृश्यते । **तयोः** यागहोमयोः । **यौगपद्यसम्भवात्** कर्त्रैक्यप्रयुक्तस्य वा वषट्कारपूर्वसमकालिक-यागानुष्ठानप्रयुक्तस्य वाऽयौगपद्यस्याभावादित्यर्थः । पञ्चम्यर्थः **सच संस्कारः प्रधानसमकाल** इति पूर्वत्रान्वेति । **सर्वप्रदानेति** । सर्वप्रदानं हविषस्तदर्थत्वादिति सूत्रोपक्रान्ततृतीयाध्यायचतुर्थपादान्त-स्थिताधिकरणेत्यर्थः। **सम्प्रविध्यतीति** । अपक्षिपतीत्यर्थः । **शकृदिति** । शकृत्सम्प्रवेधनञ्च लोहितनिरसनञ्चेति द्वन्द्वे प्रथमाद्विवचनमिदम् । प्रामाण्यदार्ढ्यायैवाह **इदमपीति** । **पशाविति** । क्रियत इति कर्म प्रयोजनं प्रयोजकमित्यत्र तात्पर्यम् । **पशौ** यागार्थपशौ पशुयागे वा ये लोहितशकृती तयोः पश्वालम्भप्रयोजकत्वं न भवति । **अनालम्भात्** लोहितशकृदर्थं पशोरालम्भाभावात् । उत्पत्तिवाक्ये पशुर्यागार्थं श्रुतः । तदनन्तरं पशुं विशास्तीति मारणरूपविशसनश्रवणात् पशोर्यागसाधनत्वं न साक्षात् किन्तु स्वाङ्गद्वारेति ज्ञायते । तदनन्तरं हृदयस्याग्रेऽवद्यति अथ जिह्वायाः अथ वक्षस

इत्येकादशाङ्गानि हविष्ट्वेन श्रूयन्ते। तेन पशोर्यागसाधनत्वमेकादशाङ्ग-मात्रद्वारेति स्थिते तदर्थमेव पशोरालम्भो नान्यार्थमिति निश्चीयत इति न लोहितशकृदर्थं पश्वालम्भ इति सूत्रार्थः। **इत्यधिकरण** इति। इति सूत्रेण प्रवृत्ते चतुर्थाध्यायप्रथमपादस्थेऽधिकरण इत्यर्थः।

निर्देशमात्रेण उपयोक्ष्यमाणसंस्कारस्वरूपस्य स्फुटमवग-माद्विभागमात्रं करोति **उपयोक्ष्येति**। यथा **तच्च द्विविध**मिति गुणकर्मानेकविधमित्युक्तं तथा उपयोक्ष्यमाणसंस्कारोऽप्यनेकविध **इत्यपि**शब्दार्थः। अथवा प्रतिपत्तिरूपोपयुक्तसंस्कारो यथा प्रधान-पूर्वकालादिभेदेना अनेकविधस्तथोपयोक्ष्यमाणसंस्कारोऽपीति तदर्थः। संस्कारसंस्कारकशब्दयोर्व्यतिकरेण प्रयोगो बहुलमुपलभ्यते। **साक्षादिति**। विनियुक्तसंस्कारः विनियुक्तोपकारकसंस्कारः विनियोक्ष्यमाणसंस्कार इत्यादिरनेकविध इति विभागे तात्पर्यं बोध्यम्। विनियुक्तस्य संस्कारो विनियुक्तसंस्कारः। विनियुक्तं स्वप्राक्कालीनविमियोगवत्। स्वपदार्थः संस्कारः। विनियोगो नामाङ्गत्वेनान्वय इत्युक्तम्। स्वप्राक्कालिकत्वञ्च विनियोगे स्वविधिप्रवृत्तिप्राक्कालप्रवृत्तविधिविहितत्वम्। तथाच स्वविधिप्रवृत्तिप्राक्कालिकप्रवृत्तिमद्विधिविधेयाङ्गताकद्रव्यसम्बन्धि-संस्कारत्वं विनियुक्तसंस्कारत्वम् इति पर्यवसितम्। एवं स्वविधिप्रवृत्त्य-नन्तरकालिकप्रवृत्तिमद्विधिविधेयाङ्गताकद्रव्यसम्बन्धिसंस्कारत्वं विनियोक्ष्यमाणसंस्कारत्वमिति बोध्यम्। **इत्यादाविति**। इत्यादिवाक्ये इत्यर्थः। विहित इति शेषः। अवघातादिरूप इत्यत्रान्वयः। **वत्समाल-भेतेति**। इति वाक्यविहितमित्यर्थः। **इदमालम्भन**मित्युत्तरत्रान्वयः। यद्वा एतदन्तमेकं वाक्यं वाक्यान्तरं तु गोदोहाङ्गत्वेनत्यादि। उपकारक इति।

वत्समादाय हि गौर्दुह्यते। तस्माद्दोद्रव्योपकारको वत्सः। तत्संस्कारकमिति। दुग्धपिपासाप्रयुक्तोत्प्लवनादिकं विना धृतिरूपसंस्कारजनकमित्यर्थः। वस्तुतस्तु वत्सस्य लघुताडनकण्डूयनादिचाटुकरणे तद्दर्शनमुदिता वत्सप्रिया गौः प्रस्नुतपयोधरा भवतीति तादृशचाटुकरणमेवेह वत्ससंस्कार इति मूलग्रन्थेषु स्थितम्। आलम्भनं स्पर्शः। **इत्यत्रेति**। अस्य दध्यानयनमित्यत्रान्वयः। **इति वाक्येनेति** कर्तरि तृतीया विनियोक्ष्यमाण-मित्यत्रान्वेति।

ननु व्रीहीनवहन्तीत्यत्र व्रीहीणामुद्देश्यत्वेन प्राप्तिसापेक्षत्वात् तत्प्रापकस्य व्रीहिभिर्यजेतेति वाक्यस्य प्रथमं प्रवृत्तिरवश्यमभ्युपगन्तव्येति यथाऽवघातस्य विनियुक्तसंस्कारत्वं तथा तप्ते पयसि दध्यानयतीति दध्यानयनस्य पय उद्देश्यकत्वात् पयसः प्राप्त्यपेक्षायां सा वैश्वदेव्यामिक्षेति वाक्यस्य आमिक्षाशब्दवाच्यस्य पयसो वैश्वदेवयागे विनियोजकस्य प्रथमं प्रवृत्तिरभ्युपगन्तव्येति दध्यानयनस्यापि विनियुक्तसंस्कारत्वं कस्मान्न भवतीति चेत् श्रोतव्यम्। उद्देश्यप्रापकस्य वाक्यस्य प्रथमं प्रवृत्तिरित्युत्सर्गः। सोऽयं सा वैश्वदेवीति वाक्येऽपवदितव्यो भवति। सेति तच्छब्दश्रवणात्। तच्छब्दो हि पूर्वोक्तपरामर्शी। सोऽयमुत्तरवाक्ये श्रूयमाणः पूर्वश्रुतस्य वाक्यस्य स्वस्मात्पूर्वप्रवृत्तिमवगमयति। दध्यानयनसंस्कृतपयोरूपेति हि सा इत्यस्यार्थः। तेनावघातवैषम्यात् नास्य विनियुक्तसंस्कारत्वं, किन्तु विनियोक्ष्यमाणसंस्कारत्वमेवेति। तदिदं सर्वमभिप्रेत्याह **तच्छब्देन निर्दिश्येति**। निर्देशः पयसः। प्रधानपरामर्शी हि तच्छब्दः। पूर्ववाक्ये उद्देश्यतया पय एव प्रधानमिति।

**अत्रेदं बोध्यम्** । विनियोक्ष्यमाणसंस्कारोऽपि द्विविधः क्लृप्तवाक्यविनियोक्ष्यमाणसंस्कारः, कल्प्यवाक्यविनियोक्ष्यमाण-संस्कार इति । आद्यो यथा उक्तं दध्यानयनम् । सा वैश्वदेव्यामिक्षेति विनियोगं करिष्यतो वाक्यस्य क्लृप्तत्वात् । अन्त्यो यथा, अध्वर्युं वृणीते स्वाध्यायोऽध्येतव्य इति श्रुतं वरणाध्ययनादिकम् । अत्र हि वरणाध्ययनादिसंस्कार्यत्वान्यथाऽनुपपत्त्या वृतः अध्वर्युर्यागकर्म करोति अध्ययनप्राप्तेन स्वाध्यायेन फलवदर्थज्ञानं भावयेदिति विनियोजकं वाक्यं कल्प्यत इति स्थितम् । एवं द्विविधस्यापि विनियोक्ष्यमाणसंस्कारस्योप-योक्ष्यमाणसंस्कारत्वात् यत् **बालप्रकाशे शङ्करमिश्रेण** - 'तत्र दृष्टार्थं भाव्युपयोगद्रव्यसंस्कारार्थं सन्निपत्योपकारकं द्विविधं साक्षाद्विनियुक्त-संस्कारार्थं, साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारार्थंचेति । तत्र आद्यं यथा व्रीहीनवहन्तीति । द्वितीयं यथा वत्समालभेतेति । अत एव वत्सस्यैव विनियुक्तदोहाङ्गगोद्रव्योपकारकतया वत्समालभेतेत्यत्रालम्भन-संस्कार्यत्वमिति पशुसोमाधिकरणे भवदेवः' इति कर्मभेदनिरूपणावसारे उपयोक्ष्यमाणसंस्कारस्य द्विविधत्वमुक्तं तन्नातीवादर्तव्यमिति ग्रन्थकारो मन्यते । अत एव स्वयं विभागावसरे एतावद्विध इति परिच्छेदमकृत्वा तदुक्तद्विविधत्वानादरमात्रप्रदर्शनपरतयाऽनेकविध इत्याहेति ।

एवं केवलोपयुक्तसंस्कारः, केवलोपयोक्ष्यमाणसंस्कार इति गुणकर्मविशेषौ निरूपितौ । उपयुक्तोपयोक्ष्यमाणोभयरूपसंस्कार इत्यन्या-दृशोऽपि गुणकर्मविशेषोऽस्तीत्याह (३८) **पश्चिति** । तुकारः पूर्ववैलक्षण्य-द्योतनार्थः । **उपयुक्तेति** उपयुक्ता च सा उपयोक्ष्यमाणा च उपयुक्तोप-योक्ष्यमाणा । सा च सा देवता च । तस्याः संस्कारः तस्मै तदर्थः । नन्वेवं सति

'तच्च त्रिविधं उपयुक्तसंस्कारः उपयोक्ष्यमाणसंस्कारः उपयुक्तोपयोक्ष्यमाण-संस्कारश्चेति' इति हि विभागः कर्तव्यः। तत्कथं द्विविधमित्येव पूर्वं विभागः। किञ्च यागो नाम देवतोद्देशो द्रव्यत्यागश्च। तत्र द्रव्यत्यागांशः कथं देवतासंस्कारं कुर्यादित्यत्राह **त्यागांश** इति। यागे हि देवतोद्देशो द्रव्यत्यागो द्रव्यप्रक्षेप इति त्रयोंऽशास्सन्ति। तेषु उद्देशांशो देवतायां स्मरणरूप-संस्कारजनकः। त्यागांशस्त्वदृष्टजनकः, दृष्टस्योपकारान्तरस्य तेन जनयितुमशक्यत्वात् इत्यर्थः। **एतदुक्तं भवति**। न केवलमयं देवतासंस्कारतया दृष्टमात्रार्थः। अपित्वंशविशेषे दृष्टार्थस्सन् अंशान्तरेऽदृष्टार्थोऽपि। तेन पूर्वं कृते दृष्टार्थमात्रगुणकर्मविभागे नास्यान्तर्भावः। किञ्च त्यागांशस्यादृष्टार्थत्वस्यैवाङ्गीकारात् न तत्रोक्तचोद्यावकाशः। उद्देशांशमात्रस्य दृष्टार्थत्वाभिप्रायेणैव पशुपुरोडाशयागस्तु देवतासंस्कारार्थ इत्युक्तं न सर्वांशे तदभिप्रायेणेति। प्रक्षेपांशोऽप्यत्रादृष्टार्थ इति वेदितव्यम्। तदाह **प्रकाशकारः** किञ्चित् देवतांशेन दृष्टार्थं, द्रव्यप्रक्षेपांशेनादृष्टार्थं, यथोत्तमः प्रयाजः। पशुपुरोडाशयागोऽप्येवमेवेति दशम एव प्रतिपादितम् इति। न च पूर्वं प्रक्षेपस्य यागसमानकालिकप्रतिपत्तित्वस्य स्थापितत्वात् प्रकृतेऽपि तथा सम्भवात् कथं प्रक्षेपांशस्यादृष्टार्थतेति वाच्यम्। अदृष्टार्थत्वमिति प्रकृते यागान्तरसम्बन्धिद्रव्यप्रतिपत्तिरूपदृष्टार्थत्वाभावमात्रस्य विवक्षितत्वात्। स्विष्टकृद्यागद्रव्यं हि पुरोडाशरूपं प्रधानयागे उपयुक्तम्। पशुपुरोडाशद्रव्यं तु नान्यत्र क्वचिदुपयुक्तमिति।

**अत्रेति**। पशुपुरोडाशयाग इत्यर्थः। देवताया इत्यत्रान्वयः। **तदिति**। तेन संस्कार्या तत्संस्कार्या। अग्निश्च सोमश्चाग्नीषोमौ।

अग्नीषोमाविति देवता अग्नीषोमदेवता। तत्संस्कार्या च साऽग्नीषोमदेवता च तस्या इति।

न चात्र अग्नीषोमौ देवते इति द्विवचनेन भवितव्यमिति शङ्क्यम्। एकमेव देवतात्वं क्वचिदेकस्यां व्यक्तौ क्वचिदनेकस्यामपि यथाप्रमाणं भवति। आग्नेय इत्यत्राग्निरूपायामेकस्यां व्यक्तौ तद्धितप्रत्ययोपात्तं देवतात्वं पर्याप्तम्। अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीत्यत्र अग्नीषोमशब्दोत्तरं तद्धितप्रत्ययस्योत्पन्नत्वात् तदुपात्तमेकं देवतात्वं प्रकृत्यर्थभूतयो-रग्नीषोमयोरुभयोरपि पर्याप्तम्। तेन देवतात्वस्यैकत्वात् यथाऽग्निर्देवतेत्युच्यते तथाऽग्नीषोमौ देवतेति। यदि तु तद्धितप्रत्ययः पृथक् श्रूयेत तत्र देवतात्वं भिद्येत यथा **त्वाष्ट्रं पात्नीवतमालभेते**त्यत्र। तेन तत्र त्वष्टृपत्नीवन्तौ देवते भवत इति।

**हृदयेति**। हृदयादीन्यङ्गानि तेषां यागाः तत्साध्या यागा इत्यर्थः। एवं दृष्टादृष्टोभयार्थस्य पशुपुरोडाशरूपस्याश्रयिकर्मविशेषस्य निरूपणेन प्रसक्तानि तादृशकर्मान्तराणि निरूपयति (३९) **स्विष्टकृदित्यादिना**। **द्रव्यांश इति**। प्रधानयागानन्तरं शेषात् स्विष्टकृते समवद्यति उत्तरार्धात् समवद्यतीत्याद्यनुसारेण प्रधानयागोपयुक्तपुरोडाशैकदेशस्यैव स्विष्टकृदर्थमुपादानात् स्विष्टकृद्यागघटकः प्रक्षेपांशः उपयुक्तसंस्कारार्थो भवतीत्यर्थः। **सूक्तेति**। सूक्तवाकः साधनं करणं यस्य तत्सूक्तवाकसाधनकं तच्च तत्प्रहरणञ्चेति।

परिष्कारे प्रहरतिलक्ष्य इति। अयमर्थस्तृतीयाध्याये द्वितीयपादे '**सूक्तवाके तु कृतार्थत्वात्**' इति सूत्रेण प्रवृत्ते पञ्चमाधिकरणे द्रष्टव्यः।

इष्टदेवानुकीर्तनार्थ इति। यज देवपूजायामिति धातोरुपरि कर्मणि क्त प्रत्यये इष्टशब्दनिष्पत्तिः । इष्टाः यागेन पूजिताः वा देवतास्तासामनुकीर्तनार्थ इत्यर्थः। अयं सूक्तवाकः तैत्तिरीये तृतीयाष्टके पञ्चमप्रश्ने दशमोऽनुवाकः। एतन्मन्त्रेति। सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र तृतीयया तस्य मन्त्रस्य करणत्वं प्रतीयते । मन्त्रस्य करणत्वञ्चाङ्गिप्रकाशकतया वा तत्सम्बन्धिकिञ्चित् प्रकाशकतया वा भवति। तत्राङ्गिभूतप्रहरणादिप्रकाशकत्वं नास्य मन्त्रस्य भवति । तद्वाचकपदाभावात् । तेन श्रुतस्याङ्गत्वस्य निर्वाहाय मन्त्रप्रकाश्यदेवताः प्रहरणाङ्गभूता इति कल्प्यते। तत्रैवं देवताः कीर्त्यन्ते। अग्निरिदं हविरजुषत सोम इदं हविरजुषतेति अग्निश्च सोमश्चाज्यभागयोर्देवते। पुनः अग्निरिदं हविरजुषतेत्याग्नेययागदेवता । प्रजापतिरिद-मित्युपांशुयाजदेवता। अग्नीषोमाविदमित्यग्नीषोमीयदेवता। इन्द्र इदमिति सान्नाय्ययोर्देवता। देवा आज्यपा आज्यमजुषन्तेत्यनूयाजदेवताः । ता एतास्सर्वा देवताः प्रहरणहोमस्यापि देवता भवन्तीत्यर्थः। **एताश्चेति** । अनूयाजोत्तरकालीनत्वात् सूक्तवाकसाधनकप्रस्तरप्रहरणस्य ततः पूर्वमेवासां देवतानामुपयुक्तत्वमिति ध्येयम् । प्रधानयागेष्विति । अङ्गयागानामप्युपलक्षणम्।

मूले **यक्ष्यमाणेति** । कर्मणि लृटः शानच् । इज्यते यक्ष्यते यक्ष्यमाणेति (४०) **इतरांश** इति। त्यागांशे प्रक्षेपांशे चेत्यर्थः। **हृदयादीति**। हृदयादीनि च तानि हवींषि च तत्साध्याद्यागादित्यर्थः। यागात्पूर्वं क्रियमाणस्यापि लोहितशकृन्निरसनस्य यथा पूर्वं प्रतिपत्तित्वं सम्भवत्येवेत्युक्तं तथा वसाया हृदयादिहविः पाकानुनिष्पन्नत्वात् तद्यागात्पूर्वं क्रियमाणस्यापि वसाहोमस्य प्रतिपत्तित्वं सम्भवत्येवेति

द्योतयन्नाह **हृदयादिहविर्यागात्पूर्वं क्रियमाण** इति । पूर्ववदस्याप्ये-कांशेदृष्टार्थत्वम् अपरांशेऽदृष्टार्थत्वमिति समुच्चयार्थोऽपि शब्दः । **इतरांश** इति । त्यागांशे देवतांशे चेत्यर्थः । ऊह्यमिति । अन्यत्र द्रष्टव्यमित्यर्थः ।

अत्र **पशुपुरोडाशयागस्तु** इत्युपक्रमे तुकारश्रवणात् उपयुक्तोपयोक्ष्यमाणेति विशेषणद्वयोपादानस्वारस्याच्च पूर्वोक्तगुण-कर्मविलक्षणगुणकर्मविशेषनिरूपणपरतया तद्ग्रन्थस्यावतारिकां कृत्वा तत्प्रसङ्गागतत्वेन स्विष्टकृदादिनिरूपणमवतारितम् । वस्तुतस्तु परिष्कारोक्तफक्किकैव ग्रन्थकारहृदयस्थिता । बालानां पदार्थावेदनमात्रं दृष्टौ कुर्वता न विभागादिषु तावान्निर्भरः प्रदर्श्यत इति विभाव्यम् ।

**उपयोक्ष्यमाणेति** । उपयोक्ष्यमाणस्य संस्कारः उपयोक्ष्यमाणसंस्कारः । तस्माद्भिन्नं संस्काररूपं कर्म तत्वमिति । पूर्वं यः प्रधानयागे उपयोगस्तदनन्तरकालिकत्वं प्रतिपत्तिशरीरे निविष्टं कृत्वा चतुरवत्तहोमस्य प्रतिपत्तित्वं न सम्भवतीत्याक्षेपे उपयोगादनन्तर-कालिकत्वमभ्युपगम्य प्रधानयागे इत्यविवक्षितमिति समाधानमुक्तम् । अद्य तु प्रधानयागे इति विवक्षितमेव । अनन्तरकालिकत्वं तु न यथाश्रुतं ग्रहीतव्यम् । किन्तु प्राक्कालिकभिन्नत्वमिति । तथाच प्रधानयागे उपयोगात् प्राक् यः संस्कारः प्रोक्षणावघातादिरूपस्तद्भिन्नसंस्कारत्वं पश्चात् कालिकस्येडाभक्षणस्येव समकालिकस्य चतुरवत्तहोमस्याप्रतिहतमिति समाधीयत इति विवेचनीयम् ।

उपयोक्ष्यमाणसंस्कारभिन्नत्वमुपपादयति **चतुरवत्तेति** । अथ उपयोगे प्रधानसम्बन्धित्वविवक्षणे लोहितशकृतोः कृष्णविषाणायाश्च यागे

उपयोगाभावात् पूर्वोक्ता प्रतिपत्तित्वानुपत्तिस्तदवस्था स्यादिति चेन्न । चतुरवत्तद्रव्यमात्रे प्रधानयागोपयोगस्य विवक्षितत्वात् । यस्य द्रव्यस्य यत्रोपयोगो वचनप्रमितः तदुपयोगो हि तत्र विवक्षणीयः । तेन कृष्णविषाणादेः कण्डूयनादिमात्रे उपयोगो नान्यत्रेति ।

**अर्थकर्मणीति** । अत्र कर्मणि द्रव्यस्य गुणत्वमित्यस्यानन्तरम् 'इति विशेषः' इति पदद्वयमध्याहृत्य अर्थकर्मणीत्येतदारभ्य सर्वमेकमेव वाक्यं योजनीयं कर्मणः प्राधान्यं द्रव्यस्य गुणत्वमित्यर्थकर्मणि विशेष इति । अन्यथा **अर्थकर्मणीति** सप्तम्यन्तस्यानन्वयापत्तेरिति बोध्यम् । एवं **गुणकर्मणीत्यत्रापि** । **द्रव्येति** । अत्र सर्वत्र द्रव्यपदं देवताया अप्युपलक्षकम् । (४१)**कर्मणीति** । कर्मनिरूपितमित्यर्थः । कर्मापेक्षयेति यावत् । **दध्यादेरिति** । दध्ना जुहोतीति तृतीयाश्रुत्या करणत्वावगमादिति भावः। **गुणकर्मणीति** । क्रियाऽपेक्षयेति शेषः । **तदपेक्षयेति** । व्रीहिरूपद्रव्यापेक्षयेत्यर्थः । **गुणत्वमितीति** । **तच्च द्विविधमित्यारभ्य** कृतगुणकर्मनिरूपणावसानार्थोऽयमितिशब्दः ।

एवं तृतीयाश्रवणे प्रकृत्यर्थस्य द्रव्यस्य गुणत्वम् । अर्थात् धातूपात्तस्य कर्मणः प्राधान्यमित्यर्थकर्मत्वम् । द्वितीयाश्रवणे द्रव्यस्य प्राधान्यम् । अर्थात् कर्मणो गुणत्वमिति गुणकर्मत्वमित्यर्थ-कर्मगुणकर्मनिर्धारणे प्रमाणमप्युक्तं भवति । अयं सामान्यन्यायः । विशेषतस्त्विदं द्रष्टव्यम् । एकवाक्योपात्तयोर्द्रव्यकर्मणोर्मध्ये किं किमर्थं कतरदङ्गं कतरदङ्गीति संशये, यस्य प्रयोजनमुपयोगो वा क्लृप्तः तदङ्गि प्रधानम्, अन्यदङ्गं गुणभूतमिति निश्चेतव्यम् । यथा व्रीहिभिर्यजेतेत्यत्र

यागस्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्येन स्वर्गफलकत्वस्य विदितत्वात् व्रीहयस्तदर्थास्सन्तो गुणीभवन्ति। एवं व्रीहीणां यागे उपयोगे विज्ञाते व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणं व्रीहिषु गुणीभवति । अत्र उभयत्र तृतीयाद्वितीयाश्रुती अप्यानुगुण्येन वर्तेते । यदाऽपिश्रुतिर्विरुध्येत तदाप्युक्तन्यायमेवानुसृत्य श्रुतिरन्यथा नेतव्या । यथा ज्योतिष्टोम-प्रकरणपठिते सक्तून् जुहोतीति वाक्ये द्वितीयाश्रुत्या सक्तूनां प्राधान्यप्रतीतावपि होमसंस्कृतानां सक्तूनामुत्तरत्रोपयोगासम्भवात् द्वितीयया तृतीयार्थं करणत्वं लक्षयित्वा गुणत्वमेव कल्प्यत इति द्वितीयप्रथमे प्रोक्षणाधिकरणे स्थितम् । स्थाणौ स्थाण्वाहुतिं जुहोतीत्यत्र च स्थाणोः सप्तम्याऽधिकरणत्वेन गुणत्वप्रतीतावपि यूपार्थवृक्षैकदेशत्वने प्रतिपत्त्यर्हत्वात् प्राधान्यमाश्रित्य स्थाण्वाहुतेर्गुणकर्मत्वं कल्प्यत इति दशमाद्ये स्थितम् । स्थाणुः यूपार्थं छिन्नस्य वृक्षस्य भूमिप्रतिष्ठोऽधोभागः। एवमग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति श्रुतस्य पशुपुरोडाशयागस्य अग्नीषोमदेवतासंस्कारार्थत्वं यदुक्तं तदपि श्रुत्यननुगुणमेव । अग्नीषोमीयमिति तद्धितश्रुत्या यदाग्नेय इत्यत्रेव देवताया यागं प्रति गुणत्वस्यैव श्रुतत्वात् । तथाप्यग्नीषोमदेवतायाः पशुयागे उपयोगस्य क्लृप्तत्वेन प्राधान्यमाश्रितम् । तदिदमुक्तपूर्वेषु सर्वेषु प्रतिपत्तिकर्मसु यथासम्भवं योजनीयमिति।

एवं दृष्टार्थादृष्टार्थोभयार्थभेदेन विभक्तं गुणकर्म निरूपितम् । प्रकारान्तरेणापि विभज्य तन्निरूपयति **पुनरिति** । उत्पत्तिः पूर्वमभूतस्य जन्म । आप्तिरधिगमः । विकृतिरन्यथाभावः । संस्कृतिरतिशयविशेषः। निर्देशमात्रेण तत्तत्स्वरूपस्य स्पष्टं प्रतीयमानत्वात् लक्षणमनभिधाय क्रमेण

लक्ष्याण्युदाहरति **तत्रेति** । उत्पत्तिश्चासौ संस्कारश्च उत्पत्तिसंस्कारः । एवमुत्तरत्रापि । **सम्भारेष्विति** । येषामुपरि अग्निर्निधीयते ते पार्थिवा वानस्पत्याश्च पदार्थाः सम्भारा इत्यभिधीयन्ते । त इमे -

*सिकताभिस्सहोषाः स्युस्तथा स्यादाखुमृत्तिका ।*
*वल्मीकमृत्तिका तद्वदशोष्यह्रदमृत्तिका ॥*

*वराहविहतं चापि शर्करा इति पार्थिवाः ।*
*अश्वत्थोदुम्बरौ पर्णः शमी तद्वत् विकङ्कतः ॥*

*वृक्षोऽप्यशनिनिर्भिन्नस्तथा पुष्करपर्णकम् ।*
*वानस्पत्यास्त्वमी प्रोक्ताः सम्भाराः कल्पवेदिभिः ॥*

**निधापिता** इति णिजविवक्षितः । निहिता इत्येव । **इत्याहवनीयेति** । आहवनीयादीनामुत्पत्तौ हेतुभूतो यः संस्कारस्तज्जनकत्वादिति । **व्रीहिगतेति** । व्रीहिगता वैतुष्यरूपा या विकृतिस्तज्जनकत्वादिति । **व्रीहिगतातिशयेति** । व्रीहिगताऽतिशयरूपा या संस्कृतिस्तज्जनकत्वादिति (४२) **संस्कृतीति** । संस्कृतिरूपं च तत् गुणकर्म च तत्वम् । उत्पत्तिसंस्कारत्वम् आप्तिसंस्कारः विकृतिसंस्कार इतिवत् संस्कृतिसंस्कारत्वम् इतिवक्तव्ये संस्कृतिरूपगुणकर्मत्वमिति कथनं गुणकर्मनिरूपणसमापनद्योतनाभिप्रायेण ।

अत्र प्रोक्षणादिवदाधानस्यापि संस्कृतिरूपगुणकर्मत्वमेव युक्तम् । अन्यथा विशिष्टरूपेणोत्पत्तेर्व्रीहिष्वपि वक्तुं शक्यत्वेन विशेषानापत्तेः । आहवनीयशब्दस्तु विशिष्टरूपे प्रवर्तते । नतु तावता विजातीयं किञ्चित्

द्रव्यमभूतपूर्वमुत्पद्यमानं दृश्यते। पुरोडाशश्रपणादिकं पुनरुत्पत्तिसंस्काररूपं गुणकर्मेति द्रष्टव्यम्।

**अत्रेति** । उदाहृतेषु गुणकर्मस्वित्यर्थः । **स्वतन्त्रमिति** । स्वविधिप्रयुक्तमित्यर्थः । परविधिप्रयुक्तत्वं निरस्यति **नत्विति** । क्रतु विधिभिरप्रयोज्यमित्यर्थः । यथा दर्शपूर्णमासादयः क्रतवोऽनुष्ठीयमानाः स्वार्थं प्रयाजप्रोक्षणावघातादिकं प्रयोजयन्ति तथा ते आधानमध्यनञ्च न प्रयोजयन्ति प्रत्युत येनाधानमध्ययनञ्च तत्तद्विधिवशंवदतया कृतं तमेव पुरुषं प्रतीक्षमाणा भवन्ति। तेन स्वातन्त्र्यमनयोरिति। अधिकमन्यत्र द्रष्टव्यम्। किं तर्हि क्रतुप्रयोज्यं गुणकर्मेत्यत्राह **प्रोक्षणादिक**मिति । न केवलमिहोदाहृतं प्रोक्षणमवहननं चेत्येतावन्मात्रं क्रत्वङ्गम् अपि तर्हि पूर्वमपि यानि च यावन्ति चोदाहृतानि तानि च तावन्ति चादानाध्ययन-व्यतिरिक्तानि गुणकर्माणि क्रतुप्रयोज्यानीति हृदि निधायोक्तं सर्वमिति।

अत्रापि निर्देशेनैव स्वरूपावगमात् लक्ष्याण्युदाहृत्य उपपादनमात्रं करोति **अत्रेत्यादिना**। **अग्निहोत्रादिकं नित्यमिति** लक्ष्यनिर्देशः। नित्यत्वे प्रमाणं यावज्जीवमग्निहोत्रं जुहोतीति । **यावति विन्दजीवो**रि ति सूत्रविहितणमुल् प्रत्ययान्तमिदमव्ययम् । जीवनपर्यन्तमित्यर्थः । नन्वाहारादिकं विना कथं सर्वदाऽनुष्ठातुं शक्यमिति शङ्कापरिहार मनसि कुर्वन् कालविशेषविधायकवाक्यमुदाहरति **सायमिति इतीति** । इति वाक्यैरित्यर्थः। **अवगतमि**त्यत्रान्वयः। उदाहृतस्य वाक्यत्रयस्यार्थं संगृह्णाति **जीवतेति** । 'धातुसम्बन्धे प्रत्ययाः' इत्यधिकृत्य विहित णमुल् प्रत्ययानुरोधेन जीवधात्वर्थस्य जुहोतिनाऽन्वयो वक्तव्यः। तत्र कस्सम्बन्ध

इति चेत् यावच्छब्दानुरोधेन यावत्कालं जीवनं तावत्कालं होम इति व्यापकत्वरूप इति मन्वान आह **नियमेन कर्तव्यतयेति** । **नियमेन** अवश्यम् । **दर्शेति** । दर्शपूर्णमासयोरतिपत्तिरतिलङ्घनमित्यर्थः। सा निमित्तं यस्या सा पथिकृदिष्टिः तदादिकमित्यर्थः । **कृत इति** । नित्ये नैमित्तिके चेति समासपरित्यागेनानुषज्य योजनीयम् । भावेवाऽयं क्तः । नित्यनैमित्तिकयोः करण इति (४३) **केचित्** प्राभाकराः । तेह्येवं मन्यन्ते, विधिवाक्येषु लिङा प्रमाणान्तरपूर्वकत्वाभावेनापूर्वमिति गीयमानं कार्यमभिधीयते ।"कार्यत्वेन स्वस्मिन् नियोज्यं पुरुषं प्रवर्तयतोऽस्य लिङर्थस्य नियोग इत्यभिधानान्तरमपि भवति । तदिदं सर्वप्रधानम् । **नहि कार्यमन्यार्थं भवतीति** न्यायात् । तदिदं लिङर्थभूतं कार्यं यस्य पुरुषस्य कार्यं भवति यः पुरुषो ममेदं कार्यमिति लिङर्थमनुसन्धत्त इत्यर्थः, स नियोज्य इत्युच्यते । तत्र तत्तत्कार्ये को नियोज्य इति नियोज्यजिज्ञासायां स्वर्गकामादिपदानि कामनाद्वारा स्वर्गादिफलविशिष्टं नियोज्यं समर्पयन्ति । लिङभिहितं स्वकार्यं साधयितुं प्रवर्तमानस्यास्य नियोज्यस्य धातूपात्तं यागहोमादिकं करणं भवति । एवं विधिवाक्येषु नियोगे नियोज्ये करणे च लब्धे नान्यत् किञ्चिदपेक्षणीयम् । एवञ्च यावज्जीवमग्निहोत्रं जुहोतीत्यत्र जीवत्पुरुषनियोज्यकम् अग्निहोत्रादिकरणकं कार्यं प्रतीतमिति जीवनेतरस्य नियोज्यविशेषणस्यानपेक्षितत्वात् न फलकल्पनमावश्यकम् । विश्वजिता यजेतेत्यत्र तु जीवनादिरूपनिमित्तात्मकस्य नियोज्यविशेषणस्याश्रुतत्वात् स्वर्गरूपस्य तस्य कल्पनं युक्तमिति । एतन्मतविस्तरतन्निरासौ **प्रकरणपञ्चिकायां न्यायरत्नमालायां** नित्यकाम्यविवेकप्रकरणे च द्रष्टव्यौ ।

**अन्येत्विति**। वार्तिककारानुयायिन इत्यर्थः। **निवृत्तिः** ध्वंसः। **काम्यत्वापत्तिरिति**। तथा च नित्यनैमित्तिककाम्यभेदात् त्रिविधत्वकथन-मनुपपन्नमिति भावः। **फलकामनापूर्वकमिति अनुष्ठान**क्रियाविशेषणम्। **फलकाममिति**। फले कामो यस्य स फलाकामस्तम्। तदर्थेति। तस्मै **तदर्थं** यत्फलं तत्साधनत्वेन।

ननु स्वर्गकामो यजेतेत्यत्र स्वर्गकामपदं पुरुषपरं फलपरं वा। पुरुषपरत्वे तदर्थफलसाधनत्वेन यागस्य विधानं न स्यात्। फलपरत्वे **फलकाममुद्दिश्येत्य**सङ्गतं स्यात्। उच्यते। उभयथाऽपि न दोषः। पुरुषपरत्वे फलवाचकं पदान्तरमध्याह्रियते। फलपरत्वे पुरुषवाचकं पदान्तरं कल्प्यत इति।

(४४) **काम्यमपीति**। पूर्वोक्तत्रिविधत्वसमुच्चयेऽपिशब्दः। **केवलमिति**। आमुष्मिकफलरहितमित्यर्थः। केवलैहिकेति समस्य पाठः श्रेयान्। इह लोके भवमैहिकं तादृशं फलं यस्य तत्कर्मैहिकफलकम्। अमुष्मिन् लोकान्तरे भवमामुष्मिकम्। अदश्शब्दस्य हि विप्रकृष्टोऽर्थः। यदाहुः - '**इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टम्**' इति। 'एतदः' एतच्छब्दस्य। 'रूपम्' अर्थः। तेनादश्शब्देन लोकान्तराभिधानं लोकव्यवहारसिद्धम्। केवलञ्च तदामुष्मिकञ्च केवलामुष्मिकं तादृशं फलं यस्य तत् केवलामुष्मिकफलकम्। पूर्वं समस्तपाऽप्येवं द्रष्टव्यम्। ऐहिकञ्च तदामुष्मिकञ्च ऐहिकामुष्मिकं तादृशं फलं यस्य तदैहिकामुष्मिकफलकम्। केवलैहिकफलकर्त्वे हेतुप्रतिपादनाभिप्रायेणाह **तत्तदिति**। स स समयः तत्तस्समयः तत्र परिशुष्यन्ति यानि सस्यानि तेषां सञ्जीवनस्य हेतुर्या वृष्टिः तां कामयत इति तत्कामी पुरुषस्तेनेति।

अत्र **आद्यं यथे**त्युपक्रमानुसारेण 'उक्तवृष्टिकामिना क्रियमाणम्' इत्येव वक्तुमुचितम् । नतु **क्रियत** इतीति ध्येयम् । अथवा **यथा कारीर्यादी**त्यन्तमेकं वाक्यम् । तदुपपादनाय **तत्तदिति** वाक्यान्तरम् । तत्र प्रथमतच्छब्दः पृथक्पदम् । हि शब्दोऽप्यध्याहार्यः । **तत्समयेति** । प्रत्युपस्थिताकालेप्यर्थः । तद्धि कारीर्यादि तत्समयशुष्यत्सस्यसञ्जीवन-कामिना क्रियते तेन तत्कामितसद्योवृष्टिजनकतया श्रुतं कारीर्यादि केवलैहिकफलं भवतीत्यर्थः ।

एवं सद्योवृष्टिकामं पुरुषं प्रति प्रवृत्तत्वात् कारीर्या वृष्टिकामो यजेतेति शास्त्रस्य, कारीर्यादेः केवलैहिकफलकत्वमुक्तम् । तदिदं द्रढयितुमसद्योवृष्टिकामस्य तत्र प्रवृत्तिर्नास्तीत्याह **नेति** । अन्यः कालः कालान्तरं तत्र भवतीति कालान्तरभाविनी । सा च सा वृष्टिश्च तत्र कामो यस्य तेन । आगामिषु संवत्सरेषु सस्यानि शुष्कीभविष्यन्तीति नदोर्नी कारीरीयागः क्रियते । तादृशस्य शोषणस्यानुपस्थितत्वादित्यर्थः ।

ननु कालान्तरभाविवृष्टिफलकत्वेऽपि कारीर्यादेः ऐहिकमात्र फलकत्वस्य न विरोध इति न **कालान्तरभाविवृष्टिकामिनेति** न वक्तव्यम् । सत्यम् । जन्मान्तरीयवृष्टिकामप्रतिषेधस्य कैमुतिकन्यायसिद्धत्वमभि-सन्धाय एतद्वचनम् । यथाह **शङ्करमिश्रः** उपस्थितसस्यार्थैव हि वृष्टिः सर्वैः काम्यते नानुपस्थितैहिकसस्यार्था किमुत जन्मातन्तरीयसस्यार्थेति । अथ जन्मान्तरीयवृष्टिरपि इह लोक एव भवतीति तदप्यैहिकफलमेव नत्वामुष्मिकम् । न हि लोकान्तरे सस्यवृष्ट्यादिसत्वे प्रमाणमस्ति । तेन तत्प्रतिषेधोऽपि न कर्तव्य इति चेन्नैवम् । इह लोकेऽपि जन्मान्तरे जायमानं

फलमामुष्मिकमेवेत्यभिप्रायः । लोकान्तरफले मुख्यमप्यामुष्मिकपदम् एतच्छरीरपातानन्तरजायमानत्वसादृश्यात् जन्मान्तरीयफलमपि प्रतिपादयति । एवं गौणमुख्यसाधारण्येनैव विभागवाक्ये आमुष्मिक-पदमुपात्तम्। **ऐहिक**मित्यपि एतच्छरीरेणैवानुभाव्यफलपरमिति।

**केवलामुष्मिकंफलं यथेति** । विभागवाक्यानुसन्धानप्रयुक्तं बुद्धिक्लेशपरिहाराय द्वितीयं यथेति नोक्तमिति बोध्यम् । **स्वर्गाद्यर्थं** स्वर्गादिफलकम् । **भूतिकाम** इतीति । इत्यादिवाक्यविहितमित्यर्थः । अत्रादिना चित्रया यजेत पशुकाम इति वाक्यं ग्राह्यम्। **भूत्यादी**त्यादिना पश्वादिकं गृह्यते। पशुभूत्यादीनामुभयरूपत्वमुपपादयन्त आहुः

*साध्यत्वमेव पश्वादेः शब्देन प्रतिपाद्यते*
*अमुत्र वेह वेत्येवं नास्ति शब्दो नियामकः*
*विपाकः कर्मणां येषां प्राग्देहविनिपाततः*
*प्राप्तस्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे*

इति। नामधेयस्य प्रसिद्ध्या **कारीर्यादि दर्शपूर्णमासादिक**मित्युक्तम्। तदभावात् वायव्यस्य कर्मणो विधायकवाक्यमेवोदाहृतमिति विभाव्यम्। केचिद्वृष्ट्यादेरुभयरूपत्वमिच्छन्ति । यथाह **खण्डदेवः**- अस्तु वा वृष्ट्यादेरपि तादृशकामनासत्त्वे उभयरूपत्वम् । केवलैहिकत्वं तु पुत्रगतपूतत्वादावाहवनीयादौ च द्रष्टव्यमिति । तादृशकामनासत्त्वे जन्मान्तरविषयकामनासत्त्वे। एतदाद्युपपादनं विस्तरभयान्नेह क्रियत इत्याह अन्यत्र विस्तर इति। शब्दबाहुल्यं विस्तरः।

**नन्विति** । नचात्र पूर्वं क्वचिदपि वेदोऽलौकिकार्थबोधक

इत्यनुक्तत्वेन अनुपस्थितत्वात् तदसम्भवाक्षेपो न युज्यत इति शङ्कनीयम्। विधायकं वाक्यं ब्राह्मणं पञ्चमलकारत्वाङ्गीकाराद्विधायकत्वसम्भव इत्याहुरित्यादौ बहुधा विधायकत्वस्य पूर्वमुक्तत्वात् तस्य चालौकिकार्थ-बोधकत्वरूपत्वादिति। वेदः स्वतन्त्रप्रमाणमित्यनेन वा तदुक्त मेवेति मन्तव्यम्। **अलौकिकेति**। वेदेतरप्रमाणानामिह लोकशब्देन ग्रहणम्। तेनालौकिकमिति प्रत्यक्षादिप्रमाणागम्यमित्यर्थः। **अप्रत्यक्षमितीति**। प्रत्यक्षाभावे तदुपजीवीन्यनुमानार्थापत्तिरूपाण्यपि प्रमाणानि तत्र न भवन्तीत्यर्थात् सिद्ध्यति।

(४६) **विधायकत्वप्रकार** इति। केन केनांशेन कं कमर्थमुपस्थाप्य कीदृशं बोधं जनयित्वा पुरुषाणां प्रवृत्तिहेतुः भवतीत्येतत् कथ्यत इत्यर्थः। प्राधान्यात्प्रथमं प्रत्ययार्थमाह **तत्रेति**। तत्र विधिवाक्यान्तर्भूते। अनुपयोगात् ज्योतिष्टोमदर्शपूर्णमासादिनामधेय-परित्यागेन विधिवाक्योदाहरणम्। नन्वेकप्रत्ययवर्तिनोः आख्यातत्व-लिङ्त्वयोः कथं भेदः। न हि घटत्वकलशत्वयोः भेदोऽस्तीत्यत्राह **तत्रेति**। लिङ्त्वं हि लिङ्मात्रे वर्तते इति सुविदितम्। आख्यातत्वं पुनस्सर्वलकारवृत्ति। तेन व्याप्यव्यापकभूतयोः लिङ्त्वाख्यातत्वयोर्घटत्वपृथिवीत्वयोरिव भेदोऽवश्यम्भावीति भावः। **आख्यातत्वञ्चे**त्यसन्देहार्थश्चकारः। **सर्वेति**। सर्वेषां लकाराणां साधारणं सर्वलकारवृत्तिरित्यर्थः। लकाराः लट् लिट् इत्यादयः। **तदवच्छेदेने**ति। तेनावच्छेदस्तदवच्छेदः। अवच्छेदो विशेषणम्। आख्यातत्वेन विशेषितः आख्यातत्वेन रूपेण प्रतीत इत्यर्थः। **अर्थभावनामिति**। इयमेव कृतिः प्रयत्न इत्यात्मगुणविशेषतया-

अभिधीयते । शास्त्रप्रसिद्धसंज्ञाऽर्थऽर्थभावनेति । एतद्व्याख्यानार्थमुक्तं पुरुषप्रवृत्तिरूपमिति ।

*आख्यातवाच्योऽथ कृतिः प्रयत्न इत्युदीर्यमाणो गणितो गुणिषु च।*
*पाकादिहेतुः पुरुषात्मनि स्थितो व्यापार एवाभिहितोऽर्थभावना ॥*

अंशत्रयविशिष्टत्वोपपादनायोपक्रमते **तथाहीति** । **भावयेदितीति** । तप्रत्ययेनाख्याततत्वावच्छेदेनाभिहितार्थभावना भावयेदित्यत्र प्रकृत्या प्रतिपाद्यते लिङ्त्वावच्छेनाभिहितो विधिः प्रत्ययेन प्रतिपाद्यते । अंशत्रयाकाङ्क्षोपपत्त्यर्थमत्र लिङ्घटनम् । न हि भावनेत्युक्ते कस्यचिदाकांक्षा भवतीति । (४७) **तिङन्तेति** । तिङ्प्रत्ययोऽन्ते यस्य तत् तिङन्तं पदं तस्यार्थः तिङन्तार्थश्च सा क्रिया च तस्यामन्वयः तस्य नियम इति । **सतीति** । वैयाकरणानामप्येवमिष्टत्वान्नातीवात्र विवाद इति हृदयम् । अंशत्रये प्रथमस्यांशस्यान्वयमाह । **तत इति** । भावनोपस्थित्य-नन्तरमित्यर्थः । **करोतीति** । करोतिभावयत्योः समानार्थकत्वाभिधानं करोतेर्व्यापारसामान्यवाचित्वं वदतां प्राचां मतेन । नव्यास्तु भावयतेर्व्यापार-सामान्यवाचित्वेऽपि करोतेरात्मवृत्तिगुणविशेषरूपकृतिमात्र-वाचित्वमङ्गीकुर्वन्ति । तन्मतेन चार्थभावनायाः करोत्यर्थरूपत्वादेव सकर्मकत्वं सिद्धमिति ध्येयम् । (४८) **भिन्नेति** । भावनावाचकं यजेतेति पदं तस्माद्भिन्नं यत्स्वर्गकामपदं तेनोपात्तोऽपि उपस्थापितोऽपीत्यर्थः । षष्ठाध्यायप्रथमाधिकरणे यजेत स्वर्गकाम इत्यत्र किं यागस्य भाव्यत्वेनान्वय उत स्वर्गस्येति संशय्य, भावनया हि भाव्यरूपं कर्म आकाङ्क्ष्यते । तत्र यस्य शीघ्रमुपस्थितिर्भवति तस्यान्वयो युक्तो न विलम्ब्योपस्थितस्य । तत्र

भावनावाचकेन यजेतेति पदेनैव प्रकृत्यंशेनोपात्तत्वाद्यागः शीघ्रोपस्थितो भवति । न स्वर्गः । भिन्नपदोक्तत्वात् तदिदमाहुः ।

*धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।*
*स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यञ्च दुर्बलम् ।।*

इति । तस्माद्यागस्य भाव्यत्वेनान्वय इति पूर्वपक्षः प्रवर्तितः । तदिदं हृदि निधायोक्तं **भिन्नपदोपात्तोऽपीति** । वाक्यरूपस्योपस्थापकप्रमाणस्य दौर्बल्येऽपीत्युक्तं भवति ।

**दुःखात्मकस्येति** । ननु दुःखात्मकत्वेऽपि प्रमाणप्रतिपन्नस्य एव भाव्यत्वमङ्गीकर्तव्यम् । पदश्रुत्या च प्रबलया यागस्यैव तदवगम्यते । न तत्पुरुषस्यानिष्टमिति परित्यक्तुं युक्तमिति चेत् दुःखात्मकस्य भाव्यत्वे पुरुषो न प्रवर्तेतेति प्रवर्तनारूपविधिस्वरूपं भज्येतेति विधिश्रुतिरूप-प्रबलतरप्रमाणेन पदश्रुतेर्बाधात् न यागस्य भाव्यत्वमिति वक्ष्यते ।

प्रतिपत्तिवैशद्याय उक्तभाव्यांशमात्रावगाहिनो भावनाबोध-स्याकारं दर्शयति । **ततश्चेति** । एवं स्वर्गस्य भाव्यत्त्वेनान्वयाच्चेत्यर्थः । स्वर्गभाव्यका भावना विधिविषय इत्येतद्बोधाभिलापस्य प्रकारान्तरम् । भाव्यांश उक्तः करणांशमाह **तत** इति । स्वर्गादिरूपभाव्यान्वयेन भाव्याकाङ्क्षाशान्त्यनन्तरमित्यर्थः । उपस्थापकप्रमाणमाह **समान-पदोपात्त** इति । **समानम्** एकम् । स्ववाचकपदोपस्थापित इत्यर्थः । अत्र द्वितीयप्रथमपादस्थ**भावार्थाधिकरणन्यायो**ऽभिसंहितः । उक्तं हि तत्र सन्निकृष्टश्च प्रकृत्युपात्तो धात्वर्थः प्रत्ययवाच्यया भावनया पदश्रुत्या सम्बध्यते । द्रव्यादि तु पदान्तरेणोपात्तम् । श्रुतिश्च वाक्याद्बलीयसीति ।

करणांशमपि घटयित्वा बोधमभिलपति इति । **यागेनेति** कर्तव्यतांशमाह तत इति । करणाकाङ्क्षाशान्त्यनन्तरमित्यर्थः । **कथम्भावाकाङ्क्षायामिति** । **इतिकर्तव्यतात्वेनान्वेतीत्यत्रान्वयः** । **कुर्यादितीति** । इति बोधो यथा भवति तथाऽन्वेतीत्यर्थः । ननु भाव्याकाङ्क्षायां स्वर्गो भाव्यत्वेनान्वेति करणाकाङ्क्षायां यागः करणत्वेनेत्युक्तम् । तद्वदितिकर्तव्यताकाङ्क्षायामग्न्य-न्वाधानादिकम् इतिकर्तव्यतात्वेनान्वेतीति वक्तव्ये कथं **कथम्भावा-काङ्क्षयामित्यन्यस्याकाङ्क्षामुक्त्वा** इतिकर्तव्यतात्वेनेत्यन्यथाऽन्वय उच्यत इत्याशङ्कायामाह **कथम्भावेति** । **अयमाशयः** इतिकर्तव्यताया हि कथम्भावाकाङ्क्षापूरकत्वं स्वभावः। तेनेयमाकाङ्क्षा इतिकर्तव्यता-विषयिण्येवेति ज्ञायते । नह्यन्यविषयकत्वे आकाङ्क्षाया इति कर्तव्यतया पूरणं भवितुमर्हति । तस्मात् **कथमिति कथम्भावाकाङ्क्षायामित्यनेन** 'कथमिति इति कर्तव्यताऽऽकाङ्क्षाया' इत्येवोक्तं भवतीति । **ओदन** इति । भिन्नपदोपात्तत्वा**दन्वेतीत्युक्तम्** । समानपदोपात्तत्वाद्द्रुततरं प्रतीयत इत्यभिप्रायेण (४९) **लभ्यत** इति। **सहितेनेति** । **लभ्यत** इत्यनुषञ्जनीयम् । विशिष्टवाक्यार्थमाह **ततश्चेति** । **पाकेनेत्यस्य** व्याख्यानं **तेजस्संयोगेनेति**

यजेतेत्यत्र यजिधातोरुपरितने तप्रत्यये धर्मद्वयमस्तीत्युक्तम् तत्राख्यातत्वावच्छेदेन प्रतिपाद्योऽर्थो निरूपितः । लिङ्त्वावच्छेदे प्रतिपाद्यमर्थमाह **स एवेति** । तप्रत्यय एवेत्यर्थः । लिङ्प्रत्यय एवेति क्वचित्पाठः । तदनुसारेणैव लिङ्प्रत्यय एवेत्यर्थ इति परिष्कारे उक्तम् एतत्तन्त्रसिद्धसंज्ञाकथनं **शब्दभावनामिति** । तद्व्याख्यानं **प्रेरणाख्यामिति अभिधत्त** इति । शक्त्या बोधयतीत्यर्थः । शब्दभावनापदप्रवृत्तिनिमित्त मनुपदं वक्ष्यति । एवं वेदस्थ लिङ्प्रत्ययः प्रेरणावाचकः, प्रेरणार्थको वैदिक

लिङ्प्रत्ययः, वैदिकलिङ्प्रत्ययस्य प्रेरणायां शक्तिरिति प्रतिज्ञा कृता। तत्कथमित्यपेक्षायां लिङ्प्रत्ययत्वात् लौकिकलिङ्प्रत्ययवदिति हेतुदृष्टान्तावभिप्रेतौ। तत्र लौकिकस्य वा लिङ्प्रत्ययस्य कथं प्रेरणाशक्तिसिद्धिरित्यत्रानुमानं प्रमाणं वाच्यम्। प्रेरणा लिङ्प्रत्ययवाच्या लिङ्प्रत्ययोच्चारणे सति नियमेन प्रतीयमानत्वात् यत् यस्य शब्दस्योच्चारणे नियमेन प्रतीयते तत्तस्य वाच्यम्। यथा गोत्वं गोपदस्येति। तत्र लिङर्थव्युत्पत्तिरहितस्य व्युत्पित्सोरेतदनुमानोदयो दुर्घटः। पार्श्वस्थो हि व्युत्पित्सुराचार्यमुखात् उच्चरन्तमानयेतिशब्दं शृणोति। आनयन्तञ्च शिष्यमवलोकयति। शिष्येणाचार्यप्रेरणा प्रतीतेति तु कथं तेन ज्ञायेत। न हि शिष्यस्य यदाचार्यप्रेरणाविषयज्ञानं तत् पार्श्वस्थस्य गवादिकमिव प्रत्यक्षम्, तेन लिङुच्चारणे सति शिष्येण नियमेन प्रेरणा प्रतीयत इत्यजानतः पार्श्वस्थस्य प्रेरणायां लिङुच्चारणे सति नियमेन प्रतीयमानत्वरूपहेतु-ज्ञानासम्भवात्तस्य प्रेरणाया लिङ्वाच्यत्वानुमितिर्नभवितुमर्हतीति। तत्र तस्यानुमानान्तरेण हेतुज्ञानं जायत इति वक्तव्यम्। अयं गवादिविषय-प्रेरणाज्ञानवान् तद्विषयप्रवृत्तिमत्त्वात्। या या प्रवृत्तिः सा सा प्रेरणाज्ञान-पूर्विका यथा मन्मातुर्मह्यं पयोदानादिप्रवृत्तिर्मत्प्रेरणाज्ञानपूर्विकेति। एवं लिङुच्चारणानन्तरकालिकीं शिष्यप्रवृत्तिं दृष्ट्वाऽनुमितस्य प्रेरणाज्ञानस्यापि लिङुच्चारणानन्तरकालिकत्वात् लिङुच्चारणे सति प्रतीयमानत्वरूपस्य हेतोरनुमितिरूपं ज्ञानं पार्श्वस्थस्य जायते। ततः तद्वाच्यत्वानुमितिरिति लौकिकलिङः प्रेरणार्थकत्वसिद्धावनुमितिद्वयम्। तत्र प्रेरणाज्ञानानुमितिरूपां हेत्वनुमितिमाह **लोकेपीति**। अत्र 'अन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानं प्रवृत्तिकारणमिति गामानयेत्याचार्यवाक्यश्रवणानन्तरम् अयमाचार्यो मां

गवानयने प्रेरयतीति प्रेरणाख्यव्यापारं ज्ञात्वैव शिष्यो गवानयेन प्रवर्तत इति प्रेरणाज्ञानमनुमीयते' इत्येवं विधयैव पङ्क्त्या भवितव्यं न यथाश्रुतरीत्या, स्वरसतो हि पार्श्वस्थस्तदानीमेव शिष्ये प्रेरणाज्ञानप्रवृत्त्योरन्वय-व्यतिरेकाववधारयन् कार्यकारणभावं निश्चिनोतीत्युक्तं भवति। न चैतद्युज्यते। पूर्वमेव तत्कार्यकारणभावाज्ञाने शिष्यगतस्य आचार्यप्रेरणाविषयज्ञानस्य पार्श्वस्थेन ज्ञातुमशक्यत्वात् प्रेरणास्वरूपज्ञानस्यैव दुश्शकत्वेऽन्वय-व्यतिरेकाभ्यां कार्यकारणभावनिश्चयस्य गर्भस्रावगळितत्वात् । तेन स्थितस्यास्मदुक्तार्थे योजनमेवं कर्तव्यम् । **ज्ञात्वैव शिष्यो गवानयने प्रवर्तत इति** इति हेतोः इति कल्पनात् इत्यनुमानादिति पर्यवसितम् । प्रेरणाज्ञानं प्रवृत्तिकारणं भवत्येवेत्यर्थः। अन्यत्रान्वयव्यतिरेकाभ्यां निर्धारितं यत्प्रेरणाज्ञानस्य प्रवृत्तिकारणत्वं तत् शिष्यप्रवृत्तिस्थलेऽपि प्रेरणाज्ञानस्यानुमानादविहतं भवतीति शब्दार्थः । एवं व्युत्पित्सुना शिष्यगतस्य प्रेरणाज्ञानस्य अनुमितत्वात् हेतुज्ञानं तस्य निराबाधमिति तात्पर्यगत्या बोध्यम् ॥

लिङ्वाच्यत्वानुमितिमाह (५०) **प्रेरणाज्ञानस्येति**। **अन्वयेति**। लिङादिश्रवणसत्वे प्रेरणाज्ञानं भवतीत्यन्वयः । तदभावे एतदभाव इति व्यतिरेकः । **गृह्यत इति** । अनुमीयत इत्यर्थः । **तत्रैव** प्रेरणायामेव । ननु लोके प्रेरकः कश्चिदस्ति तदीयां प्रेरणां तदुच्चारितो लिङादिरभिधत्त इति युक्तं लिङादेः प्रेरणार्थकत्वम् । वेदे तु प्रेरकाभावेन प्रेरणायाः शशश्रृङ्गायमाणत्वात् लिङादेस्तदभिधायित्वं दुर्वचमित्यत्राह **इयांस्त्विति**। **प्रयोक्त्रिति** । प्रयोक्ता लिङाद्युच्चारयिता । स इति । प्रेरणाख्यो व्यापार इत्यर्थः । **अङ्गीक्रियत इति** । वेदो मां प्रवर्तयतीति सार्वत्रिकव्यहारबलात्

प्रवर्तकत्वे आवश्यके प्रवर्तनाऽपि प्रेरणा तत्राऽऽवश्यकीत्यर्थः ।
सुग्रहत्वादिदानीं शब्दभावनापदप्रवृत्तिनिमित्तमाह । अत इति ।

*पुरुषप्रवृत्तिजनको वैदिकलिङ्वृत्तिरपि च लिङ्वाच्यः।*
*आचार्येच्छासदृशो व्यापारश्शब्दभावना नाम ।।*

व्यवहारोपयोगितया नामान्तरमाह **यागेति** ।

(५३) **सैषेति** । शास्त्रप्रसिद्धा उक्तरूपेत्यर्थः । **तत्र** अंशत्रये **अध्ययनेति** । एतद्विशेषणप्रयोजनमध्ययनगृहीतेत्यत्र परिष्कारोक्तमेव। **अर्थवादेति** । अर्थवादेन प्रतिपाद्यं यत्प्राशस्त्यं तज्ज्ञानमिति । **इतिकर्त्तव्यतात्वेनेति** । करणोपकारकत्वं हि इतिकर्तव्यतालक्षणम्। लिङादिभिः प्रवर्तनाज्ञानद्वारा प्रवृत्तौ उत्पादनीयायां पुरुषस्योत्साहजननेन प्रवृत्तिशैघ्र्यसम्पादनेन प्राशस्त्यज्ञानस्य लिङादिरूपकरणोपकार-कत्वादितिकर्तव्यतात्वोपपत्तिः । **तथाचेति**। एवं त्रयाणामन्वये सतीत्यर्थः। **साङ्गेति** । अङ्गैस्सहितास्साङ्गा वेदाः तेषामध्येतारः । **अधीतेति** । अधीतानि यानि व्याकरणनिगमनिरुक्तानि तदादीनां वशात् । **निगमाः** यत्रान्या ओषधयो म्लायन्ते इत्यादीनि शब्दार्थबोधनपरवेदवाक्यानि । अध्ययनेन गृहीते यस्स्वा ध्यायस्तद्गतेति । **स्वाध्यायः** स्वकुलपरम्परागता वेदशाखा । **यागादीन्** । यागदानहोमादीन् । नन्वत्र लिङादिभिरिति लिङादीनां करणत्वमुक्तंप्राशस्त्यज्ञानसचिवैरिति प्राशस्त्यज्ञानस्येतिकर्तव्यतात्वमपि अर्थभावनाया भाव्यत्वं तु नोपात्तमित्यत्राह । **अनुतिष्ठेयुरिति** । धात्वर्थस्यानुष्ठानस्य प्रत्ययार्थे द्वितीयाविभक्तिवाच्य भाव्यत्वेनान्वयात् भाव्यत्मुक्तमेवेति भावः ।। नन्वेतेनानुष्ठानस्य भाव्यत्वमुक्तम् ।

पुरुषप्रवृत्तिरूपाया **अर्थ**भावनायाः खलु भाव्यत्वमिदानीं वक्तव्यमित्युक्त-मित्यत्राह अनुष्ठानमिति। अनुतिष्ठेयुरित्यादेरेवं सति भाव्यत्वाप्रतिपादकत्वाक्षेपो न भवतीत्याह **तेनेति**। **तेन** प्रवृत्तिपर्यायानुष्ठानस्य अनुतिष्ठेयुरित्यत्र प्रत्ययार्थशब्दभावनायां भाव्यत्वेनान्वितत्वेन। (५५) **इयञ्चेति**। अनतिप्रयोजनश्चकारः। **ज्योतिष्टोमादीति**। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिषु प्रातिस्विकवाक्येषु। ज्योतिष्टोमादीनां कर्मणां यानि प्रातिस्विकानि वाक्यानि ज्योतिष्टोमेन स्वर्गकामो यजेत, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, सौर्यञ्चरुं निर्वपेत् ब्रह्मवर्चसकाम इति तेष्विति वा। स्वस्मिन् स्वस्मिन् प्रति स्वम्। प्रतिस्वं भवानि **प्रातिस्विकानि**। तत्तत्कर्मविधायकानीत्यर्थः। **अवगमादिति**। विधिविषयत्वे कर्तव्यत्वं कर्तव्यत्वे अंशत्रयाकाङ्क्षा तदाकाङ्क्षायां तदन्वयः तदन्वये तद्विषयकविशिष्टबोध इत्यानुपूर्व्या सिद्ध्यति। प्रतिस्विकविधिवाक्येषु लिङ्प्रत्ययेन एकाऽर्थभावना एकाच शब्दभावना विधिरूपाऽभिधीयते। तत्र यथा शब्दभावनारूपविधिविषयत्वात् अर्थभावनायाः कर्तव्यत्वप्रतीतौ अंशत्रयाकाङ्क्षायां तदन्वये तद्विशिष्टबोधस्तद्वत् तस्याः शब्दभावनाया विध्यन्तरविषयत्वाभावान्न तादृशबोधो भवतीत्याशयः।

अस्तु कर्मणि तव्यप्रत्ययः किं तेनेत्यत्राह (५६) **कर्मचे**ति। असन्देहे चकारः। नन्वस्तु स्वाध्यायस्य प्रधानत्वं तव्यप्रत्ययोपात्त-कर्मत्वानुरोधेन। अध्ययनस्य तु गुणकर्मत्वबोधकं न किञ्चिदस्तीत्यत्यत्राह **तत्संस्कारक**मिति। तव्यप्रत्ययो हि स्वप्रकृतिवाच्या या क्रिया तन्निरूपितमेव कर्मत्वमभिदधाति कर्मत्वञ्चेह प्राप्यत्वरूपम्। तेनाध्ययननिरूपितमेव प्राधान्यं स्वाध्यायस्य भवति। एवं सत्यर्थात्

स्वाध्यायस्य प्राप्तिरूपसंस्कारजनकं यदध्ययनं तस्य गुणकर्मत्वं सिद्ध्यति। यथा द्वितीयया व्रीहीणां कर्मत्वे सिद्धे गुणत्वप्रतिपादक तृतीयाश्रुत्यादि-विरहेऽपि प्रोक्षणादीनां गुणकर्मत्वं विज्ञायते तद्वदिति भावः।

**अध्ययनमिति** । गुरुमुखोच्चारणानूच्चारणमित्यर्थः । **तत्संस्कारकमिति** स्वाध्यायस्य प्राप्तिरूपसंस्कारजनकमित्यर्थः । तदिदमाह **अध्ययनजनितग्रहणसंस्कारेति** अतएव गुणकर्मत्वमात्रं प्रोक्षणादिदृष्टान्त इति द्रष्टव्यम्। ननु स्वध्यायस्य तव्यप्रत्ययेन बोधितमपि संस्कार्यत्वं परित्यज्याध्ययनं प्रति गुणत्वमेव स्वीकर्तव्यम्। प्रयोजनाभावात्। यथा 'सक्तून् जुहोति' इत्यत्र हुतानां सक्तूनां प्रयोजनान्तरासम्भवात् सक्तुभिर्जुहोतीति गुणत्वं कल्प्यत इति सिद्धान्तस्तद्वदित्यत्राह **अध्ययनजनितेति** । प्रयोजनाकाङ्क्षायां उपपादकं विशिष्टेत्यन्तं स्वाध्यायविशेषणम् । निष्प्रयोजनस्य हि संस्कारो न युज्यत इति । प्रयोजनाकाङ्क्षायां यद्यागादिरूपस्यार्थस्य ज्ञानं तदेव प्रयोजनमित्यन्वयः । अत्र **दृष्टत्वादित्येकः** । **तत्तत्कर्मे**त्यादिनाऽपर इति हेतुद्वयमुक्तम् । अदृष्टापेक्षया दृष्टस्य लघुत्वेऽपि पुरुषार्थत्वाभावे प्रयोजनत्वं न सम्भवतीति द्वितीयहेतोरारम्भः । स्वर्गादिरूपं यदलौकिकं श्रेयस्तत्साधनत्वादिति। कथमर्थज्ञानस्य श्रेयस्साधनत्वं तद्बोधकवचनाभावादित्यत्रोक्तं **कर्मानुष्ठानद्वारेति** । यागादिज्ञाने सति तदनुष्ठनम् । तदनुष्ठाने सति 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि वचनबोधितमलौकिकं श्रेयो भवतीति । एवं **कर्मानुष्ठानद्वारे**त्यनेन अर्थज्ञानजन्यत्वमनुष्ठानस्योक्तम्। तदुपयोगितयाऽनुष्ठान जनकत्वमर्थज्ञानस्योच्यते अनुष्ठानौपयिकमित्यनेन। लघुत्वात् प्रयोजनवत्त्वाच्चाध्ययनसंस्कृतस्य स्वाध्यायस्य यागाद्यर्थज्ञानं

प्रयोजन मित्युक्तम् । एवं तस्य प्रयोजनत्वोपपत्तावपि तदुपस्थापक-प्रमाणाभावे तस्य प्रयोजनत्वेनान्वयोऽनुपपन्न इत्यत्राह **स्वाध्यायगतेति**। स्वध्यायगतानि यानि लिङादिभिर्विशिष्टानि वाक्यानि तेषां सामर्थ्येन लभ्यमिति । उपस्थितमित्यर्थः । **एतदुक्तं भवति** । विनियोज्यानु-रोधेनोद्देश्यस्वरूपावधारणं न्यायसिद्धम् । तेन यथा 'स्रुवेणावद्यति' 'स्वधितिना ऽवद्यति' 'हस्तेनावद्यति' इत्यविशेषेण त्रयाणामवदानकरणत्वे प्रतीयमाने स्वधितिना हस्तेन वाऽऽज्यावदानं कर्तुं न शक्यते, स्रुवेण स्वधितिना वा पुरोडाशावदानं, न स्रुवहस्ताभ्यां मांसावदानमिति विधेयस्रुवादिसामर्थ्यानुसारेण स्रुवेणाज्यमवद्यति हस्तेन पुरोडाशमवद्यति स्वधितिना मांसमवद्यतीति कल्प्यत इति 'अर्थाद्वा कल्पनैकदेशत्वात्' इति प्रथमाध्यायान्ते निरूपितं तथा स्वाध्याय स्वरूपपर्यालोचने पुरुषप्रवृत्त्येकफलत्वं विज्ञायते लिङादिश्रवणस्य अन्यथा निष्फलत्वापत्तेः। तत्र तस्य प्रवर्तकत्वं न प्रवाहादेरिवानिच्छन्तमपि पुरुषं परवशीकृत्य । न हि लिङादिश्रवणानन्तरं दत्तगलहस्तस्येव पुरुषस्यावश्यं प्रवृत्तिर्भवति। तेन शब्दप्रमाणरूपाणि स्वध्यायघटकवाक्यानि वाक्यार्थज्ञानं पुरुषस्य जनयित्वैव प्रवृत्तिमुपादयन्तीति निश्चीयत इति स्वाध्यायरूप विनियोज्यगतेनैव प्रवृत्त्यनुकूलज्ञानजननसामर्थ्येनार्थज्ञानस्य प्रयोजनत्वेन उपस्थितिः सम्भवतीति । **कर्मावबोधमिति** । **अनुष्ठानौपयिक**-मित्यनेनोक्तं कारणत्वं व्यतिरेकमुखेनाहेति वा एतद् ग्रन्थावतरणम् ।

**तदेव प्रयोजन**मित्येवकारव्यवच्छेद्यमाह नन्विति । **अदृष्टम्** अपूर्वद्वारा विश्वजिन्न्यायकल्प्यः स्वर्गः । **दृष्टफल** इति। यत्रादृष्टकल्पनं विना श्रुतं नोपपद्यते तत्र श्रुतार्थान्यथाऽनुपपत्तिरूप अर्थापत्तिप्रमाणेनादृष्टं

कल्प्यते। स एव विश्वजिन्न्यायोऽपि। यदा तु दृष्टं प्रयोजनमादाय श्रुतमुपपन्नं तदाऽन्यथानुपपत्तिरूपप्रमाणाभावादृष्टकल्पनमयुक्तमिति । (५७) **स्वाध्यायेति**। स्वाध्यायं गतानि विधिवाक्यानि तानि गता लिङादयः तैः प्रतिपादिताः । **कर्तव्यत्वेन विधीयन्त** इति । 'स्वाध्यायोऽध्येतव्यः' इत्यस्मिन् वाक्ये पुरुषोऽध्ययनेन स्वाध्यायं भावयेदित्येव बोधः । तत्र पुरुषगतार्थभावनाया एव कर्तव्यत्वं प्रतीयते न लिङ्गतशब्दभावनायाः। स्वाध्ययस्याध्ययनसंस्कार्यत्वान्यथानुपपत्त्या तु यत् विनियोगवाक्यं कल्प्यते'लिङः पुरुषप्रवृत्ति भावयेयुः' इति तत्र लिङां कर्तृत्वात् तद्गतार्थभावनात्वेन प्रतीयमानानां शब्दभावनानां कर्तव्यत्वेन विधिरित्यस्मिन्नर्थे, अन्यथा प्रतीयमानोऽप्येतत्प्रकरणस्थः सर्वः परिभाषाग्रन्थः परिष्कारे व्याख्यातः। तत्सर्वं तत्रैव सावधानं द्रष्टव्यमिति नेह प्रपञ्चते।

**साङ्गेति**। साङ्गानां वेदानामध्ययनेन व्युत्पन्नाः । **अर्थवादेति**। अर्थावगतप्राशस्त्यरूपं यदङ्गं तत् सचिवः सहकारि एषां तैरिति । स्वाध्यायस्य हि विधिरर्थवादो मन्त्र इति बहवोंऽशाः । तत्राध्ययन-संस्कृतानि लिङ्घटितवाक्यानि पुरुषप्रवृत्युपयुक्तानीत्युक्तम्। तथाविधा अर्थवादा विधेयप्राशस्त्यप्रतिपादनोपयुक्ता इति प्रतिपादयिष्य-माणमेवाह **अर्थवादगतेति**। पूर्वोक्तमेव स्मारयति **अनुतिष्ठेयुरिति**। अधीयानैः स्वपुस्तकेष्वविस्मरणाय लिखितं ग्रन्थभ्रान्त्या मुद्रितम् । तस्मादेवमादिरग्रन्थ इत्यपि मन्यन्ते। **अध्ययनावगतलिङादेरिति**। वस्तुतः कल्पविनियोगवाक्ये लिङां कर्तृत्वेन लिङ्ज्ञानस्य तदर्थविधिज्ञानस्य वा करणत्वम् । अत्र तु पुरुषा अनुतिष्ठेयुरिति

पुरुषकर्तृत्वस्यैवोपादानात् ज्ञानद्वारं करणत्वं लिङादेरेवोक्तमिति। **इष्टमिति**। प्राचामिति शेषः। अत एव प्राचीनैरङ्गीकृतत्वेन प्रामाणिकत्वसूचनाय सिद्धमिति वा युक्तमिति वा नोक्तमिति ध्येयम्।

एवमर्थभावनाया अंशत्रयान्वयप्रतिपादनेन शब्दभावनारूप-विधिभाव्यत्वप्रतिपादनेन च किञ्चद्भाव्यका, किञ्चित्करणिका किञ्चिदितिकर्तव्यताकाऽर्थभावना शब्दभावनाप्रयोज्येति बोधं जनयन्ति विधिवाक्यानि विधायकानि भवन्तीति विधायकत्वप्रकारोऽभिहितः। तत्प्रसङ्गेन क्वाचित्कः शब्दभावना बोधोऽप्युक्तः। सम्प्रति अर्थभावनायाः शब्दभावनया सिद्ध्यन्तं विशेषमाह (५८) **तत्रेति**। **समीहितेति**। समीहितं यत्स्वर्गादि तद्भाव्यकत्वमपीति। न केवलमर्थभावनाया उक्तप्रकारेण भाव्यत्वानुभवो विधिवशात्, किन्तु तस्या दुःखात्मकयागपरिहारेण स्वर्गादिभाव्यकत्वमपि तद्बलादेवेति अपि शब्दार्थः। शब्दभावना विधिरिति पर्यायत्वं ज्ञापयन् पूर्वं शब्दभावनेति व्यवहृतमप्यर्थं विधिशब्देन निर्दिशतीति ज्ञेयम्। उपपादयति **प्रवर्तनेति**। प्रवर्तना परा प्रधानभूता स्वरूप निरूपकाकारो यस्य स प्रवर्तनापरः। **प्रवर्तनास्वरूप** इत्यर्थः। तत्र यागादौ। **स्वभाव्येति**। स्वं विधिं तस्य भाव्या सा च सा पुरुषप्रवृत्तिश्च तस्या विषयस्तस्येति। नन्वर्थभावनाया समीहितभाव्यकत्वे उपपादयितव्ये यागादेः पुरुषार्थसाधनत्वं विधिराक्षिपतीति प्रतिपादनमसङ्गतमिति चेदुच्यते। यागेन यत्साध्यं तदेव हि भावनायां भाव्यत्वेनान्वेति। तेन पुरुषार्थसाधनत्वं यागादेरित्युक्ते यागसाध्यपुरुषार्थभाव्यकत्वमर्थभावनाया इत्येवोक्तं भवतीति न दोष इति। एतदेव परिष्कारे भङ्ग्यन्तरेणोक्तमिति सुधीभिर्विभाव्यम्। केचित्तु तत्र **समीहितेत्यत्र तत्रेति** पदस्य याग

इत्येवार्थमाहुः । तत्तु न युक्तम् । अर्थ भावनाया **इवेष्टमिति** पूर्वमर्थभावनाया एवोपस्थिततत्वात् । अत एव विधेः पुरुषार्थभाव्यकत्वस्याप्यभाव इति व्यतिरेकं प्रतिपादयितुं प्रवृत्ते **लडादिस्थले तु** इत्युत्तरग्रन्थे **अर्थभावनायाः पुरुषार्थभाव्यकत्व**नियमो नास्तीत्युक्तम् न या गस्येति । **अन्यथेति**। यागादेः पुरुषाभिलषितस्वर्गादिसाधनत्वानापादनेन पुरुषप्रवृत्त्यभावे इत्यर्थः । **स्वस्य** प्रवर्तनारूपस्य विधेः । पुरुषस्य प्रवृत्त्यभावे विधेः प्रवर्तनात्वं कथं न भवतीत्यत्राह (५९) **प्रवृत्तीति । नास्तीति** । यजत इति ह्युक्ते यागं करोतीति प्रतीयते । प्रमाणान्तरानुरोधेन तु फलमस्ति न वेति प्रत्येतव्यम् । न तु यजेतेत्यत्रेव नियतं किञ्चित् फलमस्तीति गम्यत इति भावः । एवं भावनाद्वयसमाचारेऽवसिते उभयोर्भावनापदवाच्यत्वे निमित्तमाह **भावनात्वमिति । भवितुः** उत्पद्यमानस्य । प्रयोजकश्चासौ व्यापारश्च प्रयोजकव्यापारः तत्वमिति । **तत्रेति** । भावनाद्वयमध्य इत्यर्थः । **भवितुरिति** व्याख्येयपदं जायमानस्येति व्यख्यानम् । अर्थभावनायां **लक्षणसङ्गति**रित्यन्वयः ।

**नन्विति** । द्वितीयान्तत्वेन करणीभूतयागसामानाधिकरण्यस्य स्फुटमप्रतीतत्वात् नामधेयत्वेनान्वय इति समाधानस्य बुद्धौ सुखमनारोहं शङ्कमानेन अग्निहोत्रं जुहुयात् स्वर्गकाम इति वाक्यं न इहोदाहृतमिति परिष्कार एवान्यत्रोक्तम् । स्वर्गकामो यजेतेति यागस्यैव पूर्वं करणत्वेनान्वयस्य प्रतिपादितत्वात् तन्नामत्वेनोपस्थितिविशेषादपीदमेवं बोध्यम् । होमस्य ह्यग्निहोत्रमिति नाम । यागस्य तु ज्योतिष्टोम इति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्रापि दर्शपूर्णमासपदयोर्याग-समुदायवाचकत्वं प्रागेवावगतमिति । **इत्यत्रेति**। इत्यस्मिन् वाक्ये

स्वर्गकामो यजेतेति एकदेशस्येत्यर्थः । (६०) **इत्यर्थवर्णन** इति । इत्यर्थवर्णने कृते सति ज्योतिष्टोमपदस्य योऽन्वयो वक्तव्यः स कथमित्यन्वयः । विशिष्टवाक्ये एकदेशस्यार्थवर्णनानन्तरमितरस्य एकदेशस्य योऽन्वयो वर्णयितव्यः स कथमित्यर्थः । स्वर्गकामो यजेतेत्यस्यान्वय प्रकार उक्तः । ज्योतिष्टोमेनेत्यस्य कथमित्यत्र तात्पर्यम् । कथमिति क्षेपे । न भवतीत्यर्थः । **भावनेति** । भावनायां भाव्यत्वेनान्वितस्वर्गादिफलकरणस्यैव यागस्य प्रथमं भावनायां करणत्वसम्बन्धेनान्वितत्वात् भावनाकरणत्वेनाभिधानमिति ज्ञेयम् । ज्योतिष्टोमपदस्य यागवाचित्वे निमित्ताभावं शङ्कते **कथ**मिति। **तन्नामत्वं** यागनामत्वम् । ज्योतिष्टोमपदस्य तद्वाक्यविधेययागनामत्वं **कथं** केन प्रकारेण किं निमित्तीकृत्येत्यर्थः । **नेति** । निमित्तं नास्तीति नेत्यर्थः । **ज्योतींषीति** । ज्योतिरित्याख्या येषां ते । यागे उक्तनिमत्तसत्त्वे प्रमाणाभावं शङ्कते **यागस्येति** । **नेति** । न केनचिदवगम्यत इति नेत्यर्थः। प्रकरणेन सन्निहितत्वात् एतद्वाक्यस्थ एतच्छब्दः सोमयागमभिधत्ते षष्ठी स्तोमसम्बन्धं बोधयतीत्यभिप्रायेणाह **एतच्छब्दार्थस्य तत्सम्बन्धावगमा**दिति । **तत्सम्बन्धः** त्रिवृदादिस्तोमसम्बन्धः । आपातप्रतीत्यनुरोधेनेत्थं वाक्यावतरणादिकं कृतम् वस्तुतस्तु तत्प्रख्यशास्त्ररूपनामधेयप्रमाणनिरूपणतात्पर्येण **कथं तन्नामत्व** मित्यादि प्रवृत्तमिति परिष्कारे स्थितम्।

**एवमिति** । ज्योतिष्टोमपदवत् **तत्र** **तत्रा**ग्निहोत्रश्येनादौ नामत्वं बोध्यमित्यन्वयः । अथवा **एवमिति तत्प्रख्या**दिभिरित्यत्र तत्तत्प्रख्येऽन्वेति । **एवम्** उक्तविधं यत् तत्प्रख्यं तदादिभिरिति । **शास्त्रं** मीमांसा । ननु के ते तत्प्रख्यादयो हेतव इत्यत्राह (६१) **शास्त्रे** हीति ।

**तत्प्रख्येति**। तत्प्रख्यञ्च तद्व्यपदेशश्च यौगिकश्च वाक्यभेदश्च तैरिति। तदपि सर्वं भवता सम्प्रति निरूपणीयमिति शिष्यैः प्रार्थितो निरूप्यत इति प्रतिजानीते **तथाहीति**। अग्निहोत्रपदस्य नामत्वं साधनीयमिति मन्वान आह **अग्निहोत्रशब्देति**। नामधेयत्वसिद्धान्तप्रतिभटस्य पूर्वपक्षिणः सम्मतं गुणविधानं न सम्भवतीत्याह **अग्निदेवतेत्यादिना**। जुहोतीत्यनेन होमे विहिते अग्निहोत्रमिति पदान्तरस्य होमाङ्गतया विधेयदेवतासमर्पकत्वं वा नामत्वं वा वक्तव्यम्। तत्र विधेयतया देवतारूपगुणसमर्पकत्वं न सम्भवतीत्यर्थः। तत्र हेतुमाह **मन्त्रेण देवतायाः प्राप्तत्वादिति**। **अप्राप्ते शास्त्रमर्थवदिति** न्यायेन प्रमाणान्तरेण विहिताया देवताया अग्निहोत्रमित्यनेन पुनर्विधिर्न भवतीत्यर्थः। नच मन्त्राणां प्रयोगसमवेतार्थ-स्मारकत्वेन प्रयोजनवत्वं न विधायकत्वमिति पूर्वमुक्तत्वात् तेन देवताप्राप्त्यभिधानमयुक्तमिति वाच्यम्। मन्त्रप्रकाश्यदेवताया होमाङ्गत्वाभावे मन्त्रस्य होमाङ्गत्वं न युज्यते। तस्य वा तत्सम्बन्धिनो वा कस्यचित्प्रकाशनेनैव हि तदङ्गत्वं निर्वाह्यम्। तेन मन्त्रस्य होमाङ्गत्व-निर्वाहाय तत्प्रकाश्यदेवताया होमाङ्गत्वमावश्यकमिति सामर्थ्यात् प्राप्ता देवता मन्त्रेण प्राप्तेत्युच्यत इति। एतदभिप्रायेणैव ह्याहुः।

*तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः।*
*देवताया विधिस्तत्र दुर्बलं तु परं परम्॥* इति

ननु मन्त्रस्य होमाङ्गत्वासिद्धेस्तेन देवताप्राप्तिरिति न युक्तम्। न हि लिङ्गात् बर्हिमन्त्रस्येव प्रकृतेऽङ्गत्वं सिद्ध्यति। बर्हिर्दामीति बर्हिर्लवनप्रकाशकत्वात् तत्र तदङ्गत्वं युक्तम्। नहि तद्वत्

होमप्रकाशकत्वमिहास्ति इत्यत्रोक्तम् **इति वाक्यविहितेति**। इति वाक्येन अग्निहोत्रं जुहोतीति वाक्याविहितहोमोद्देशेन विहितो यः अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रः तेनेत्यर्थः। लिङ्गाभावेऽपि वाक्येनाङ्गत्वमवगम्यत इति भावः। **तत्प्रख्यञ्चान्यशास्त्रम्** इति सूत्रम्। तत्र तत्प्रख्यमिति तच्छब्देन नामधेयत्वप्रतिपक्षे विधातुमिष्टो यो गुणः स गृह्यते। स च प्रकृते अग्निः। तस्य प्रख्यं प्रख्यापकमिति व्याचक्षाण आह **अग्नीति**। प्रख्यापकमित्यस्यापि व्याख्यानार्थमाह **अग्निप्रापक**मिति। सूत्रस्थमन्यशास्त्रमितीदमाह **शास्त्रान्तरमिति**। **इत्यादिकमिति**। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्ररूपमित्यर्थः। (६२) **निमित्तीकृत्येति**। निमित्तीकृत्य नामधेयत्वं भवतीत्यन्वयः।

ननु उणादिचतुर्थपादस्थेन **हुयामाश्रुभसिभ्यस्त्रन्** इति सूत्रेण हुधातोस्त्रन्प्रत्ययो विहितः। स कर्मणि वा भावे वा। भावार्थकत्वे होत्रं होमः तत्राग्नेर्होत्रम् अग्नौ होत्रम् इत्यग्निहोत्रपदस्य द्वेधा तत्पुरुषसमासः सम्भवति। तयोराद्यः सम्बन्धसामान्यावगमेऽपि देवतात्वसम्बन्धानवगमादनुपपन्नः। **सप्तमीशौण्डैरिति** सूत्रानुरोधेन कर्तव्यस्सप्तमी तत्पुरुषस्तु शौण्डादिहणे होत्रशब्दस्यापाठान्नोपपद्यते। अग्नये होत्रमिति चतुर्थीतत्पुरुषः पुनः यूपायदारु यूपदारु इतिवत् प्रकृतिविकृतिभावाभावात् न शङ्कामर्हति। अथ यद्यग्नौ होत्रं होमः प्रक्षेपः यस्मिन् कर्मणि तदग्निहोत्रमिति बहुव्रीहिरङ्गीक्रियते तदा यदाहवनीये जुहोतीत्यनेन सर्वेष्वपि कर्मसु अधिकरणत्वेनाहवनीयस्य प्राप्तत्वेन अग्निहोत्रं जुहोति इति वाक्यविहितहोममात्रस्येदं नामधेयमिति न युज्यते। किञ्च अग्निर्ज्योतिरिति मन्त्रप्राप्ताग्निसम्बन्धं निमित्तीकृत्य इत्येतदनुपपन्नं स्यात्। अग्नेरधिकरणता-

सम्बन्धो हि अत्राश्रीयते न देवतासम्बन्धः । अथ कर्मव्युत्पत्तिराश्रीयते होत्रं हूयमानं द्रव्यमिति ।

ततश्च अग्नये होत्रं यस्मिन् कर्मणि तदग्निहोत्रमिति चतुर्थीबहुव्रीह्यङ्गीकारे न काचिदनुपपत्तिरिति चेत् व्यधिकरणबहुव्रीहेः व्याकरणाननुशिष्टत्वमेव दोषः । सप्तमीबहुव्रीहिः खलु कथञ्चित् सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकबलात् साध्यते । न ततः चतुर्थीबहुव्रीहिसिद्धिः । तस्मात् कथमपि अग्निहोत्रमिति कर्मनामेति वक्तुं न शक्यमित्याक्षेपे सप्तमीविशेषणे बहुव्रीहावित्यस्य सामान्येन व्यधिकरणबहुव्रीहिज्ञापकत्वमाश्रीयते । न तु विशिष्य सप्तम्यन्तपूर्वपद-बहुव्रीहिमात्रज्ञापकत्वम् । जन्माद्युत्तरपद पञ्चम्यन्त पूर्वपदबहुव्रीहेः सच्छास्त्रजन्मा हि विवेकलाभ इत्यादौ बहुळमुपलम्भात् । तेन चतुर्थ्यन्तबहुव्रीहिरपि ज्ञापकसिद्ध एवेति प्रकृते स एवाश्रीयत इति न कश्चिद्दोष इत्यन्यत्र समाहितम् । तदाह **अग्नय** इति । **होत्रं** हूयमानं द्रव्यमित्युक्तम् । तद्विवरणार्थमुक्तस्य **होम** इत्यस्यापि **अर्तिस्तु-सुहुसृधृक्षिक्षु भायावापदियक्षिनीभ्यो मन्** इत्युणादिसूत्रेणैव प्रथमपादस्थेन विहितं मन्प्रत्ययं कर्मार्थकमङ्गीकृत्य द्रव्यपरत्वं द्रष्टव्यम् । अन्यथा होमस्यैवान्यपदार्थत्वात् तस्यैव औत्तरपदार्थत्वेऽनन्वयापत्तेः । अथवाऽस्य होमपदस्य प्रक्षेपमात्रं त्यागमात्रं वाऽर्थः । उद्देशत्यागप्रक्षेपसमुदायस्तु अन्यपदार्थ इति नानुपपत्तिः । एवं सति होत्रपदस्यापि स एवार्थो भावे त्रन्प्रत्ययमङ्गीकृत्य वक्तव्यः । प्राचां तु नैवं व्याख्यानं दृश्यत इत्यलम् ।

ननु संज्ञायास्सर्वत्र संज्ञिसमानाधिकरण्येन प्रयोगो दृष्टः । प्रकृते

तदभावात् अग्निहोत्रपदस्य नामधेयत्वमसम्भवीत्याशङ्कां परिहरति **नचेति**। ननु तृतीयाऽपि न भवितुमर्हति । विशेष्यपदोत्तरं या विभक्तिः तया हि नामधेयपदोत्तरं भवितव्यम् । विशेष्यवाचकधातोः परतस्तु सुब् विभक्तिर्न काचित् । तेन तदनुसारेण विभक्त्युत्पत्तिर्नामधेयपदोत्तरं दुर्वचेत्यत्रोक्तं **करणत्वादित्यन्तम्** । **अयमाशयः** । जुहोतीत्यत्र हुधातुना होमकरणत्वं लक्ष्यते । तस्य निरूपकतासम्बन्धेन भावनायामन्वयः । न तु होमस्यैव करणतासम्बन्धेन भावनायामन्वय इति भ्रमितव्यम् । ज्योतिष्टोमेनेत्यादि तृतीयान्तस्थले सामानाधिकरण्यानुपपत्तेः । तेन होमेन इत्यर्थस्यैव हुधातुना प्रतिपादितत्वात् तत्सामानाधिकरण्याय अग्निहोत्रमिति नामधेयपदस्य तृतीयान्तत्व-मावश्यकमुपपन्नञ्चेति । अन्वयानुपपत्यैव लक्षणाऽङ्गीक्रियत इत्याह **द्वितीयाया एवेति** । ननु लक्षणया करणत्वं प्रतिपादयितुं द्वितीयावत् विभक्त्यन्तरमपि शक्नोति । तत्र विभक्त्यन्तरपरिहारेण द्वितीयाश्रवणस्य कथमुपपत्तिः । न च विनिगमनाविरहेण यस्याः कस्याश्चिद्विभक्तेरावश्यकत्वे द्वितीयाऽपि नानुपपन्नेति वाच्यम् । प्रथमाऽतिक्रमे कारणभावेन प्रथमाया एव युक्तत्वात् । करणत्वशक्ततृतीयापरिहारेण द्वितीयाश्रवणं कथमिति तु न वयं पृच्छामः । अपौरुषेये वेदे दृष्टानुविधानमात्रस्य शक्यत्वेन एवमादेरचोद्यत्वात् । अत एव ह्याहुः **गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् । वेद्रो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्** इति । अत्राह **अर्थात्प्राप्तेति** । अर्थात् प्राप्तं यत् होमगतं साध्यत्वं तदनुवादकत्वेनेति । कथमर्थात् प्राप्तिरित्यत्रोक्तम् **नासाधित**मिति । **असाधितम्** अनिष्पादितम् । अनिष्पन्नोह्यसन् भवेत् । नचासता कारणेन कार्यमुत्पत्तुमर्हति । न च

कार्यानुत्पादे करणत्वं युज्यत इति । **अयं प्रघट्टकार्थः** । होमादेः फलान्तरनिरूपितकरणत्ववत् क्रियारूपत्वेन साधनान्तरनिरूपितं साध्यत्वमप्यस्ति। तत्र स्वतन्त्रो भगवान् वेदः क्वचित् साक्षादेव फलकरणत्वं प्रतिपादयति यथा ज्योतिष्टोमेनेत्यादौ । क्वचित्पुनः होमादिगतसाध्यत्व-प्रतिपादनद्वारा तत्समानाधिकरणं करणत्वं प्रतिपादयति । सोऽयं प्रकारः अग्निहोत्रं जुहोतीत्यत्र वेदितव्य इति । तत्प्रख्यात् नामधेयत्वं निगमयति **इतीति**। तत्प्रख्यस्य न्यायस्तेन । **अत्र** अग्निहोत्रमित्यत्र ।

**तद्व्यपदेशन्यायादिति** । तेन व्यपदेशः तद्व्यपदेशः स यत्रास्ति तत् शास्त्रं तद्व्यपदेशं तद्यत्रास्ति तदपि नामधेयं स्यादित्यर्थकेन '**तद्व्यपदेशं च**' इति सूत्रेण निरूपितो यो न्यायस्तस्मादित्यर्थः । अस्य नामधेयत्वसिद्धान्तस्य सम्भावितं पूर्वपक्षं निरस्यति **नन्विति** । **श्येनेति** । श्येनपक्षिरूपस्य गुणस्य विधिः । गुणविधित्वाभावे हेतुं तदव्यपदेशमाह **यथेति** । **उपमानेति** । उपमानञ्चोपमेयञ्च उपमानोपमेये तयोर्व्यपदेशः भेदेन कीर्तनं तस्यानुपपत्तिः प्रसज्येतेत्यर्थः । अनुपपत्तिमुपपादयिष्यन् स्वपक्षे उपपत्तिमाह । **श्येनपक्षीति** । सामर्थ्यलभ्यं कर्मकारकमध्याहृत्य योजयति (६३) **पक्ष्यन्तरमिति** । श्येनेनाभिचरन् यजेतेति विधिवाक्ये यागमात्रविधाने सति तत्प्रशंसापरार्थवादस्थस्य अयमिति पदस्य स एवार्थो वक्तव्य इत्यभिप्रायेणाह **अयमपि श्येननामक** इति । **भ्रातृव्यमित्यस्य** व्याख्यानं **शत्रुमिति** । **इतीति** । इत्यर्थकस्सन् । अयं व्यपदेशः श्येनेनेति श्येनपदस्य कार्मनामत्वपक्ष एव इत्यर्थकस्सन्नुपपन्नो भवतीत्यन्वयोऽत्र द्रष्टव्यः । यथाश्रुते हि इत्येवं रूपो व्यपदेशः कर्मनामत्व पक्ष एव युज्यते न गुणविधित्वपक्ष इत्यर्थो भवति । स च नोपपद्यते । गुणविधित्वपक्षे

व्यपदेशस्यैवमर्थकत्वस्याप्रसक्तत्वात् । पक्षान्तरेऽनुपपत्ति प्रदर्शनोपयोगितया वाक्यार्थं शिक्षयति **यागाङ्गतयेति** । यथा श्येन एवमयमिति श्येनपदार्थस्यायं पदार्थस्य च क्रमेणोपमानत्वम् उपमेयत्वञ्च प्रतीयते। तत्र श्येनपदस्य प्रसिद्धः पक्षी अर्थ इति नास्ति सन्देहः । अयम्पदस्य तु विधिवाक्ये यस्य विधिः स एवार्थो वक्तव्यः। विधेयस्य हि प्रशंसा वक्तव्येति। तद्यदि श्येनेनाभिचरन् यजेतेति यागमात्रविधिस्तर्हि अयमित्यस्य याग इत्यर्थ इत्युक्तम्। यदा तु गुणमात्रविधानं तदा स एवार्थवादे अयमित्यस्यार्थः। तथा सत्येवं वाक्यार्थो भवति। यथा खलु श्येनः पक्ष्यन्तरं निपत्य गृह्णाति तथा श्येनः शत्रुं निपत्य गृह्णातीति। तदिदमनुपपन्नमित्याह **सचेति** । भिन्नयोरेवह्युपमा। हंसीव कृष्ण ते कीर्तिरिति। श्येन इव श्येन इति तु न भवतीति । तद्व्यपदेशन्यायसिद्धं नामधेयत्वं निगमयति **तस्मादिति** । **अभिचरन्निति** व्याख्येयं शत्रुवधकाम इति व्याख्यानम्। स्वर्गकामपदात् स्वर्गस्येवात्रापि पुरुषवाचकस्यापि पदस्य पुरुष-विशेषणीभूतफलसमर्पण एव तात्पर्यमिति मत्वोक्तम् अभिचारमिति।

नन्वयं श्येनयागोऽधर्म इति न शक्यं वक्तुम् । वेदबोधितेष्टसाधनता कत्वात् । निषेधे सति हि वेदबोधितानिष्टसाधनताकत्वेनाधर्मत्वात् धर्मत्वं न भवेत् । श्येनेनाभिचरन् यजेतेति विधानात्तु ज्योतिष्टोमादिवत् धर्मत्वमेव। न च न हिंस्यात् सर्वा भूतानीति परमरणानुकूलव्यापाररूपहिंसायाः शास्त्रान्तरेण निषिद्धत्वात् श्येनयागस्यापि अभिचारद्वारा वैरिमरणानुकूलव्यापारत्वात्निषिद्धत्वमस्त्येवेति वाच्यम् । यदग्नीषोमीयं पशुमालभत इति वाक्यविहितदैक्षपशुयागस्यापि तेन शास्त्रेण निषिद्धत्वापत्तेः तस्य सामान्य प्रवृत्तस्य निषेधशास्त्रस्य रागप्राप्तहिंसा-

विषयकत्वेनापि चरितार्थतया विहितनिरवकाश श्येनादिविषयकत्वा-सम्भवात्। एवं धर्मत्वे सति ज्योतिष्टोमादिवत् श्येनस्यापि निष्कम्पमनुष्ठातुं युक्तत्वात् तत्रास्तिकानां गर्हणमप्रवृत्तिश्च निर्मूलम् । न च श्येनयागस्य धर्मत्वेऽपि तत्फलस्याभिचारस्य वैरिमरणानुकूलव्यापारतया हिंसारूपस्य न हिंस्यादिति शास्त्रनिषिद्धतया अधर्मत्वेन तत्साधनस्यापि श्येनस्य सद्वारकस्यापि अश्रेयस्करत्वस्थ दुष्परिहरत्वेन परस्योत्सादनार्थं यत् तत्तामसमुदाहृतमिति तामसधर्मत्वात् तद्युक्तमेवेति वाच्यम्। दैक्षश्येनादीनामिवाभिचारस्य वेदेनैवोक्तत्वात् तस्य निषेधशास्त्रस्य एतदभिचारातिरिक्तविषयकत्वस्यापि कल्पनीयत्वादिति शङ्कते **नन्विति** । **आभिचारिके** अभिचारफलके **कर्मणि** श्येनयागे। अस्ति परलोक इति मन्तारो वैदिकाः आस्तिकाः । दैक्षादेरिवाभिचारस्य निषेधाविषयत्वं न भवति तद्वत् विधिविहितत्वाभावादित्याह **वेदोक्तोऽपीति** । वेदोक्तत्वं वेदघटकपदजनितोपस्थितिविषयत्वम् । वेदविहितत्वं वैदिकविधि-विषयत्वम्। विहितत्वाभावे हेतुमाह **फलत्वादिति**। हेतुत्वमुपपादयति **फलमिति**। कर्तव्यताबोधनं हि विधानं कर्तव्यता च करणस्य न फलस्य। ज्योतिष्टोमादिरूपं साधनमेव हि पुरुषेण कर्तव्यं न स्वर्गादिफलम्। पुरुषेण साधनेऽनुष्ठिते फलं स्वयमुत्पद्यते । तेन कर्तव्यताबोधकविधिविषयत्व रूपविषेयत्वं फलस्य न भवतीति भावः। अत्र विस्तरो ग्रन्थान्तरेष्वनुसन्धेय इत्याशयेनाह (६४) **इति सिद्धान्तादिति** । चतुर्थाध्यायप्रथमाधिकरणे द्वितीयवर्णके इदम् । इति सिद्धान्तात् प्रकृतेऽभिचारस्य फलत्वात् वेदविहितत्वं न भवतीत्यन्वयः । अविहितत्वमस्तु किं तेनेत्यत्राह **अत** इति। कर्मण एव विधेयत्वेनेत्यर्थः । **अविहितत्वेनेति**। अविहितत्वेना-

भिचारस्य लौकिकशास्त्र मारणतुल्यत्वात् न हिंस्यादिति निषेधशास्त्र-विषयत्वेन नरकजनकपापरूपप्रत्यवायजनकत्वं भवति। एवञ्च बलवदनिष्टजनकाभिचारफलकत्वात् आभिचारिके कर्मणि आस्तिकानां प्रवृत्तिर्न भवतीति भावः।

**पशुरूपफलायेति**। अस्य **विधित्सितस्ये**त्यत्रान्वयः। विधातुमिष्टो विधित्सितः तस्य। अत्र सम्भावितं पूर्वपक्षं निरस्यति **नत्विति**। अत्र हेतुमाह **दध्यादिवदिति**। (६५) **अप्रसिद्धत्वादिति**। रूढ्यभावादित्यर्थः। दधि सोमादिपदैः रूढ्या द्रव्यविशेषाणामुप-स्थितत्वात् तद्विधायकत्वं दध्ना जुहोतीत्यादावाश्रितम्। उद्भित्पदेन तु तथा कस्यचिदनुपस्थित्या गुण विधायकत्वं न भवतीति भावः। ननु कर्मविशेषेऽपि नास्य पदस्य प्रसिद्धिरस्तीति तुल्यमित्यत्राह। **यागेत्विति**। **योगवशेन** अवयवशक्तिवशेन **वृत्तिसम्भवात्** प्रतिपादकत्वसम्भवात्। तथाच यागे यौगिकत्वादेव उद्भित्पदं नामधेयं भवतीति भावः। यौगिकत्वे गुणप्रतिपादकत्वमपि सम्भवतीति गुणविधित्वमेवास्तु इत्याक्षिपति **नन्विति**। **खनित्रमिति**। न च काष्ठेन अयसाच निर्मितं खनित्रादिकमग्नौ प्रक्षिप्य यागे क्रियमाणे कथं देवताप्रीतिर्जायेतेति वाच्यम्। तथा शास्त्रार्थे सति तथा भवतीति कल्पनात्। शास्त्रस्यानतिशङ्क्यत्वात्। किञ्चिदनुपपन्नं शास्त्रार्थस्तु कृतो भवतीति। **विरुद्धेति**। विरुद्धं त्रिकद्वयं विरुद्धयो-स्त्रिकयोर्द्वयं वा तस्य समावेशः इत्याख्या नाम यस्य तस्य दोषस्य प्रसङ्गात्। एकपदार्थवृत्तित्वेन एकवाक्यजनितबोधविषयत्वायोग्यत्वं विरुद्धत्वम्। दोषप्रसङ्गमुपपाद्य दर्शयति **तथाहीति**। **अप्राप्तस्येति**। न च पूर्वं **यथाकथञ्चित् प्राप्तं यागमुद्दिश्य तदङ्गतया गुणविधि**रिति सोमेन

यजेतेति मानान्तरप्राप्तयागानुवादेन गुणविधिरित्येव पूर्वपक्षस्य प्राप्तत्वात् अत्र **अप्राप्तत्वेनानुवादासम्भवात् विधेयत्व**प्रतिपादनमयुक्तमिति वाच्यम्। सोमयागमुद्दिश्य अत्र गुणविधानं दुर्वचम्। उत्पत्तिवाक्यविहित-प्रबलसोमावरुद्धत्वात् तत्र गुणान्तरस्य विधातुमशक्यत्वात्। पशुकाम इति फलपदानर्थक्याच्च। अथ पशुकामस्य योऽसौ यागः स उद्भिदेति प्रयोगविशेषे गुणविधानात् न दोष इति चेत् यत् पशुकामो यजेत तदुद्भिदेति भिन्नपदोपात्तत्वात् उद्देश्यविशेषणस्य वाक्यभेद इति कर्मणोऽप्यत्र विधानमावश्यकमिति ग्रन्थकाराशयात्। **पशुकर्मकेति**। पशवः कर्म भाव्यं यस्यां सा पशुकर्मिका सा च सा भावना च तस्यामिति। **द्वितीयं त्रिकमिति**। वक्तव्यं स्यादिति शेषः। परस्परविरुद्धमिति। एकपदार्थवृत्तित्वेन एकवाक्यजनितबोधविषयत्वायोग्यत्वं विरुद्धत्वमित्युक्तम्। तदिदमुपपादयन्त आहुः न खलु यस्मिन्नेव क्षणे यागं करणात्मनाऽव-बुध्यामहे तस्मिन्नेव कर्मात्मनाऽवबोद्धुमीश्महे इति स्वानुभवसिद्धमेतदिति। यद्यज्ञातस्ततो विधिः यदि ज्ञातस्ततोऽनुवादः। न च ज्ञातोऽज्ञातश्च युगपत्सम्भवतीति च। गुणविधित्वं वदन्तं पूर्वपक्षिणमेव तद्दोषपरिहारेण समाधानान्तरं वदन्तं निराकरोति (६६) **नचेति**। **विनैवेति**। अस्य **सोमरूपगुणविधिरित्यत्रान्वयः**। **सोमविशिष्टयागविधानादिति**। प्रथमं विशिष्टविधाने सति अर्थात् विशेषणविधिकल्पनात् सोमस्य यथा विशिष्टविधानप्रयोज्यो विधिर्भवतीत्यर्थः। **अत्रोद्भिद्गुणेति**। प्रथममुद्भिद्वता यागेन पशून्भावयेदिति विशिष्टविधानं ततो विशेषणविधिकल्पनया उद्भिद्गुणस्यापि विधिरिति भावः। **गत्यन्तरेति**। मत्वर्थलक्षणाश्रयणा-पेक्षयाऽन्या गतिर्गत्यन्तरं तस्याभावात्। विशिष्टेति। विशिष्टस्य सोमवतो

यागस्य विधिर्विशिष्टविधिः तदङ्गीकारात्। अयमत्र समाधानग्रन्थार्थः। उद्भित्पदस्य गुणे प्रसिद्धिविरहात् योगेन गुणो वा कर्म वा तत्प्रतिपाद्यमिति सन्देहे गुणवाचित्वाङ्गीकारे मत्वर्थलक्षणा भवतीति गौरवेण तदनापादक-लघुभूतकर्मनामत्वपक्षाङ्गीकार एवोचितः, सोमेनेत्यत्र तु सोमपदस्य लताविशेषे प्रसिद्धत्वात् कर्मवाचित्वायोगेन मत्वर्थलक्षणा दुष्परिहरेति वैषम्यमिति। उपसंहरति **तस्मादिति**। तद्वाच्यस्य गुणविशेषस्याप्रसिद्धत्वात् योगमाश्रित्य गुणविधाने विरुद्धत्रिकद्वयस्य मत्वर्थलक्षणाया वा प्रसङ्गाच्चेत्यर्थः।

***प्राधान्यमनुवाद्यत्वमुद्देश्यत्वमिति त्रिकम्।***
***गुणभावो विधेयत्वमुपादेयत्वमित्यपि॥***

**प्राजापत्येति**। प्रजापतिदेवताको यागः प्राजापत्यः तस्य नामधेयम्। नन्वस्मिन्वाक्ये केवलं यागः श्रूयते यजेतेति न तु स प्रजापति-देवताक इति। तत् कथं पूर्ववत् विधित्सितस्य यागस्य नामधेयमिति वक्तव्ये प्राजापत्यनामधेयमित्युक्तमित्याशङ्कायां वाक्यान्तरेण प्रजापतिदेवताको यागो विहितः तस्येदं नामधेयमिति समाधानमभिप्रेत्य तदुत्पत्तिवाक्य-मुदाहृत्य दर्शयति **दधीति**। **इत्यत्रेति यागो विधियत** इत्यनेनान्वीयते। नन्वत्र यागवाचकपदं न श्रूयत इत्याशङ्कायां पूर्वोक्तरीत्या यागानुमानं द्रष्टव्यमित्यभिप्रेत्याह **य** इत्यादि। (६७) **श्रुत इति**। अवगत इत्यर्थः। यागानुमापको द्रव्यदेवतासम्बन्धः कथमत्रावगम्यत इत्यत्र द्रव्यवाचकस्य तत्संसृष्टमिति पदस्य देवतावाचकस्य प्राजापत्यमित्यस्य च आग्नेयाष्टा-कपालपदयोरिव सामानाधिकरण्यात् तदवगम इत्यभिप्रायेणाह

**तत्संसृष्टमिति** । संसृज्यते इति संसृष्टम् । गतं तिरश्चीनमितिवत् भावे क्तप्रत्ययः । संसर्ग इत्युक्तं भवति । संसर्ग इति च प्रकृते समुदायो विवक्षितः। तेषां संसृष्टं तत्संसृष्टं दद्ध्यादिसमुदाय इत्यर्थः । एवमर्थकत्वाभिप्रायेणैव इदं पदं विवृण्वता ग्रन्थकारेण दद्ध्यादिद्रव्यषट्कस्येत्युक्तमिति ध्येयम् । एवं दद्ध्यादि द्रव्यसमुदाये प्रजापतिदेवतासम्बन्धश्रवणात् समुदायकरणक एक एवात्र यागो विधीयते नतु प्रत्येकं दध्यादिकरणकाः षट् यागा इति ग्रन्थकारो मन्यते । अत्राहुः तेषां संसृष्टमिति विग्रहो न युज्यते पूर्वपदलक्षणापत्तेः । राजपुरुष इतिवत् । तत् संसृष्टम् इति पृथक्पदत्वेन पदपाठिभिरध्येतृभिः पाठाच्च । तस्मात्तानि संसृष्टानि प्राजापत्यानीत्येवात्र श्रुतं वेदितव्यम् । तथाच सप्तदश प्राजापत्यान् पशूनालभेतेत्यत्रेव अत्रापि द्रव्यदेवतासम्बन्धानामनेकत्वात् यागानेकत्वमेवेति । एवं सति तदादेरेकवचनान्तत्वोपपत्तिः परिष्कार एवोक्ता । अस्मिन्पक्षे संसृष्टपदस्य प्रयोजनं चिन्त्यम् । **फलसम्बन्धविधायकमिति** । तद्बोधकमित्यर्थः । **तत्रेति** । चित्रया यजेतेति वाक्य इत्यर्थः । विहितस्य यागस्येत्यत्रापि सम्बध्यते । एवं वाक्यान्तरविहितस्य प्राजापत्ययागस्यैव चित्रावाक्ये फलसम्बन्धार्थं यजेतेति यजिधातुना उपात्तत्वात् तत्समानाधिकरणं चित्रापदं नामधेयमिति युक्तमेवेत्युपसंहरन्नेव चित्रापदस्य तत्र प्रवृत्तिनिमित्तमाह **तस्येति** । दधिमध्वित्यादि वाक्योत्पन्नस्यास्मिन् वाक्ये फलसम्बन्धार्थं यजिनोपात्तस्येत्यर्थः । एवं सिद्धान्तमुक्त्वाऽत्र सम्भावितं पूर्वपक्षं निरस्यति **नत्विति** । **यजेतेति** । यजेतेत्यनेनेत्यर्थः । **चित्रात्वेति** । चित्रात्वस्त्रीत्वरूपयोर्गुणयोर्द्वयं तस्य विधानमिति । हेतुमाह **मानेति** । **तत्र** मानान्तरप्राप्ते कर्मणि । सप्तम्या उद्देश्यत्वमर्थः । अस्यार्थस्य मानान्तरप्राप्तं

कर्मोद्दिश्य इत्यनेनैवोक्तत्वादिदं पुनरुक्तमिति परिष्कारे सम्पातायातमित्युक्तम् । ननु यद्यनेकगुणविधाने वाक्यभेददोषो भवति कथं यदाग्नेय इतिवाक्ये द्रव्यदेवतादीनामनेकेषां गुणानां विधानमिति शङ्कायां न तत्र यागस्योद्देश्यत्वेन अन्वयमङ्गीकृत्य तत्रानेकगुणविधानमिष्यते । किन्त्वनेकगुणविशिष्टस्यैकस्यैव यागस्य विधानम् । पश्चादार्थिकैर्विधिभिः गुणविधानमिति न श्रूयमाणस्य वाक्यस्य भेदो भवति । अतएव प्राप्ते कर्मणीत्युक्तम् । प्राप्ते इति हि भूतकालवाचि क्तप्रत्ययेन वाक्यान्तरविहिते इत्यर्थो भवति । तेन यत्रानेकगुणविधाने तदङ्गिभूतं कर्मापि विधीयते तत्र सर्वगुणविशिष्टस्यैकस्य कर्मणो विधानात् न वाक्यभेददोषप्रसक्तिः । इति समाधानाभिप्रायेण प्रवृत्तं प्राप्ते कर्मणीति श्लोकस्य उत्तरार्धं व्याचक्षाण आह । (६८)**मानान्तरेति** । **एकदैव** एकस्मिन् काल एव । एकबुद्धिग्राह्यतया एककालवृत्तित्वात् एकस्मिन् वाक्य एवेत्यर्थः । वाक्यभेदं विनेत्यत्र तात्पर्यम् । **अष्टेति** । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः । सचासौ पुरोडाशश्च सचामावास्या च पौर्णमासी च । आदिनाऽग्निर्देवता गृह्यते। एतदादयोऽनेके गुणास्तैर्विशिष्ट इति । ननु यागवाचकपदाभावात् यदाग्नेय इति गुणविशिष्टैकयागविधानमिति न वक्तुं शक्यमित्यत्र पूर्वोक्तमेव तस्यानुमानलभ्यत्वं स्मारयति **द्रव्येति** । अनेकगुणविधायकवाक्ये उपात्तस्य कर्मणो मानान्तराप्राप्तत्वे एवं वाक्यभेदो न भवतीति सिद्धान्तात् 'चित्रये'त्यत्र मानान्तरप्राप्तं कर्मोद्दिश्यानेकगुणविधाने वाक्यभेदप्रसङ्गोऽस्तीति पूर्वेणान्वयः । एवं व्याख्येयतया अभिप्रेतमुत्तरार्धम् एवोदाहरति **तदुक्तमिति** । **बहवो** गुणाः कर्म च । **एकयत्नत** इति । एकयत्नप्रयोज्येनैकेन वाक्येनेत्यर्थः ।

**पशुद्रव्येति**। लिङ्गं च सङ्ख्या च लिङ्गसङ्ख्ये। **तत्** पशुद्रव्यं गते तद्गते। ते च ते लिङ्गसङ्ख्ये च। पशुद्रव्यं च तद्गतलिङ्गसङ्ख्ये च पशुद्रव्य तद्गतलिङ्गसङ्ख्यास्तद्रूपाणां त्रयाणामिति। गुणानामिति शेषः। **विधिरिति**। यागभाव्यका एकपुंपशुकरणिकाऽर्थभावना शब्दभावनाविषय इति तत्र बोधादिति द्रष्टव्यम्। **अत्रापि** चित्रावाक्येऽपि। **एकेति**। एकेन चित्रयेतिपदेन उपात्ताभ्यां चित्रत्वस्त्रीत्वाभ्यां विशेषितस्य पशुद्रव्यरूपस्य कारकस्य। यद्वा एकपदोपात्तं यत् चित्रत्वस्त्रीत्वविशेषितं पशुद्रव्यकारकं तस्येति। अत्रापि यागभाव्यका चित्रवर्णस्त्रीपशुकरणिका भावना विधिविषय इति बोधो द्रष्टव्यः। (६९) **अतएवेति**। पशुविशेषणतया सङ्ख्याया विधानादेवेत्यर्थः। **तत्र** पशुना यजेतेत्यत्र। **एकेनैवेति**। न तु द्वाभ्यां बहुभिर्वा इत्यर्थः। नन्वस्त्वेकत्वसङ्ख्या पशुविशेषणम्। तेनानेकपशुभिरनुष्ठाने पशुविशेषणस्यैकत्वस्याभावेऽपि यागे पशुकरणकत्वस्याबाधात् एकेनैव यष्टव्यमिति निर्बन्धे न प्रमाणमित्याशङ्कायामुक्तं यज्ञाङ्गतया विवक्षतमिति। व्रीहीन् प्रोक्षतीत्यत्र यथा प्रोक्षणस्य प्रथमं द्रव्याङ्गत्वे बुद्धे पश्चादानर्थक्य-परिहाराय द्रव्यद्वारापूर्वाङ्गत्वमपि भवति तद्वदेकत्वस्य पशुपरिच्छेदद्वारा यागापूर्वसाधनत्वं भवतीति पशुपरिच्छेदकैकत्वाभावे तन्नियमापूर्वानुत्पत्तौ फलापूर्वजननोपयोगिनी योग्यता नोत्पद्येतेति भावः।

*आकाङ्क्षाया अभावेन विधानस्याप्यशक्तितः।*
*अविवक्षां ग्रहैकत्वे कथयिष्यति तत्र तु॥*

*प्रतिप्रधानमावृत्तिन्यायादेव प्रतिग्रहम्।*
*सम्मार्जनस्य सिद्धत्वादाकाङ्क्षाया न सम्भवः*

*इति वक्तुं प्रथमतो या ग्रहस्याप्रधानता ॥*
*सम्मार्गस्यापि गुणता तद्‌द्वयं प्रतिपाद्यते ॥*

ग्रहमिति । द्वयोरेकस्य प्राधान्ये सिद्धे इतरस्य गुणत्वमर्थ-सिद्धमित्यभिप्रेत्याह **सम्मार्गस्त्विति** । **प्रतिप्रधानमिति** । अत्रोपक्रमे एवं सतीत्यध्याहर्तव्यम् । ननु यावानश्रुतकल्पने दोषः तावान् श्रुतस्य परित्यागे इति कथं श्रूयमाणमेकत्वमुपेक्षितव्यमित्युच्यते इति पूर्वपक्षिणः शङ्कां द्योतयन्नाह (७०) **श्रूयमाणमपीति** । न्यायेनैव सम्मार्जनस्य सर्वग्रह-गतत्वलाभात् बहुवचन प्रयोगनिर्बन्धविरहे कर्मत्वार्थमुपादीयमानायां द्वितीयाविभक्तौ नान्तरीयकं किञ्चिद्वचनं भवतीति अन्यथासिद्धत्वादेकत्व-श्रवणं विवक्षायामप्रयोजक मित्याशयः । एवमाकाङ्क्षाया असम्भव उक्तः विधानस्याप्यशक्तिमाशङ्कापूर्वकमाह **यदीति** । उद्देश्यविशेषणमविवक्षितम् इति न्यायमपवदति । **उद्देश्यगतमपीति** । किं तद्विशेषणमित्यत्राह । **यस्येति** । तद्विवक्षितं विशेषणमित्यध्याहृत्य पृथक् वाक्यमिदं कर्तव्यम् । **न पर्यवस्यति** न सम्भवति । उदाहरति । **यथेति** । **तत्रैव** ग्रहं सम्मार्ष्टीत्यत्रैव । उद्देश्यप्रतीतिनिर्वाहकत्वमुपपादयति **तद्विवक्षां विनेति** । ग्रहत्वविवक्षाऽभाव इत्यर्थः । जात्यखण्डोपाध्यतिरिक्तानां केनचिद्रूपेणैव हि भानं नियतम् । घटः पटः गजो गौरिति घटत्वादिरूपेणैव हि पदार्था अवगम्यन्ते । न तु कदाचित् इतरव्यावृत्तधर्मविशेषमन्तरेण पदार्थः कश्चित् बुद्धिमधिरोहति । तेन ग्रहत्वाविवक्षायां ग्रहपदोपात्तस्योद्देश्यपदार्थस्य प्रतीतिर्नभवतीति भावः। ननु ग्रहत्वमप्येकत्ववदविवक्षितमिति वदन् पूर्वपक्षी नस्वरूपेणोद्देश्य प्रतीतिं वदति येन तदसम्भवात् ग्रहत्वविवक्षाया आवश्यकत्वं स्यात् । किन्तु सम्मार्ष्टीत्युक्ते प्रकरणात् सोमपात्राणीति लाभात्

तेषामेवोद्देश्यत्वमिति । तदुक्तं तत्र सम्मार्ष्टीत्येतावदुक्ते सोमावसेक निर्हरणप्रयोजनतया सोमपात्राणामित्यवगमात् भूयः कस्येत्यपेक्षाऽभावात् अविवक्षितं ग्रहग्रहणम् एकत्ववदुपलक्षणमात्रमिति । तत्रोद्देश्यप्रतीत्य-सम्भवात् ग्रहत्वविवक्षाभिधानमनुपपन्नमिति चेत् उच्यते । शब्दोपात्तस्याप्येकत्वस्य अविवक्षायामुक्तायां तद्दृष्टान्तमात्रेण यदि कश्चित् तद्वत् ग्रहत्वमविवक्षितं स्यादिति न्यायनिरूपणं विना प्रत्यवतिष्ठेत तं प्रत्युद्देश्यतावच्छेदकतया प्रतीतो यो धर्मस्तस्याविवक्षायां उद्देश्यस्वरूपप्रतीतिरेव न भवितुमर्हतीति दूषणमिदमुक्तम् । अथ यदि सोमपात्रत्वं प्रकृतापूर्वसाधनत्वं वा उद्देश्यतावच्छेदकं सिद्धमेवेति ग्रहत्वमविवक्षितमित्युच्यते तथाप्यवि वक्षाकारणस्याभावेऽविवक्षा न युज्यते । तत्र -

*आकाङ्क्षा तावदस्त्येव वाक्यभेदोऽपि पूर्ववत् ।*
*नात्र प्रसज्यते तेन ग्रहत्वं स्याद्विवक्षितम् ॥*

सम्मार्ष्टीत्युक्ते तावत् यत्किञ्चित्पात्रमिति सामान्येनार्थ-लब्धत्वात् किं तत् पात्रमित्यवच्छेदकधर्मस्याकाङ्क्षाऽवश्यम्भावात् आकाङ्क्षा नास्तीति न वक्तुं शक्यते । अत एव **तद्विवक्षां विनोद्देश्य-स्वरूपस्य ज्ञातुमशक्यत्वादिति** उद्देश्यस्वरूपप्रतीतिनिर्वाहक-धर्मस्याकाङ्क्षितत्वमेव प्रतिपादितमिति वेदितव्यम् । ग्रहत्वावच्छिन्न-स्योद्देश्यत्वेनान्वयाङ्गीकाराच्च पूर्ववत् विधेयानेकत्वप्रयुक्तवाक्यभेदोऽपि नास्ति । तेनाविवक्षाकारणाभाव इति शब्दोपात्तं ग्रहत्वमेवोद्देश्यता-वच्छेदकत्वेन विवक्षितं न त्वनुपस्थितं सोमपात्रत्वमिति ग्रन्थान्तरस्थं समाधानमनुसन्धेयमिति ग्रन्थकाराशयः ।

नन्वेवं ग्रहैकत्वन्यायाभावेऽपि नवमाद्यन्यायेनाविवक्षा कथं न भवति। तत्र हि व्रीहीन् प्रोक्षतीत्यादौ प्रोक्षणादीनां व्रीहीस्वरूपे आनर्थक्याद् अपूर्वसाधनरूपविशिष्टे द्रव्ये निवेशो वक्तव्य इति व्रीह्यादिपदेन प्रकरणसहकारेण व्रीहित्वसमानाधिकारणातादृशापूर्वसाधनत्व-मात्रोपस्थापनं क्रियते। न तु तदुपस्थापनोपक्षीणस्य व्रीहित्वस्योपस्थित-स्यापि उद्देश्यकोटौ निवेशः प्रतीयते । अतएव यवादेरपि प्रोक्षणं भवतीत्युक्तम् । तद्वदसंमृष्टैरपि ग्रहैः कार्यकरणसम्भवात् सम्मार्गस्य ग्रहस्वरूपेऽनुपयोगात् ग्रहपदेन प्रकृतापूर्वसाधनरूपं लक्षयितव्यम्। तादृश-लक्षणोपयुक्त शक्य प्रतीति निर्वाहकत्वेनैव ग्रहत्वप्रतीतेश्चरितार्थत्वात् ग्रहत्वस्योद्देश्यतावच्छेदक कोटिप्रवेशे कारणं नास्तीति इत्यविवक्षा भवतीति चेन्न। तेन न्यायेन अत्र ग्रहत्वाविवक्षाया इष्टत्वात्। नवमाद्यन्याय-कृताया अविवक्षायाः अत्यन्ताविवक्षारूपत्वाभावात् । तथा हि - संस्काराणाम् अपूर्वसाधनत्वावच्छिन्नेषु उद्देश्येषु निवेश इति हि नवमाद्यन्यायः । तत्र अपूर्वसाधनत्वमित्यत्राभिप्रेतमपूर्वं किं सन्निहित-मुत्पत्त्यपूर्वम् उत विप्रकृष्टं परमापूर्वम् इति संशये सन्निकृष्टमुत्पत्त्यपूर्वमेवेति तार्तीयीक तेषामर्थाधिकरणसिद्धं न्यायान्तरम् । व्रीहीन् प्रोक्षतीत्यत्र हि प्रोक्षणस्य व्रीहिस्वरूपे आनर्थक्ये व्रीहीनुल्लङ्घ्य तत्साध्यं कार्यान्तरं प्रोक्षणोद्देश्यत्व निर्वाहायान्विष्यते । तत्र व्रीहिनिष्पाद्यतण्डुलपिष्ट-पुरोडाशयागानामपि स्वरूपे आनर्थक्यात् यागान्तमपि गत्वा ततोऽपि परमुत्पत्त्यपूर्वमुपलभ्य प्रोक्षणेन व्रीह्यादिपरम्परया अस्यापूर्वस्य उपक्रियत इत्युद्देश्याकाङ्क्षाऽनुवृत्तिपर्यवसानम्। उत्पत्त्यपूर्वसाधनीभूतयागनिष्पादक-हविरर्थतण्डुलप्रकृतिभूतं द्रव्यं प्रोक्षणेन संस्कुर्यादिति। एवं पर्यवसाने सति

ततोऽपि परतरं परमापूर्वं नान्विष्यते। तेन च आग्नेयोत्पत्त्यपूर्वसाधनीभूत-व्रीहियवादिमात्रेषु द्रव्येषु प्रोक्षणस्य व्यवस्था भवति। परमापूर्वसाधनत्वा-वच्छिन्नोद्देश्यकत्वे तु उपांशुयाजाद्यङ्गाज्यादि द्रव्यस्यापि परमापूर्व-साधनत्वात् तत्रापि प्रोक्षणमित्यव्यवस्था भवेदिति प्रयोजनभेदः । इत्यस्मिन्नधिकरणे स्थितम् । एवं सन्निकृष्टापूर्वे पर्यवसानेन प्रोक्षणादि धर्मव्यवस्था च व्रीहित्वश्रवणबलादेव । अन्यथा हि व्रीहित्वस्य सर्वथोपेक्षणे कर्मतया द्रव्यसामान्यलाभे प्रकरणाविशेषात् प्रकृतसर्व-यागद्रव्य संस्कारकं स्यात्। एवं च व्रीहित्वश्रवणबलादेव तदवच्छिन्ना या उत्पत्त्यपूर्वसाधनता तस्या लाभात् व्रीहित्वस्योद्देश्यतावच्छेदक-कोटिप्रवेशाभावेऽपि न ग्रहैकत्वस्येवात्यन्ताऽनुपयुक्तत्वं भवति । एवं सम्मार्गस्य ग्रहस्वरूपेऽनुपयोगेनापूर्वसाधनत्वे लक्षयितव्ये ग्रहसाध्य यागाजन्योत्पत्त्यपूर्वसाधनत्वमेव तेषामर्थाधिकरणन्यायेन लक्ष्यते न प्रकरणलभ्यज्योतिष्टोमापूर्वसाधनत्वमिति ग्रहत्वप्रतीतिरर्थवतीति नैकत्ववत् ग्रहत्वमत्यन्तमविवक्षितं भवति । अत एव ग्रहत्वप्रतीति-लभ्यसन्निहितापूर्वसाधनत्वस्यावश्यम्भाविनीं विवक्षामुपचारात् **यथा तत्र ग्रहत्वं विवक्षित**मिति ग्रन्थकार आहेत्यपि शक्यं वक्तुम्। युक्ततरश्चैतत्। उत्तरग्रन्थसामञ्जस्यात्। तस्य ह्येवं व्याख्यानम्।

प्रकरणलभ्यग्रहचमससाधारणज्योतिष्टोमापूर्वसाधनत्वपरिहारेण ग्रहं सम्मार्ष्टीत्यत्र ग्रहत्वावच्छिन्नोपस्थितिलभ्यसन्निहितापूर्वसाधनत्वस्यो-द्देश्यतावच्छेदकत्वेन विवक्षायाः प्रयोजनमाह (७१) **तेनेति**। **तेन** ग्रहत्वं विवक्षितमित्यत्र ग्रहत्वशब्देनाभिप्रेतस्य सन्निहितापूर्वसाधनत्वस्य विवक्षितत्वेन। **ग्रहेति**। ग्रहस्य जातिर्ग्रहजातिः ग्रहत्वमित्यर्थः। तत्सम्बन्धि

ग्रहजातीयम् । तत् साधनं यस्य तस्य सोमयागस्य यदपूर्वं तदर्थत्वात् । सम्मार्गस्येति शेषः । संस्कारविधिषु हि प्रथमं संस्काराणामपूर्वसाधनी-भूतद्रव्याङ्गत्वे वाक्येन बुद्धे पश्चात् द्रव्यद्वारा तेषामेव संस्काराणामुद्देश्यता-वच्छेदककोटिप्रविष्टापूर्वार्थत्वमप्यर्थात् भवतीति पूर्वमेवास्माभिरुक्तम्। तेन सन्निहितापूर्वसाधनीभूतग्रहाङ्गस्य सम्मार्गस्य तदपूर्वार्थत्वमपीति ज्ञेयम् । **चमसेष्विति** । सोमरसधारणार्थेष्वेव पात्रेषु आकारभेदेन केचित् ग्रहा इत्युच्यन्ते केचिच्चमसा इति । ननु ज्योतिष्टोम इत्येकः प्रधानयागः । न प्रधानान्तरं किञ्चिदस्ति । तत्रोत्पत्त्यपूर्वमुत्पत्त्यपूर्वमेव । तत्साधनत्वमेवो-द्देश्यतावच्छेदकतया विवक्षितमिति वक्तव्यम् । तस्य च ग्रहेष्विवचमसेष्वपि विद्यमानत्वात् व्रीहीन् प्रोक्षतीति विहितस्य प्रोक्षणस्य यवेष्विव ग्रहं सम्मार्ष्टीति विहितस्य सम्मार्गस्य चमसेष्वपि प्राप्तिर्दुर्वारेति चेत् नैवम् । ज्योतिष्टोमे दशसु ग्रहेषु दशसु च चमसेषु सोमरसो गृह्यते । तत्र पृथक् भिन्नदेवतोद्देशेन एकैकपात्रस्थसोमरसहोमे क्रियमाणे यावन्ति पात्राणि तावन्तो यागा भवन्ति । सोमेन यजेतेत्युत्पत्तिवाक्येतु एकस्यैव यागस्योत्पन्नत्वात् तस्यैव ज्योतिष्टोमयागस्य पात्रभेदेनाभ्यासो भवतीति वाच्यम् । तत्र बहूनां यागाभ्यासानां स्वरूपेणैककालवृत्तित्वाभावात् साहित्यसम्पत्त्यर्थं यावन्तोऽभ्यासास्तावन्त्यभ्यासापूर्वाणि कल्पयितव्यानि । अभ्यासापूर्वैस्समुदितैरेकमुत्पत्त्यपूर्वं पूर्वोत्तराङ्गोत्पत्त्यपूर्वसहितेन तेन परमापूर्वमिति । एवं सति ग्रहं सम्मार्ष्टीत्यत्रोत्पत्त्यपूर्वापेक्षयाऽपि सन्निहिततरस्य ग्रहसाध्यागाभ्याससम्बध्युत्पत्त्यपूर्वस्यैवोद्देश्यता-वच्छेदककोटिप्रवेशो भवति । तदपूर्वसाधनत्वस्य चाभ्यासान्तर-साधनीभूतेषु चमसेष्वभावादुद्देश्यतावच्छेदकरहितेषु चमसेषु सम्मार्गस्य न प्राप्तिरिति ।

*अभ्यासापूर्वहेतुत्वविशिष्टेषु निवेशतः ।*
*चमसेषु न सम्मार्गोऽस्त्यभ्यासान्तरहेतुषु ॥*

तदिदं मूलग्रन्थेषु द्रष्टव्यमिति मन्वान आह इति स्थितमिति । एवमर्थोऽयं तेनेत्यादिग्रन्थो न समञ्जसः स्यात् यदि पूर्वत्र ग्रहत्वस्वरूप मात्रविवक्षासाधने तात्पर्यं स्यात् । तथा हि सति **तेने**त्यस्य ग्रहत्वस्य विवक्षितत्वेनेत्यर्थः । तस्य कुत्रान्वयः । ग्रहत्वस्य विवक्षितत्वेन सम्मार्गस्य अपूर्वार्थत्वसिद्धेर्वक्तुमशक्यत्वात् न तत्रान्वयः । न वा **चमसेषु न सम्मार्ग** इत्यत्र तदन्वयः । ग्रहत्वस्याविवक्षायामपि उद्देश्यस्वरूपस्याप्रतीतौ ग्रहेष्वेव सम्मार्गस्याप्राप्त्या चमसेष्वप्राप्तेः कैमुतिकन्यायसिद्धत्वादित्यलम् ।

*कृतावधानैरपि खल्वतिविस्तरवर्जने ।*
*शक्यवैशद्यसम्पत्तिदृष्ट्या दूरमिवागतम् ॥*

एवं ग्रहमित्यत्र ग्रहस्य प्रधानत्वे प्रतिप्रधानमिति न्यायप्रवृत्त्या इयत्तापरिच्छेदे सति पुनः परिच्छेदकसङ्ख्यानाकाङ्क्षायाम् एकत्वमविवक्षितमित्यानुपूर्व्या सिद्ध्यतीति यदुक्तंतद्वैपरीत्येनान्यत्र गुणत्वे प्रतिप्रधानमितिवत् न्यायविशेषाप्रवृत्त्या इयत्तापरिच्छेदविरहे परिच्छेदकसंख्या विशेषाकाङ्क्षायां विवक्षितं भवतीत्यानुपूर्व्या सिद्ध्यतीति प्रतिपादनाभिप्रायेण प्रथमं गुणत्वमाह **पशुनेति** । उद्देश्यस्य प्राधान्यं विधेयस्य गुणत्वं च हि नियतम् । तेन विधेयत्वात् पशोर्गुणत्वं भवतीति भावः । उक्तविधन्यायविशेषाप्रवृत्तिमाह **प्रतीति** । **इतीति** । इतिर्हेतौ । आकाङ्क्षामाह **कियतेति** । नन्वाकाङ्क्षायां सत्यां यावन्तः शक्यन्ते तावद्भिः पशुभिरिति कुतो न कल्प्यत इत्यत्राह **एकवचनेति**। शब्दोत्थाकाङ्क्षायां

शब्देनैवाकाङ्क्षितार्थलाभे सति को जातुचित् स्वयं किञ्चित् कल्पयन् दुर्मतित्वमाविष्करिष्यतीति भावः। उपादेयगतमेकत्वं विवक्षितमित्यत्र किं कारणमिति पृष्टवतो जिज्ञासोरेतावत्तत्र कारणमिति प्रतिबोधनं कुर्वन् अनुवदति **विधेयगतमिति**। उपादेयगतमित्यत्रैव तात्पर्यम्। सुविशद-प्रतिपत्त्यै विवक्षाहेतुं विशिष्य पुनर्निर्दिशति **बुभुत्सितत्त्वादिति**। आकाङ्क्षितत्वादित्यर्थः।

नन्वेवमाकाङ्क्षितत्वेऽपि यथा पूर्वं सम्मार्गस्येवैकत्वस्यापि विधाने विधेयानेकत्वात् वाक्यभेद इत्युक्तं ग्रहं सम्मृज्यात् तच्चैकमिति तथाऽत्र पशुरूपकारकस्य विधाने सति तद्गतस्यैकत्वस्यापि विधाने वाक्यभेदः स्यात् पशुना यजेत तेन चैकेनेति इत्यत्राह **किञ्चेति**। एकत्वविषये उक्तो न्यायो लिङ्गेऽपि समान इति मत्वाऽऽह **लिङ्गसङ्ख्येति**। विधेयत्वादेकत्वं विवक्षितमित्यन्वयः। **क्रियाङ्गत्वात्** क्रियाङ्गत्वोपपत्तेः। वाक्यभेदं विना विधिसम्भवात् विवक्षितमिति हृदयम्। **विधेयपशुद्वारेत्यादेः** प्रयोजनं **यज्ञाङ्गतया विवक्षित**मित्यत्र पूर्वमेवोक्तम्। **क्रियाङ्गत्वादिति** यागाङ्गत्वोपपत्तेरित्यर्थः। **एकत्वमिति**। नचात्र **लिङ्गसङ्ख्याविशेषितस्य विधेयत्वात् लिङ्गसंख्ययोरपि क्रियाङ्गत्वादिति** प्रागुक्तमनुसृत्य लिङ्गसंख्ये विवक्षिते इति वक्तुं युक्तमिति शङ्क्यम्। बुभुत्सितत्वात् विधेयगतमेकत्वं विवक्षितमित्येकत्वविवक्षायामेकं कारणं प्रतिपाद्य तत्रैव कारणान्तरप्रतिपादनाय **किञ्चेति** ग्रन्थारम्भेण तद्विवक्षाया एव निगमयितव्यत्वात्। न्यायसाम्यमात्रसूचनाय लिङ्गस्याप्यत्र घटनेति हि पूर्वमेवोक्तमिति। एवं पशुना यजेतेत्यत्र एकः पुमांश्च यः पशुः तत्करणिका यागभावना विधिविषय इति बोधप्रकारमङ्गीकृत्योक्तम्। अथा अन्यथाऽपि

बोधमङ्गीकृत्य लिङ्गसंख्याविधानं भवतीत्याह (७२) **अथवेति**। **तृतीयेति**। **पशुनेत्यत्र** श्रूयमाणया तृतीयाविभक्त्या नात्वेन रूपेण पुंस्त्वलिङ्गस्य एकवचनत्वेनैकत्वसंख्यायाः तृतीयाविभक्तित्वेन करणकारक शक्तेश्चाभिधानमिति बोध्यम्। करणञ्च तत् कारकञ्च तस्य शक्तिः निष्कर्षकधर्मः करणत्वमित्यर्थः। **आत्मसात्कृतयोः** आत्माधीनीकृतयोः। स्वायत्तीकरणञ्च स्वस्मिन् विशेषणत्वेन स्वीकरणम्। यथा प्रातिपदिकार्थस्य पशोराधेयतासम्बन्धेन तृतीयार्थकरणत्वेऽन्वयः पशुनिष्ठं करणत्वमिति तथा लिङ्गसंख्ययोरपि। पशुनिष्ठम् एकत्व निष्ठं पुंस्त्वनिष्ठं च यत् करणत्वं तन्निरूपिका भावनेति। इति भावः। **साक्षादिति**। न पूर्वोक्तप्रकारेण पशुद्वारेत्यर्थः। नन्वेवम् एकत्वपुंस्त्वयोः पशौ अन्वयाभावेऽनेकैः पशुभिः स्त्रीपशुना च यागः क्रियेत। न च तथा सत्येकत्वस्य पुंस्त्वस्य च क्रियाङ्गस्य बाधापत्तिरिति वाच्यम्। अन्यस्य कस्यचित् पक्ष्यादिकस्योपादानेनापि तदुपपत्तेः। न हि पशुगतमेवैकत्वं पुंस्त्वं वा क्रियाङ्गमिति वक्तुं शक्यम्। एकत्वपुंस्त्वयोः पशावन्वयस्य त्वयाऽनङ्गीकारेण पशुगतयोरेव तयोः क्रियाङ्गत्वमित्यत्र प्रमाणाभावादित्यत्राह **पश्चादिति**। अरुणैकहायनीन्यायं विवृणोति **यथेति**। पिङ्गे अक्षिणी यस्याः सा पिङ्गाक्षी। एको हायनो यस्याः सा एकहायनी। **संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा** इति निघण्टुः। आरुण्येति। आरुण्यं पिङ्गाक्षीत्वं एकहायनीत्वं गोत्वमिति चत्वारि। अत्र पिङ्गाक्षी एकहायनीत्यनयोर्यौगिकशब्दत्वेन द्रव्यवाचित्वादेकहायनीद्रव्यस्यैव पिङ्गाक्षीद्रव्यस्यैव च करणत्वेनान्वयं प्राञ्चो वदन्ति। नवीनाः पुनरत्रापि आकृत्यधिकरणन्यायप्रवृत्तिमङ्गीकृत्य पिङ्गाक्षीत्वादिकमेव करणत्वेनान्वित माहुः। विस्तरस्तु **कौस्तुभे**। नन्वरुणा

पिङ्गाक्षी एकहायनी च या गौः तया सोमं क्रीणातीति परस्परान्वयः कथं न भवतीत्यत्रोक्तं **करणविभक्तिभिरिति**। करणवाचिन्यो विभक्तयः करणविभक्तयः ताभिः। बहुवचनं प्रयुञ्जानस्यायमाशयः। पृथक् पृथक् तावदत्र विभक्तिश्रवणात् प्रत्येकं करणत्वमवगम्यते। यद्यारुण्यादेः गोत्वेऽन्वयस्तर्हि तृतीयावगतकरणत्वेनैव वक्तव्यः। स चानुपपन्नः। न हि गोद्रव्यं प्रत्यारुण्यादि करणमिति। न च आरुण्यादेः गोविशेषणत्वात् तद्वाचकपदोत्तरं श्रूयमाणयास्तृतीयाविभक्तेरभेद एवार्थो न करणत्वमिति वाच्यम्। अभेदेऽनुशासनाभावात्। आनुशासनिककरणत्वपरित्यागे प्रमाणाभावाच्च। तस्मात् पृथक् पृथक् करणविभक्तिश्रवणबलात् परस्परमनन्वितानामेव सोमक्रयणाङ्गत्वेनान्वयो भवतीति। नन्वेवमपि अरुणयेत्यनेनोक्तस्य आरुण्यवद्द्रव्यनिष्ठकरणत्वस्याश्रयतासम्बन्धेन गोत्ववति द्रव्येऽन्वयोऽङ्गीक्रियते। अरुणावृत्तिकरणत्वाश्रयो या गौस्तत्करणिका क्रयभावनेति। तत्र परस्परानान्वितानामेवेति को निर्बन्ध इत्यत्रोक्तं **कारकाणां क्रियान्वयनियमादिति**। विभक्तिवाच्यकर्मत्व-करणत्वादिरूपाणां कारकाणां भावनारूपक्रियान्वयनियमादित्यर्थः। तेन क्रियान्वयात् प्राक् परस्परान्वयो दुर्वच इति भावः। **सोमक्रयणाङ्गत्वेनेति**। सोमक्रयणोद्देशप्रवृत्तकृति करणत्वेने त्यर्थः ननु यदि प्रथमं परस्परमनन्वयः पश्चादपि न स भवितुमर्हति इत्याशङ्क्य गोत्वावच्छिन्नस्य परिच्छेद-काकाङ्क्षया आरुण्यस्य परिच्छेद्याकाङ्क्षया च परस्परमन्वय इत्याह **आरुणयादेरिति**। **गुणस्य** गुणत्वजात्यवच्छिन्नस्य। **अमूर्तस्य** घटपटादिवत् साक्षात् क्रियासम्बन्धयोग्यमूर्तिरहितस्य। अमूर्तस्य हेतुतयैव गुणत्वकथनम्। क्रियाश्रयाकारवत्त्वं हि मूर्तत्वम्। तत् गुणे न सम्भवति। गुणे

गुणक्रियाऽनङ्गीकारात्। **स्वतः** द्रव्यमद्वारीकृत्य। **क्रियेति**। क्रयेति पाठो युक्तः। क्रियासाधनत्वायोगादित्यस्यानन्तरं स्वस्य द्रव्यपरिच्छेदद्वारा साधनीभवितुं योग्यत्त्वेन परिच्छेद्यद्रव्यविशेषाकाङ्क्षायामित्यध्याहर्तव्यम्। न च स्वयं क्रयसाधनत्वायोग्यत्वे योग्यताज्ञानासम्भवात् आरुण्यवृत्तिकरणत्वा वगाहिनी क्रयभावनाबुद्धिरेव न भवितुमर्हतीति वाच्यम्। अयोग्यताज्ञानस्य प्रतिबन्धकत्वमात्राभ्युपगमेन योग्यताज्ञानस्य कारणत्वाभावात्। नच तथाऽपि प्रतिबन्धकस्यायोग्यताज्ञानस्य तत्रावश्यम्भावात्तद्दोषतादवस्थ्यमिति वाच्यम्। अयोग्यतानिश्चयस्यैव प्रतिबन्धकत्वेन, अत्र साक्षात् साधनत्वस्य शब्देनानुपादानात् परम्परयाऽपि व्रीहिभिर्यजेतेत्यादाविव भवेदिति पर्यालोचनसम्भवात् प्रतिबन्धकीभूतनिश्चयावश्यम्भावस्य दुर्वचत्वेन च शाब्दबोधोत्पत्तौ बाधकाभावात्। **पश्चात्** सर्वकरणत्वावगाहिप्रथमबोधानन्तरम्। आरुण्यस्य गोपरिच्छेदकत्वाभिधानेनैव गोः आरुण्यपरिच्छेद्यत्वमभिहितं भवतीति **परस्परमिति** नासङ्गतम्। पृष्ठे भवः पार्ष्ठिकः स चासौ अन्वयश्च। मुखे भवो मुख्य इति यथा प्राथमिकस्यार्थस्य व्यवहारस्तथा पृष्ठे भवः पार्ष्ठिक इति पश्चात्तनस्य व्यवहार इति द्रष्टव्यम्। **पश्चादित्यनेनै**वान्वये पार्ष्ठिकत्वस्योक्तत्वेऽपि पश्चात्तनान्वय एव पार्ष्ठिकान्वय इत्युच्यत इति व्युत्पादनाय पुनः पार्ष्ठिकेत्युक्तिरिति विभाव्यम्। पार्ष्ठिकान्वयबोधमभिलपति **येति**। अत्र या गोः सा एकाहायनी पिङ्गाक्षी अरुणा चेति वक्तुं युक्तमिति न शङ्क्यम्। गोशब्दस्य अरुणावाक्ये प्राचीनैरनुपात्तस्य, एकहायनीपदे बहुव्रीहिसमासविवक्षितस्यान्यपदार्थस्य प्रतिपादनाय केवलमुपात्ततया आख्यातसन्निहिते एकहायनी पदार्थ एवेतरपदार्थयोः पाष्ठिकान्वयस्य

प्रदर्शनीयत्वात् । एवं यथेत्यादिना विवृतमरुणैकहायनीन्यायं प्रकृते योजयति (७३) **तद्वदिति**। तद्वत् पश्चात् अरुणैकहायनीन्यायं परस्परमन्वय इति पूर्वेण योज्यम्। ग्रहोद्देशेन सम्मार्गविधौ एकत्वस्यापि विधानाङ्गीकारे एकत्वस्य सम्मार्गस्य च भिन्नभिन्नपदोपात्तत्वात् परस्परविशेषण-विशेष्यभावो न भवतीति वाक्यभेद इति युक्तम्। अत्र तु पशुनेत्यत्रेव एकेनैव पदेनोपात्तत्वात् वैशिष्ट्यं सम्भवतीत्यभिप्रायेणाह **चित्रापदेनेति**। **अस्य विधातुं शक्यत्वादि**त्यत्रान्वयः। **चित्रत्वेति**। **अथवेति** पूर्वोक्तपक्षान्तरे प्रथमबोधे चित्रत्वस्त्रीत्ववृत्तिकरणत्वनिरूपिका भावनेति परस्परमनन्वि-तानामेव भानात् पार्ष्ठिकान्वयतात्पर्येण उभयविशेषितत्वं पशोरवगन्तव्यम्। उद्देश्यमाह **यजेतेतिपदेति**। यजेतेति यजिनेति क्वचित् पाठः। ननु दधि मध्विति वाक्यविहितस्य यागस्य सन्निधिवशात् यजतिना उपस्थितिर्भवति। तत्र पशोर्विधानमशक्यमित्यत्राह **अग्नीषोमीयेति**। **शक्यत्वादिति**। वाक्यभेदं विनैवेति शेषः। **कथमिति** क्षेपे। नामत्वं न भवतीत्यर्थः। एवं प्राप्तं पूर्वपक्षं निरस्यति **नेति**। नामत्वं न भवतीति नेत्यर्थः।

कस्मादित्यत्राह **तथासतीति**। नामत्वानङ्गीकारेण गुणविधाने सतीत्यर्थः। **प्रकृतस्येति**। प्रकरणादुपस्थितस्येत्यर्थः। हानं चित्रावाक्ये यजतिधातुवाच्यत्वपरित्यागः। तदनङ्गीकार इति यावत्। **कल्पना** उक्तवाक्ये धातुवाच्यत्वकल्पना। तद्वयमिति। अग्निहोत्रं जुहोतीत्यने-नाग्निहोत्रहोमे विहिते तत्सन्निधिपठिते दध्ना जुहोतीति वाक्ये जुहोतिपदेन प्रकरणवशदग्निहोत्रहोमस्यैवोपस्थितिर्नान्यस्येति यथास्थितं तथा दधि मधुघृतमिति वाक्यसन्निधिपठिते चित्रावाक्ये यजेतेति पदेन तद्वाक्यविहित प्राजापत्ययागस्यैवोपस्थितिर्भवति। प्रकरणात्। एवं सति प्रकरणरूपप्रमाण

लभ्यमर्थं परित्यज्य यत्किञ्चित्प्रमाणरहिताग्नीषोमीययागस्य धातुवाच्य-त्वाङ्गीकारो नहि युज्यत इत्याशयः। न च प्रकरणेन प्राजापत्योपस्थितावपि ततोऽपि प्रबलेन प्राणिद्रव्यगतचित्रवर्णत्वस्त्रीत्ववाचकचित्रापद-समभिव्याहार रूपवाक्यप्रमाणेन प्राणिद्रव्यकाग्नीषोमीययागस्योपस्थितिः सम्भवत्येवेति नाप्रामाणिकत्वमिति वाच्यम्। प्रकृतप्राजापत्ययागेऽपि दधिमध्वादिरूप विजातीयानेकद्रव्यमेलनेन चित्रत्वोपपत्तेस्तद्वशेन प्राणिद्रव्योपस्थितेरनावश्यकत्वात् न च चित्रत्वस्य रूपत्वव्याप्य-जातिविशेषात्मकत्वात् उक्तरीत्या यागे तत्त्वं दुर्वचमिति वाच्यम्। चित्रमिति शुक्लादिव्यतिरिक्तरूपविशेषे प्रमाणाभावात्। घटपटादीनामपि विजातीयानेकरूपसमवायादेव चित्रत्वव्यवहारात्। तदुक्तं चित्रशब्दो हि नानापर्यायो लोके प्रसिद्धः। ततः चित्राख्यमेकमेव रूपं लोकविरोधा-देवायुक्तमङ्गीकर्तुमिति। नचैवं चित्रत्वोपपत्तावपि प्रकरणोपस्थिते प्राजापत्ययागे स्त्रीत्वस्य कथमुपपत्तिरिति वाच्यम्। चित्रया इष्ट्या यजेतेति इष्ट्यभिप्रायेण तदुपपत्तेरिति। वाक्यभेदान्नमधेयत्वमुपसंहरति **तस्मादिति**। वाक्यभेदप्रसङ्गेन विशिष्टविधा वपि प्रकरणबाधप्रसङ्गेन च पशुयागे गुणविधानासम्भवादित्यर्थः। नामधेये उक्तचतुर्विधप्रमाणातिरिक्तप्रमाणं प्रतिषेधन्नेव नामधेयप्रकरणमुपसंहरति **एवमिति** (७४) **सर्वत्रेति**। अग्निहोत्रं जुहोतीत्यादाविव वैश्वदेवेन यजेतेत्यादावपीत्यर्थः। **तच्चानेकविध**मित्युपक्रान्तं विधिवाक्य निरूपणमुपसंहरति **इत्थमिति**। इत्थम् ईदृशं यत् विधिवाक्यस्य प्रामाण्यं तत् **विचारितं** प्राचीनैः शास्त्रकारैर्विचार्य स्थापितमित्यर्थः। अथवाऽस्माभिरियता ग्रन्थेन इत्थं विचारमुखेन दर्शितमित्यर्थः।

**अर्थवादानामिति** । अर्थं विधिप्रमितं श्रेयस्साधनं वदन्ति प्रशंसायै इत्यर्थवादाः । विधिशब्दविपरीतार्थ इह वादशब्द इति द्रष्टव्यम्। तथाहि सूत्रकारो व्यवहरति **विधिर्वा स्यादपूर्वत्वात् वादमात्रं ह्यनर्थकमिति** । **स्वेति** । स्वार्थः स्वाभिधेयः शक्त्या स्वोपस्थाप्य इत्यर्थः स परः उद्देश्यभूतः तात्पर्यविषयो येषां ते स्वार्थपराः तत्वे । **प्रयोजनाभावादिति** । वायुः शीघ्रतमगामित्वरूपक्षेपिष्ठत्वगुणविशिष्ट-देवतेति प्रतिपादने पुरुषस्य न क्वचित् प्रवृत्तिर्निवृत्तिर्वा भवति । तदभावे च प्रामाण्यमेव न भवतीति भावः । नन्वेवं प्रयोजनाभावेऽप्रामाण्य मेवास्तु इत्यत्राह **अध्ययनेति** । नन्वध्ययनगृहीतविधिवाक्यानां प्रयोजनवद्या गादिककर्मबोधकत्वेन तावतैवाध्ययनविधेः सार्थक्यात् कथं तद्बलात् अर्थवादानामपि प्रयोजनवदर्थपरत्वावश्यम्भाव इति चेदुच्यते ।। अधीयत इत्यध्यायः स्वीयोऽध्यायः स्वाध्यायः स्वकुलक्रमागता वेदशाखेत्यर्थः । एवञ्च स्वाध्यायत्वं न प्रतिवाक्यं पर्याप्तं यथा घटत्वं घटे घटे । किन्तु शाखाशब्दवाच्य निश्शेषाक्षरसमुदाये यथाऽवयवेष्ववयवी । तत्र स्वाध्यायत्वावच्छिन्नोद्देशेनाध्ययने विहिते कृत्स्नशाखाध्ययन-स्यावश्यकत्वात् अध्ययनगृहीत विधिभागस्य प्रयोजनवदर्थवत्वेन यथा प्रामाण्यं तथा तादृशार्थवादभाग स्यापि प्रयोजनवदर्थबोधकतया प्रामाण्यम् अवश्यं वक्तव्यम् । अन्यथा तदंशेऽध्ययनस्य निरर्थकत्वेन कृत्स्नशाखा-ध्ययनविधेरनुपपत्तेः । यदि हि स्वाध्यायशब्देन विधिभागमात्राभिधानं भवेत् तर्हि तावतैव विहितार्थानिष्पत्या अर्थवादानां प्रामाण्यमनपेक्षणीयं स्यात् । नत्वेतदस्ति । विध्यर्थवादमन्त्रसमुदायस्यैव स्वाध्यायत्वादिति । **फलेति** । फलवान् योऽर्थः तस्य ज्ञानं तस्मै तदर्थाः तत्वस्य । फलवन्तमर्थ

दर्शयति **विधेयेति**। विधेयगतं यत् प्राशस्त्यं तत्प्रतिपादनद्वारेति। तद्वारा या विध्येकवाक्यता तत्प्रयोज्यमर्थवादानां प्रामाण्यमित्यन्वयः। एक वाक्यताप्रकारः उपरिष्टादुपपादयिष्यन् विभजते **स** इति। सचेति क्वचित्पाठः॥ चतुरोऽपि भेदान् क्रमेणोदाहरति (७५) **तत्रेति**। प्रसिद्धत्वात् निन्दाप्रशंसयो र्लक्षणं नोक्तम् अप्रसिद्धत्वात्तु परकृतिलक्षणमाह **परेणेति**। पुराकल्पलक्षणमाह **परेति**। परकृतिपुराकल्पविषये मतभेदाः परिष्कारे उक्ताः। मनुष्यचरितप्रतिपादने परकृतिः, प्रजापत्याद्यमनुष्यकृतिप्रतिपादने पुराकल्प इत्यन्यथापि **भट्टभा स्करो** मन्यते। ननु निन्दार्थवादस्य कथं प्राशस्त्यप्रतिपादकत्वेन प्रामाण्यसम्भवः विरोधादिति शङ्कां परिहरति (७७) **तत्रेति**। **विधेयेति**। विधेयादन्यस्य या निन्दा तद्वारेत्यर्थः। तदिदमुपपादयति। **अश्रुजमिति**। अश्रुजस्य रजतस्य दाने तद्रजतं स्वकारणानुरूपं स्वयं दातुर्गृहे रोदनं जनयतीति रोदनजनकत्वेन निन्दा। तद्दाननिषेधे च तद्रोदनपरिहारेण प्राशस्त्यमिति। निन्दार्थवादापेक्षया प्रशंसापरकृतिपुराकल्पार्थवादानां वैलक्षण्यमाह इतरेषामिति॥ एवकारः प्रतिप्रसवार्थः। प्रशंसार्थवादस्य प्राशस्त्यप्रतिपादकत्वमाह **वायुरिति**। **क्षिप्रेति**। शीघ्रगामित्वेन शीघ्रफलप्रदानोपयोगित्वमपि भवतीति देवताप्राशस्त्यं तत्सम्बन्धात् कर्मणः शीघ्रफलप्रदत्वमिति प्राशस्त्यम्। **विधेयेति**। विधेया या देवता तद्गतप्राशस्त्येति। परकृत्यर्थवादस्य प्राशस्त्यप्रतिपादकत्वमाह **अग्निरिति**। **अग्निर्वा अकामयत अन्नादो देवानां स्यामिति स एतमग्नये कृत्ति काभ्यः पुरोडाशमष्टाकपालं निरवपत् ततो वै सोऽन्नादो देवानामभवत् अग्निर्वै देवानामन्नादः यथा हवा अग्निर्देवानामन्नादः एवं हवा एष मनुष्याणां भवति य एतेन**

**हविषा यजते य उचैनमेवं वेद** इति श्रुतस्य अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालन्निर्वपेदिति नक्षत्रेष्टिविधिवाक्य सन्निधिपठितस्यार्थ-वादस्येत्यर्थः । **आधिक्यादिति** । उत्कृष्टत्वादित्यर्थः । **विधेयेति** । विधेयस्य कर्मणः प्राशस्त्यमिति । (७९) **सन्दिग्धार्थनिर्णायक-त्वेनापीति** । तेजस्साधनत्वात् तेज एव घृतमिति घृतप्रशंसाद्वारा शर्करोपधानप्राशस्त्यप्रतिपादकत्वं अपिशब्देन समुच्चीयते । शर्कराः क्षुद्रपाषाणविशेषाः ।

(८०) **कर्मज्ञानमिति** । कर्मानुष्ठानायोगात् कर्मौपयिकं कर्मसाधनं यदर्थज्ञानं तन्मन्त्रैः क्रियत इत्यर्थः । उपायान्तरेणापि अर्थज्ञानसम्भवात् मन्त्राणामदृष्टार्थत्वमवश्यम्भावीत्याशङ्क्याह **नचेति** । **उपेति** । उपदेष्टॄणां कल्पसूत्रकाराणां यागानुष्ठानसमये सन्निहितानामभि-ज्ञानां वा वचनं तदादिनेत्यर्थः । आदिना ब्राह्मणवाक्यग्रहणम् । **नान्यथेति** । **अन्यथा** मन्त्रव्यतिरिक्तेन उपायान्तरेण स्मृत्वाऽनुष्ठाने सतीति योज्यम् । नियमस्यापि किं फलमित्यत्राह **नियमेनेति** । मन्त्रनियमेनादृष्टं जायत इत्यङ्गीकारादित्यर्थः । तस्यापि कोपयोग इत्यत्राह (८१) **तदभाव** इति । **तज्जन्येति** । मन्त्रनियम जन्येत्यर्थः । **तन्मूळमिति** । तत् नियमादृष्टं मूलं प्रयोजकं यस्य तत् तन्मूलं नियमादृष्टप्रयोज्यमित्यर्थः। **कल्पनादिति** । अन्यथा तदंशेऽध्ययनस्य वैयर्थ्यापत्तिरित्याशयः । अत एव पूर्वमुक्तं **मन्त्राणामप्यध्ययनविधिनेति** ।

एवमुपायान्तरेणापि अर्थज्ञानसम्भवात् मन्त्राणामदृष्टार्थत्वमिति पूर्वपक्षे निरस्ते सम्प्रति स एव पूर्वपक्षवादी प्रकारान्तरेण मन्त्राणामर्थ-

स्मरणार्थत्वं प्रतिषेधन् प्रत्यवतिष्ठते **नन्विति**। अत्र प्रयोगकालिकार्थ-स्मरणर्थतया मन्त्राणां दृष्टार्थत्वं न भवतीति पूर्वपक्षिणस्साध्यम्। तत्र हेतुः विनियोजकवाक्यवैयर्थ्यम्। तत्र कथं तु मन्त्राणामर्थस्मरणार्थत्वे विनियोजकवाक्यवैयर्थ्यमिति शङ्कायां यत् विनियोजकवाक्येनार्थ-विशेषस्मरणाङ्गत्वं बोध्यते तस्य प्रकारान्तरेण लाभात् तद्वैयर्थ्यमिति, एवं विनियोजकवाक्यावसेयस्य अङ्गाङ्गिभावस्य मन्त्राणां दृष्टार्थत्वे कथं प्रकारान्तरेण लाभ इति शङ्कायाम् अर्थप्रकाशन सामर्थ्यरूपाल्लिङ्गप्रमाणात् तल्लाभ इति, ननु न वयमत्र लिङ्गप्रमाणम् अभ्युपगच्छाम इत्याक्षेपे मन्त्राणां स्वस्वबोध्यार्थं प्रति अङ्गत्वं वदद्भि: लिङ्गमप्यङ्गीकृतमेवेति, ननु केन मन्त्राणां स्वस्वबोध्यमर्थं प्रति अङ्गत्वमुक्तमित्यत्र दृष्टार्थत्वाय मन्त्राणां प्रयोगसमवेतार्थस्मरणार्थत्वं वदद्भिः तदप्युक्तमेवं नहि मन्त्राः स्ववाच्यार्थमन्तरा अर्थान्तरं प्रतिपादयितुं शक्नुवन्ति तेन यो मन्त्रो यागसम्बन्धिनं यमर्थं प्रकाशयितुं समर्थः तस्य मन्त्रस्य स्मरणद्वारा तदङ्गत्वमेव वाच्यम् अन्यथा दृष्टार्थत्वानिर्वाहादिति च समाधानमभिप्रेतम्। एवम्

**दृष्टार्थता चेन्मन्त्राणामर्थस्मरणतस्ततः।**
**स्वस्वप्रकाशनीयेऽर्थे शेषताऽङ्गीकृता भवेत्॥**

**तत्र लिङ्गप्रमाणेन तदङ्गत्वप्रसिद्धितः।**
**विनियोजकवाक्यस्य नैरर्थक्यं प्रसज्यते॥**

इत्यानुपूर्व्या सिध्यतीत्यभिप्रेत्य प्रथमं मन्त्राणां स्वस्वप्रकाश्यार्थाङ्गत्वं भवद्भिरङ्गीकृतमित्याह **मन्त्राणामिति**। **फलितमिति**। कण्ठरवेणैव-मनुक्तत्वेऽपि दृष्टार्थत्वाय अर्थस्मरणार्थत्वं वदद्भिः एवमप्यङ्गीकृतं भवतीति

भावः । ननु को विनियोग इत्यत्राह **विनीति**। ननु किं शेषत्वमित्यत्राह **शेषेति**। यद्यपि पूर्वमेवेदमुक्तं तथाप्यस्मिन् शास्त्रे इदं प्रथमप्रवृत्तानां बालानां बहुधा विस्मरणदर्शनात् संस्कारदाढर्याय **असकृदपि पथ्यं वक्तव्यमिति** न्यायेन पुनरभिधानमिति वेक्षितव्यम् । तत्र लिङ्गप्रमाणेन तदङ्गत्वं प्रसिध्यतीत्याह **ततश्चेति**। स्वस्वप्रकाश्यार्थे विनियोगाङ्गीकाराच्चेत्यर्थः। **रशनेति** । रशनाग्रहणस्य तत्सम्बन्धि तत्प्रकाशक सामर्थ्यमित्यर्थः । विनियोजकवैयर्थ्यमाह **इमामिति** । **किमर्थमिति** । निरर्थकमित्यर्थः । एतद्वचनसार्थक्याय स्वस्वार्थप्रकाशनार्थत्वं मन्त्राणां नास्तीति कल्पनीयमित्याशयः । अत्र दृष्टान्तमप्याह तत्र भवान् भाष्यकारः, यथा साक्षः पुरुषः परेण चेन्नीयते नूनमक्षिभ्यां न पश्यतीति गम्यत इति ॥ शेषिद्वयमाह (८२) **चयनेति** । उभयत्र प्राप्तिमाह **तत्रेति**। उभयोर्मध्य इत्यर्थः। **लिङ्गाविशेषात्** लिङ्गसाधारण्यात्। इतरनिवृत्तिमाह **अत** इति। गर्दभरशनायामपि प्राप्तत्वादित्यर्थः । तत्प्राप्तिप्रयोज्यं तन्निवृत्तिरूपपरिसंख्यात्वमित्यन्वयः ।

प्रसङ्गात् परिसंख्यागतं विशेषमाह **साचेति**। चो वाक्यालङ्कारे। **परेति** । शक्यादन्यः परः लाक्षाणिक इति यावत् । **सचेति**। परस्परसमुच्चायकाश्चकाराः । (८४) **अष्टेति**। अष्टभिर्दोषैर्दुष्टः सचासौ विकल्पश्चेति । विकल्पोदाहरणमाह **यथेति** । **यथा तयोरेकार्थत्वात् विकल्प** इत्यन्वयः । व्रीहियवयोरेकार्थत्वमुपपादयन्नाह **आग्नेय** इति । तत्रेत्यनर्थकम् तस्येत्यत्र पर्यवसानं वा द्रष्टव्यम्। प्रकृतिद्रव्याकाङ्क्षोपपादनाय पुरोडाशस्य विकृतिद्रव्यत्वं विशदयितुमुक्तम् **अपूपविशेषस्येति**। एवं व्रीहिसोमादि द्रव्यनियमविधिषु बोध्यमिति पूर्वोक्तनियमविधित्वं विवरीतुं

प्रकृतिद्रव्याकाङ्क्षायां व्रीहयः प्राप्यन्ते इत्यनुक्त्वा **अनियमेन कस्यचित् प्राप्तौ व्रीहयो नियम्यन्त** इत्युक्तिः। **एकेति**। एकोऽर्थः प्रयोजनं ययोस्तौ एकार्थौ तत्वात्। स्थलान्तरमुदाहरति **एवमिति**। **तत्रापि विकल्प** इत्यत्रान्वयः। अतिरात्र इति ज्योतिष्टोमयागस्यैव प्रयोगविशेषः। **षोडशी** ग्रहविशेषः। (८५) **तत्रापीति**। ग्रहणतदभावयोरपीत्यर्थः। **सचेति**। असन्देहार्थश्चकारः। **स्वार्थेति**। प्रवर्तनाबोधनद्वारा विधेयार्थानुष्ठापकत्वेनैव हि विधीनां प्रामाण्यमुक्तं तदभावेचाप्रामाण्यमनुक्तिसिद्धम्। तत्र यदा तदर्थानुष्ठानं न क्रियते तदा स्वार्थानुष्ठापकत्वाभावात् तद्रूपं प्रामाण्यं परित्यक्तं भवति, अप्रामाण्यञ्च स्वीकृतं भवतीति भावः। **यवशास्त्रस्येति**। **यत् यवशास्त्रस्य प्रामाण्यं पूर्वं त्यक्तमि**त्यन्वयः। क्वचिदिदं न पठ्यते।

**क्वचिदिति**। यद्यप्येकार्थत्वेन विकल्पः प्रागेवोक्तः तथापि प्रकारान्तरेणाप्ययमस्तीति वक्तुमुक्तस्यैवानुवाद इति द्रष्टव्यम्। उदाहरति (८६) **यथेति**। व्रीह्यादौ यादृशः तादृश एकार्थत्वप्रयोज्यविकल्प इत्यर्थः। ननु कथं व्रीहियवयोः समुच्चयो न भवतीत्याशङ्क्य व्रीहिभिर्यजेतेति व्रीहिपदोत्तरं श्रूयमाणा तृतीयाविभक्तिः व्रीहिमात्रनिष्ठां व्रीहित्वमात्रावच्छिन्नां करणतां बोधयति। यदि व्रीहियवयोः समुच्चयस्स्यात् तर्हि उभयव्यासक्तद्वित्वावच्छिन्न करणताया एव सम्पादनात् यथाशास्त्रमनुष्ठितं न स्यात्। तस्मान्न समुच्चय इति समाधातव्यमित्यभिप्रेत्याह **एकैकस्येति**। एवं सत्यपि यदि व्रीहियवयोः एकस्येतराभावे स्वकार्यकरणसामर्थ्यं न स्यात् तदा प्रत्येकविभक्तिश्रवणमप्युपेक्ष्य समुच्चयोऽङ्गीक्रियेत नत्वेवमस्तीत्यभिप्रायेण पुरोडाशनिष्पा दकत्वेन श्रुतत्वादित्यनुक्त्वा **तन्निष्पादनक्षमत्वादि** तु उक्तमिति ध्येयम्। विकल्पान्तरमाह **क्वचिदिति**।

उदाहरति **यथेति** । वचनबलादेव विकल्प इत्युत्तरत्रान्वयः। **बृहदिति** सामविशेषवाचिन एव स्तोत्रवाचकपृष्ठ शब्दसामानाधि करण्योपपत्त्यर्थं तत्सामसाध्ये लक्षणेति स्थितम् । पृष्ठस्तोत्रान्तरमिति । पृष्ठसंज्ञकं स्तोत्रं पृष्ठस्तोत्रम् अन्यत् पृष्ठस्तोत्रं पृष्ठस्तोत्रान्तरम् । संस्कारकर्मत्वमुपपादयति **स्तोत्रेति** । याः सेतोत्रसाधनीभूताः स्तोत्रीयाः तासामक्षराणि तदभिव्यक्तिरूपः संस्कारः **तद्वारेति**। एवञ्च स्तोत्रीयारूप द्रव्यसंस्कारत्वात् संस्कारकर्मत्वमिति भावः । **इन्द्रादीति** । इन्द्रादिषु गुणिषु वर्तमानानां गुणानामभिधानमित्यर्थः ।

ननु यदि प्रगीतैर्मन्त्रैः साध्यं स्तोत्रं तर्हि साम्नः स्तोत्रे कथमुपयोग इत्याशङ्कायां मन्त्रा इति स्तोत्रीयाणां ऋचामेवाभिधानं तत्र प्रगीतत्वमपि सामसंस्कार्यत्वमेवेति समाधानमभिप्रेत्य प्रगीतमन्त्रसाध्यमित्येतत् व्याचष्टे **प्रगीतेति**। अग्न आयाहि वीतये इति ऋचि **ओ ग्ना ई** इत्येकारादीनां **आ ई** इति सन्धिविश्लेषणेन प्रकाशनमभिव्यक्तिः । याज्यानुवाक्यादिषु कर्माङ्गभूतदेवताप्रकाशन एव तात्पर्यात् तत्र देवतागुणविशेषप्रकाशने सत्यपि दृष्टार्थत्वमेव स्तुतिषु पुनः गुणप्रकाशन एव तात्पर्यात् असमवेतार्थपरत्वेनादृष्टार्थत्वमिति ज्ञेयम्। **गानेति**। गानक्रियायां विशेषो मन्त्रत्वरूपः । मन्त्रत्वसमानाधिकरणं गानत्वं सामलक्षणमिति। **तद्गतेति**। स्तोत्रीयागतेत्यर्थः **त्रिवृत्** । नवत्वसङ्ख्या । **भेद इति** । भिद्यते इतरेभ्यो व्यावृत्तो भवति येन स भेदः लक्षणमित्यर्थः । एवं ययोर्विकल्पः ते स्तोत्रे उक्ते । सम्प्रति तयोः पूर्ववत् न्यायेन अप्राप्यमाणोऽपि विकल्पो वचन बलाद्भवतीत्याह **तथाचेति** । **भिन्नेति** । प्रयाजानूयाजादीनां प्रकरणादेकक्रत्वर्थत्वेऽपि अपूर्वरूपस्यावान्तरकार्यस्य भेदेन

सर्वोपकारसिद्ध्यर्थं प्रयोगविधिना यथा समुच्चयः तद्वदनयोरपि स्तोत्रयोः एकज्योतिष्टोमार्थत्वेऽपि न व्रीहियववद्विकल्पो न्यायेन सिद्ध्यति दृष्टार्थत्वाभावात् अपितु समुच्चय एव अदृष्टार्थत्वादिति भावः। (८७) **व्यवस्थितेति** । व्यवस्थितत्वं विकल्पे नियतदेशकालकर्तृकत्वम् । कर्तृविशेषनियतं विकल्पमुदाहरति **यथेति** । **द्वितीयेति** । द्वितीयप्रयाजक्रमे पठ्यमानः तनूनपान्मन्त्रः अयम् - **होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपां मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनुक्तवेत्वाज्यस्य होतर्यजेति** । **नाराशंसमन्त्रस्तु होता यक्षन्नराशंसंनृशस्त्रं नृः प्रणेत्रं गोभिर्वपावान् स्याद्वीरैः शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यजेति** । **एकार्थत्वादिति** । यथासङ्ख्यपाठरूपस्थानप्रमाणसहितेन लिङ्गेन उभयोरपि मन्त्रयोरेक-द्वितीयप्रयाजाङ्गत्वादित्यर्थः । व्यवस्थापकं प्रमाणमाह **सचेति** । वसिष्ठगात्रोत्पन्ना वासिष्ठाः । **नाराशंसः** नराशंसप्रकाशकमन्त्रसाध्यः तत्प्रकाश्यनराशंसदेवताक इति । एवं तनूनपादित्यपि व्याख्येयम् ।

एवं विधिनामधेयार्थवादमन्त्रभेदेन वेदस्य चतुर्धाविभागेन कृतं प्रामाण्यनिरूपणं पृथक् पृथगेव कीर्तयन्नुपसंहरति **तदिति** । **चोदनेति**। चोदनेति अपरः पर्यायः येषां तानि तेषामिति। अत्र भाष्यं चोदनेति क्रियायाः प्रवर्तकं वचनमाहुरिति। अंशेति। भाव्यं करणमितिकर्तव्यता च त्रयोंऽशाः। नैयायिकानामिव न याथार्थ्यलक्षणं प्रामाण्यं तान्त्रिकाणामिष्टम् अपितु प्रमाणान्तरानधिगतार्थगमकत्वलक्षणमिति स्मारयन्नाह **अलौकिक** इति। प्रत्यक्षादिभिरधिगन्तुमनर्ह इत्यर्थः । वेदप्रामाण्योपयोगिविचारान्तरं तत्प्रवणैर्मूलग्रन्थेष्वनुसन्धेय-मित्यभिप्रेत्याह **स्थितमिति** । अत्र

नामधेयादीनां प्रामाण्यसिद्धेर्विध्यधीनत्वात् सर्वतोऽपि विधिप्राधान्यं सूचयितुं विधिवाक्यानां विशिष्टभावनाविधायकतया उद्भिदादीनां नामतयेत्येकवाक्यतामकृत्वा **विशिष्टभावनाविधायकत्वात् प्रामाण्यमि**ति तन्मात्रे पृथग्वाक्यं कृतमिति विभावनीयम् । ननु प्रयोगकालेऽर्थस्मरणमात्रार्थानां मन्त्राणामधिगतार्थविषयत्वात् अनधिगतार्थगमकत्वरूपं प्रामाण्यं कथमिति चेदुच्यते । व्रीहिभिरेव यष्टव्यमितिवत् मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनेन तज्जन्यादृष्टप्रमापकत्वात् प्रामाण्यमिति । पदार्थविधया प्रामाण्यमिति तु सर्वदोषविनिर्मुक्तं लक्षणमिति **मन्त्राधिकरणकौस्तुभे** स्पष्टम् ।

**स्मृतयोऽपीति** ॥ वेदार्थानुभवजनितं मन्वादीनां धर्मज्ञानं स्मृतिः, तत्प्रयोज्यत्वात् तत्कृतं निबन्धनमपि स्मृतिः । ननु कथं वेदवत् स्वतन्त्रप्रामाण्यमासां न भवतीत्यत्राह **मन्वादीति** । ननु पुरुषाणामलौकिकार्थदर्शनशक्त्यभावात् न तद्वचनं तत्र प्रामाण्यमर्हति । तथापि चेत् तत् प्रमाणमिष्यते बौद्धाद्यागमस्यापि तर्हि धर्माधर्मयोः प्रामाण्यं स्यादित्यत्राह **वेदमूलकत्वादिति** । तत्सम्भवादित्यर्थः । मन्वादयो हि वैदिकाः स्वनिबन्धनानां वेदैकमूलकत्वं स्वयमेवाचक्षते। अन्यत्र तु तत् दुर्वचम् । अवैदिकमप्रमाणञ्च तदित्येव शिष्टानां स्मरणात् तैरेव तदनभ्युपगमात् प्रत्युत वेदनिन्दनादिति भावः । माघकृष्णाष्टम्यां कर्तव्यः पित्र्यकर्मविशेषोऽष्टका नाम । एवं स्मृत्यधिकरणसिद्धं स्मृतिप्रामाण्यं सङ्गृहितम् । अथेदानीं श्रुतिस्मृत्यो र्विरोधे सति स्मृतेः प्रामाण्यं न भवतीति तदनन्तरे विरोधाधिकरणे सिद्धमर्थमाह (८८) **औदुम्बरीति** । ज्योतिष्टोमे सदोनाम्नि मण्डपे उदङ्मुखमुपविश्योद्गायत उद्गातुः पश्चादपाश्रयार्था भूमौ

निखाता उदुम्बरवृक्षशाखा औदुम्बरी। **प्रत्यक्षेति**। प्रत्यक्षा च सा श्रुतिश्च तया विरुद्धत्वात्। **सर्वेति**। ननु सर्ववेष्टने कृतेऽपि न स्पर्शमविरोधः। वाससि स्पृष्टे तद्वेष्टितस्य काष्ठस्य स्पृष्टत्वात्। यथा वस्त्रेण परिवीतश्चण्डालः वास उपरिस्पर्शेनैव स्पृष्टो भवति तद्वत्। न हि नायं तदा स्पृष्ट इति वक्तुं शक्यम्। तत्स्पर्शनिमित्तकस्नानानापत्तेः। नहि वासोऽन्तरितं चण्डालं स्पृष्ट्वा न स्नान्तीति चेत् अन्यस्मिन् स्पृष्टे अन्यत् स्पृष्टं भवतीत्यनुपपन्नम्। अन्यथा भूमिस्पर्शेनैव तत्संयुक्ताया औदुम्बर्यः स्पृष्टत्वोपपत्तेः स्पर्शविधायकवाक्य-वैयर्थ्यप्रसंगात्। कथं तर्हि चण्डालस्पर्शोपपत्तिः। उच्यते। चण्डालस्पर्शवत् तद्वासः स्पर्शोऽपि तत्राशुद्धिहेतुः अत एव तेनाध्रियमाणस्य भूतलवृत्तेरपि चण्हालस्पृष्टस्य वाससः स्पर्शे शिष्टाः स्नान्तीति न तत्र चण्डालस्पर्शस्या-वश्यकतेति **वार्तिककारपादाः**। एवं प्रत्यक्षवेदविरोधे स्मृतेरप्रामाण्यमुक्तम्। पुनरपि भाष्यकारेण प्रत्यक्षश्रुतिविरोधाभावेऽपि दृष्टहेतुसम्भवे स्मृतेरप्रामाण्यं भवतीति **हेतुदर्शनाच्चेति** सूत्रेणाधिकरणान्तरं कृत्वा सिद्धान्तितम्। तदाह **वैसर्जनेति**। **श्रुत्यविरुद्धत्वेऽपीति**। श्रुतिविरोधादेव हि सर्ववेष्टनस्मृतेरप्रामाण्यमुक्तम् तस्याभावात् अष्टकादिस्मृतिवदेवात्र प्रामाण्यं भवितुमर्हतीति पूर्वपक्षाभिप्राय इहाभिसंहितः। **लोभेति**। **अयमाशयः**। न दृष्टे हेतौ हेत्वन्तरानुमानं क्रमते। दृष्टश्चात्र लोभ एव हेतुः। वस्त्रलोलुपेन किलाध्वर्युणा यजमानस्य कर्मसमाप्तिश्रद्धां तदनन्तरभावि-स्वाच्छन्द्यञ्च दृष्ट्वा कर्ममध्ये स्वेन यदुक्तं तत्सर्वं विश्वस्य करिष्यतीति बुध्या स्मृतिरियं प्रवर्तिता स्यात्। एवं दृष्टमूलकत्वसम्भवे अत्यन्तादृष्टश्रुति-कल्पनमन्याय्यमिति।

**तथेति**। स्मृतिवदित्यर्थः। यथा वैदिककर्तृकत्वात् वैदिकैः

तदर्थस्य धर्मत्वेन परिगृहीतत्वाच्च वेदमूलकत्वेन स्मृतीनां प्रामाण्यं, तथा वैदिककर्तृकाणां धर्मत्वेनाभ्युपगतानाञ्च शिष्टाचाराणां प्रामाण्यं निर्विघातमिति भावः। एतदभिप्रेत्यैव **शिष्टाचार** इत्याह नतु केवलमाचार इति। स्मृत्यपेक्षया विशेषमाह **स्मृतिद्वारेति**। स्मृतिद्वारकं श्रुतिमूलकत्वम्। आचारस्य स्मृतिर्मूलं तस्याः श्रुतिर्मूलमिति। तदिदमुपपादयन्ति। प्रत्ययिततरा हि मन्वादयः। तत्स्मरणं गुणवत्तरकर्तृकत्वात् इतरजनचरित्रात् विस्रम्भणीयतरमिति व्यक्तमेतत्। अपि च आचरितॄणां जनानां स्वयमितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्युद्धरणेनार्थं प्रतिपत्तुमसामर्थ्यात् अवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा समर्पितमर्थमनुतिष्ठन्तीत्यङ्गीकार्यम्। अतश्चाचारस्य स्मृतिकल्पनेन श्रुतिकल्पकत्वमिति। **मातुलेति**। सन्देहोपपत्यै अत्र शिष्टपदम्। न ह्येवंविधाचारस्य अप्रामाण्यप्रसक्तिरस्तीति। अप्रामाण्यहेतुं स्मृतिविरोधमुपपादयति **मातुलस्येति। मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवराञ्चैव त्यक्त्वा चान्द्रायणं चरेदिति** स्मृतिः।

(८९) **यागेति**। सोमेन यजेत, हिरण्यमात्रेयाय ददाति, दाक्षिणानि जुहोतीति, ज्योतिष्टोमप्रकरणे श्रुतानामिति शेषः। **शब्दान्तरादिति**। शब्दान्तरप्रमेयो भेद इत्यर्थः। ननु अन्यः शब्दः शब्दान्तरम्। न तेन तत्प्रतिपाद्यार्थभेदः **सिद्ध्यति**। गच्छति व्रजतीति शब्दान्तरत्वेऽप्यर्थभेदाभावादित्याशङ्क्य न स्वरूपेण भेदः शब्दान्तरमित्यत्र विवक्षितः, किन्तु एकार्थावाचकत्वेन। अपर्यायत्वेनेति यावत्। तत्र नोक्तदोषप्रसङ्ग इति समाधानाभिप्रायेणोक्तम् **अपर्यायशब्दप्रतिपाद्यत्वादिति**। अपर्यायैः समानार्थकभिन्नैः शब्दैः यजति, ददाति,

जुहोतिरूपैः प्रतिपाद्यत्वात्। एतत्प्रतिपाद्यत्वात् शब्दान्तरप्रेमयो भेदो भवतीत्यन्वयः ।

ननु यागदानहोमानां भेदस्य सुप्रसिद्धत्वादभेदपूर्वपक्षानुत्थानात् तन्निराकरणपरतया शब्दान्तरन्यायनिरूपणं शास्त्रकाराणां निष्प्रयोजनमिति चेदुच्यते। भावनाभेद एव द्वितीयाध्यायार्थः। तदुपयोगितया तु कर्मभेदस्य तत्र प्रमाणानाञ्च निरूपणमिति स्थितम् । तत्र प्रथमं प्रमाणविशेषेण कर्मभेदस्य तेन च भावनाभेदस्य साधने बुद्धिक्लेशः स्यादिति शब्दान्तरेण प्रसिद्धमेव कर्मभेदमुपादाय शब्दान्तराधिकरणे प्रत्ययांशः सर्वत्रैकरूपः तदर्थश्च तदभेदादभिन्नो भवितुमर्हतीति भावनैक्य पूर्वपक्षमात्रं कृत्वा न हि समुदितेभ्यो धातुभ्यः प्रत्ययः श्रूयते प्रत्येकं तु धातुभ्यः प्रत्ययः श्रूयते तेन नैकभावनासम्भव इति तन्निरासेन भावनाभेदं सिद्धान्तयित्वा तदनन्तरं कर्मभेदकप्रमाणानि अभ्यासादीनि निरूपितानि । कर्मभेदे सिद्धे **शब्दान्तराधिकरण**न्यायेन भावनाभेदः स्वयं सिद्ध्यतीति । तस्मात् प्रसिद्धस्यैव भेदस्य शब्दान्तरेण सिद्धिकथनमदोषः । **स्वस्वत्वेति** । स्वस्वस्वत्वं तस्य। सा पूर्वं यस्य तत्। तादृशं परस्वत्वस्यापादनमिति।

अभ्यासात् भेद उच्यते। तत्र समिधो यजतीत्यादीनि पञ्चवाक्यानि विषयः। अत्र किं मिथो भिन्नाः पञ्च भावना विधीयन्ते उत अभिन्ना एकैवेति विचारः । तदर्थमपि यजिधातूपात्तानां कर्मणां भेदोऽस्ति न वा इति विचारयितव्यम्। यदि धात्वर्थानां न भेदस्तर्हि भावनाभेदोऽपि न भवति। अथ तद्भेदः एतद्भेदोऽपि भवतीति फल फलिभावः । उत्तरोत्तरविचारस्य पूर्वपूर्वविचारस्य च प्रयोजकप्रयोज्यभाव एव फलफलिभाव इत्युच्यते।

तत्र पूर्वःपक्षः - भावना न भिद्यते, धात्वार्थभेदाभावात्। तदपि कुतः। पञ्चस्वपि वाक्येषु यजिधातोरेव श्रवणात्। यथाऽऽहुः- **प्रत्यक्षप्रत्यभिज्ञानात् शब्दैकत्वं प्रतिष्ठितम्। तदेकत्वात् तदर्थोऽपि न भेदं प्रतिपद्यते**। इति। नन्ववं सति समिधो यजतीति वाक्येन यागभावनायां विहितायां वाक्यान्तरैः किं विधीयत इति चेत् समिद्यागे देवतारूपगुणस्तेषु विधीयत ब्रूम इति। एवं पूर्वपक्षे सिद्धान्तमाह ग्रन्थकारः **समिध** इत्यादिना। **अयमभिप्रायः**- समिधो यजतीत्यत्र समित्संज्ञकयागविधानं हि पूर्वपक्षिणेष्यते। तत्र समित्संज्ञकत्वं यागस्य कथं सिद्ध्यति। समिधो अग्न आज्यस्य वियन्त्विति मन्त्रवर्णेन समिद्देवतायाः प्राप्तत्वात् अग्निहोत्रमितिवत् तत्प्रख्यन्यायेन नामधेयत्वमितिचेत् तर्हि **तनूनपादग्न आज्यस्य व्येतु इडो अग्न आज्यस्य वियंतु बर्हिरग्न आज्यस्य व्येतु स्वाहाऽग्निम्** इत्यादि मन्त्रैः एष्वपि चतुर्षु वाक्येषु तनूनपादादिपदानां नामधेयत्वसिद्ध्या गुणविधित्वं दुर्वचम्। एवं सर्वत्र मान्त्रवर्णिकदेवताप्राप्तिसाम्येन इह कर्मविधानं इह गुणविधानमिति नियामकाभावे विधेर्धात्वर्थविधायकत्वमवश्यम्भावि। अन्यथा यस्य कस्यचिदप्यविधाने विधेर्वैयर्थ्यापत्तेः इत्यनन्यपरविधिः पुनः श्रवणरूपादभ्यासात् एकरूपयजिधातूपात्तानामपि कर्मणां मिथो भेद आवश्यकः। एवं कर्मभेदे सति तदवच्छिन्नानां भावनानामपि भेदसिद्धिरिति। **शास्त्रदीपिकादिषु** विस्तरो द्रष्टव्यः।

**व्यर्थमिति**। अप्रवृत्तप्रवर्तनं विधानम्। तत्र एकेनैव विधिवाक्येन प्रवृत्तौ बोधितायाम् इतरन्निरर्थकमिति भावः। **पूर्वेति**। समिद्यागापेक्षया तनूनपाद्यागो भिन्नः, एतदुभयापेक्षया इड्यागो भिन्नः। एतत्त्रयापेक्षया

बर्हिर्यागो भिन्नः। तच्चतुष्टयापेक्षया स्वाहाकारयागो भिन्न इत्यर्थः। (९०) **अविशेषेति**। न विद्यते विशेषो यस्याः साऽविशेषा। तादृशी पुनःश्रुतिः पुनःश्रवणं तद्रूपात्। **यजतीति**। यजतिपदोपात्तविध्यभ्यासादित्यर्थः।

**तिस्र** इति। अत्रापि भावनाभेदाभेदावधारणार्थतया कर्मभेदोऽस्ति न वेति विचारः। पूर्ववदभ्यासाभावात् कर्मभेदो नास्तीति पूर्वः पक्षः। न च तिस्र इति त्रित्वसङ्ख्यानुपपत्तिः। एकस्यैव कर्मणस्त्रिरभ्यासमात्रपरतया तदुपपत्तेः। यथाऽऽहुः - **आख्यातस्य सकृच्छ्रुत्या कर्मैकत्वेऽवधारिते। सङ्ख्यासम्पत्तिरभ्यासात् प्रयाजैकादशत्ववदिति**। अत्र सिद्धान्तः - यदि त्रित्वान्वयात् पूर्वम् अत्रैकं कर्म विधीयत इत्यवधारितं स्यात् तदा पश्चादन्वीयमानं त्रित्वमभ्यासमात्रपरं भवेत्। अत्र तु उत्पत्तिवाक्य एव त्रित्वान्वयात् ततः पूर्वमेकत्वस्य होमेऽनवगतत्वात् त्रित्वसङ्ख्यानुरोधेन परस्परभिन्ना एव त्रयो होमा विधीयन्ते। एवं कर्मभेदे भावनाभेदः पूर्ववदिति।

**अथैष** इति। ज्योतिष्टोमं प्रकृत्य श्रुतमिदम् अथैष इत्यादिकं विषयवाक्यम्। 'तत्र किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते उत कर्मान्तराण्येव ज्योतिरादि नामकानि सहस्रदक्षिणाविशिष्टानि विधीयन्त इति संशयः'। गुणविधित्वे ज्योतिष्टोमभावनापेक्षया भावनान्तरं न सिद्ध्यति। कर्मान्तरपक्षे तदपेक्षया त्रीणि भावनान्तराणीति फलफलिभावः। एष इति प्रकृतपरामर्शिना एतच्छब्देन ज्योतिष्टोमस्योपस्थितेः, वसन्ते वसन्ते ज्योतिषा यजेतेति ज्योतिष्टोमस्यापि ज्योतिरिति व्यवहारात्, त्रिवृदादिसर्वस्तोमवत्वेन च

ज्योतिर्विश्वज्योतिस्सर्वज्योतिश्शब्दैस्तदभिधानौचित्यात् तदुद्देशेनैवात्र गुणो विधीयत इति पूर्वः पक्षः । **अन्यायश्चानेकशब्दत्वमिति** न्यायेन एकस्यार्थस्य एक एव वाचकशब्दो युक्तः । तत्र सोमयागस्य प्रकृतस्य ज्योतिष्टोम इति संज्ञायाः स्थितत्वात् ज्योतिरादिसंज्ञान्तरैः स्वरसतो ज्योतिष्टोमातिरिक्त एव कर्मणि बुद्धिः क्रियते । तत्र बलवद्बाधकाभावात् सहस्रदक्षिणारूपो गुणोऽपि न ज्योतिष्टोमं गच्छति । एष देवदत्त इत्यप्रकृतेऽप्येतच्छब्ददर्शनात् न तदनुरोधेन प्रकृतज्योतिष्टोमाभिधानावश्यकतेति गुणविशिष्टकर्मान्तरविधिरेवेति सिद्धान्तः।

नन्वत्र ज्योतिरादीनां संज्ञात्वे सिद्धे उक्तरीत्या तेन भेदो भवेत्। तस्य तु कथं सिद्धिरिति चेदत्राहुः । एतेन सहस्रदक्षिणेन यजेतेति वाक्ये एतेनेत्येतच्छब्दार्थस्य तृतीयया सामानाधिकरण्यावगमेन यागविशेषणत्वं प्रतीयते । प्रकृतपरामार्शी चैतच्छब्दः पूर्ववाक्ये ज्योतिरादिपदैः प्रतिपादितमर्थं तेनैव रूपेण प्रतिपादयति । तेन एतच्छब्दस्य यजिसामानाधिकरण्यं ज्योतिरादीनां यजिसामानाधिकरण्यपर्यवसितमिति उद्भिदादिवत् नामधेयत्व सिद्धिरिति । अन्येऽप्याहुः । संज्ञात्वमेव तावदेवं सिद्ध्यति । ज्योतिरादि-शब्दास्तावन्न ज्योतिष्टोमे गुणविधयः । उत्पत्तिशिष्टसोमावरोधेन तत्र गुणविधानासम्भवात् । अतः कर्मान्तरत्वापेक्षया लघुभूतं संज्ञत्वं तावत् प्रथमतोऽवधार्यत इति ।

एवं प्रथमं संज्ञात्वसिद्धिमभिप्रेत्यैवाह **ज्योतिराद्याख्यानां त्रयाणां यागानामिति** । ज्योतिरादय आख्या येषां तेषामिति । **ज्योतिष्टोमेति** । ज्योतिष्टोम इति संज्ञा ज्योतिष्टोमसंज्ञा तदपेक्षयेति अस्य **पृथगित्यत्रान्वयः** । संज्ञया भेदमुपसंहरति **इतीति** ।

गुणप्रमाणकं भेदं वदन् यस्मात् कर्मणो भेदो यस्य च तदुभयविधायकं वाक्यमुदाहरति **तप्त** इति । अत्र भेदप्रतियोगिकर्म-विधानमुपपादयति (९१) **सा वैश्वदेवीति** । **विश्वेति** । विश्वे देवा इति देवता विश्वदेवदेवता आमिक्षारूपं द्रव्यम् आमिक्षाद्रव्यम् तयोः सम्बन्धः तेनानुमितः । भिन्नं कर्माह **वाजिभ्य** इति । वाजिदेवत्यं वाजिनद्रव्यकञ्च यत् कर्मान्तरं तत् । अत्र वाजिभ्यो वाजिनमिति वाक्यं विषयः । किमिदं सा वैश्वदेव्यामिक्षेति वाक्यविहितयागापेक्षया यागान्तरविधायकम् उत तस्मिन्नेव यागे गुणविधायकमिति पूर्वपक्षः । यागान्तरविधायकमिति सिद्धान्तः । अयं सिद्धान्तो **वाजिभ्य** इत्यादिनोक्तः । पूर्वपक्षं तु निरस्यति **न त्विति** । तत्र युक्तिमाह **पूर्वेत्ति** । आमिक्षारूपेण **गुणेनावरुद्धत्वं** निराकाङ्क्षीकृतत्वम् । तत्र पूर्वविहिते वैश्वदेवयागे । **निवेशायोगात्** करणत्वेन सम्बन्धायोगात् । एकस्मिन् कर्मण्यनेकद्रव्यसम्बन्धं सिद्धान्ती निषेधतीति मत्वा व्रीहियवस्थलमुपादाय प्रत्यवतिष्ठमानं पूर्वपक्षिणं प्रत्याह **न चेति** । यत्र विधीयमानयोर्द्रव्ययोः समबलत्वं तत्रानेकद्रव्यसम्बन्ध एकस्मिन् कर्मणि नानुपपन्नः । यत्र त्वेकं प्रबलम् अपरं दुर्बलमिति विषमबलत्वं तत्रैकस्मिन् कर्मण्यनेकद्रव्यसम्बन्धो विकल्पेनापि न भवितुमर्हतीत्याह **वाजिनेति** । **समेति** । समं तुल्यबलं तुल्यकालं वा यथा तथा शिष्टे समशिष्टे तयोर्भावः तदभावात् । यथा व्रीहियवयोरुभयोरपि उत्पन्नविहितत्वेन समशिष्टत्वं तथा वाजिनामिक्षयोरभावात् तद्वद्विकल्पो न युज्यतं इत्यर्थः । ननु मास्तु समशिष्टत्वं विकल्पः, परम् अस्त्वित्यत्राह **विषमेति** । विषमं यथा तथा शिष्टे तयोः । ननु कथमामिक्षावाजिनयोः विषमशिष्टत्वमित्याशङ्क्य आमिक्षा उत्पत्तिशिष्टा वाजिनं तु उत्पन्न-

शिष्टमिति विषमशिष्टत्वमित्याह **वैश्वेति** । अत्र उत्पतौ उत्पत्तिवाक्ये शिष्ट इति विग्रहः प्रदार्शितो भवति । **उत्पन्ने कर्मणीति** । सप्तम्या उद्देश्यत्वमर्थः। अर्थात् सिद्धं विधायकमाह **वाक्यान्तरेणेति** । अत्र उत्पन्ने उत्पन्नोद्देशेन शिष्टः उत्पन्नशिष्ट इति विग्रहोऽभिसंहितः । वस्तुतस्तु कर्मण उत्पत्तौ सत्यां शिष्ट उत्पत्तिशिष्टः। उत्पत्तिकाल एव विहित इत्यर्थः । उत्पन्ने सति शिष्ट उत्पन्नशिष्टः । उत्पत्त्यनन्तरं शिष्ट इत्यर्थः । इत्यैकरूप्येण वर्णनं युक्तमिति ध्येयम् । नन्वनेन उत्पत्तिशिष्टत्वोत्पन्नशिष्टत्ववैषम्येण तयोर्विकल्पेनान्वयस्य किमायातमित्याशङ्क्य उत्पत्तिशिष्टत्वे प्राबल्यमुत्पन्नशिष्टत्वे दौर्बल्यम् तत्र समबलयोरेव विकल्पः, विषमबलयोस्तु प्रबलेन दुर्बलस्य बाधात् विकल्पो न भवतीति समादधान आह **तयोरिति** । उत्पत्तिशिष्टोत्पन्नशिष्टयोरित्यर्थः । प्राबल्ये युक्तिमाह **कर्मेति** । उत्पन्नशिष्टस्य दौर्बल्यं वदन्नेव कर्मभेदकत्वमुपपादयति **उत्पन्नेति** । अनन्तरेति । वैश्वदेवयागे आमिक्षाऽन्वयादनन्तरं विधीयमान इत्यर्थः । दुर्बलत्वे साक्षाद्धेतुमाह **विलम्बितत्वेनेति** । ननु यदि वाजिनरूपो गुणः पूर्वस्मिन् कर्मणि न निविशते तर्हि तस्य वैयर्थ्यमेव स्यात् । न तु क्वचित् कर्मणि सम्बध्य भेदबोधकत्वम् । स्ववाक्ये कर्मवाचकपदाभावादित्याशङ्क्य अत्रापि कर्मानुमेयमित्यभिप्रयेण द्रव्यस्य देवतासम्बन्धमाह **वाजीति** । **आनयतीति** । आपादयतीत्यर्थः । गुणाद्भेदमुपसंहरति **इतीति** । आमिक्षावाजिनपदयोरर्थमाह **तत्रेति** । **तत्र** दध्यानयनसंस्कृते पयसि । अथवा तत्र सा वैश्वदेवीति वाक्ये । (९२) आमिक्षापदवाच्यं घनीभूतं पयः वाजिनपदवाच्यं शिष्टं जलमित्यन्वयः । शिष्टं घनीभूतादितरत् ।

विषयवाक्यमुदाहरति **कुण्डपायिनामिति** । **उपसद्भिश्चरित्वेति** ।

उपसन्नामककर्मविशेषाननुष्ठायेत्यर्थः । अस्मिन् वाक्ये किं यावज्जीवमग्नि-होत्रं जुहोतीति नित्यतया विहितमग्निहोत्रमेव प्रयोजनान्तरार्थं प्रतिपाद्यते । उत तदपेक्षया कर्मान्तरमिति संशयः । प्रकणान्तररूपप्रमाणेन कर्मान्तरमेव विधीयत इति सिद्धान्तः । तमाह **अत्रेत्यादिना** । **प्रसिद्धेति** । प्रसिद्धञ्च तत् अग्निहोत्रञ्च प्रसिद्धाग्निहोत्रं तस्य धर्मा इव धर्मा यस्य तत् प्रसिद्धाग्निहोत्रधर्मकम् । पूर्वपक्षं निरस्यति (९३) **नत्विति** । युक्तिमाह **प्राप्त** इति । प्रकरणान्तरात् भेदमुपसंहरति **इतीति** । ननु किमिदं प्रसिद्धाग्निहोत्रमिति तत्राह **प्रसिद्धेति** । नियमेन कर्तव्यं **नैयमिकम्** । नैयमिकशब्दं विवृण्वन्नाह (९४) **नित्येति** । द्वितीयाध्यायार्थमुपसंहरन् वृत्तं कीर्तयति **तदेवमिति** ।

**तत्रेति** । निरर्थकमिदं वाक्योपक्रममात्रफलम् । अत्र सचेति पाठान्तरानुरोधेन प्रतीकः परिष्कारे गृहीतः । **क्रत्वर्थ इति** । क्रतवे क्रत्वर्थः । एवं सर्वत्र । **उभयेति** । क्रतुपुरुषोभयार्थ इत्यर्थः । **फलमिति** । अस्य पुरुषेणार्थ्यमानत्वरूपं वास्तवं पुरुषार्थत्वं वेदितव्यं न तु यागस्येव पुरुषस्य किञ्चिदुपकाराय उपादीयमानत्वरूपम् । अत एव फलस्यात्र पुरुषार्थत्वकथनं भाक्तमिति परिष्कारे । **उभयरूपमिति** । क्रत्वर्थत्वपुरुषार्थत्वोभयं रूपं यस्य तदुभयरूपम् । क्रत्वर्थत्वपुरुषार्थत्वाभ्याम् उभयं द्विविधं रूपं यस्येति वा । पूर्वं प्रकरणनामकेनाङ्गत्वप्रमाणेन प्रयाजादीनां क्रत्वङ्गत्वं प्रतिपादितम् । ज्योतिष्टोमादीनामपि स्वर्गकामकर्तृकत्वेन पुरुषार्थत्वं पूर्वमेव प्रतिपादितं भवति । अतस्तदुभयमुपेक्ष्य दध्यादेरुभयार्थत्वं निरूपयति **दध्नेति** । ननु दध्न उभयरूपत्वमपि प्रागेव निरूपितं भवति दध्ना जुहोति दध्नेन्द्रिय-कामस्य जुहुयादिति वाक्यद्वयार्थस्य निरूपितत्वादिति चेत् । सत्यम् ।

तथाऽपि तदपर्यालोचयन् कथमेकस्योभयार्थत्वमिति यदि कश्चिदाशङ्कते तत्रोभयत्र प्रमाणसत्वादुभयार्थत्वमिति प्रतिबोधनार्थमयमारम्भः । दध्ना जुहोतीति क्रत्वर्थत्वं दध्नेन्द्रियकामस्येति पुरुषार्थत्वं तस्मादुभयरूपत्वमिति । अत एव गृहीतार्थप्रतिपादनप्रवृत्त इव ग्रन्थकारो न प्रतिपादयति । किन्तु पूर्वमेव विदितमिति मन्वान इव क्रत्वर्थत्वात् पुरुषार्थत्वादित्याह ।

**फलेति** । फलेनासंयुक्तं फलासंयुक्तं वाक्यं फलवाचकपदाघटितं वाक्यमित्यर्थः । उक्तोभयार्थत्वसाधकं चतुर्थतृतीयतृतीयाधिकरणसूत्रमुदाहरति **तदिति** । संयोगपदस्यार्थमाह **संयोग** इति । संयुज्यते गुणकर्मादिकं तादर्थ्येन सम्बध्यतेऽनेनेति करणव्युत्पत्त्या संयोगपदस्य वाक्यमर्थः । संयोगपृथक्त्वमित्यस्य विग्रहं पृथक्त्वपदस्यार्थं च प्रदर्शयन्नेव सूत्रस्यार्थमाह **तस्येति** । सूत्रे नियामकमित्यध्याहरणीयमित्यभिप्रायेणाह **नियामक** इति । भेदशब्दानुरोधेन **नियामक** इति पुंल्लिङ्गम् । एतदन्तं प्रयोजकप्रयोज्यभावप्रतिपादनोपयोगितया वक्तव्यमुक्तमिति बोद्धव्यम्।

**पुरुषार्थ** इति । ज्योतिष्टोमादाविति शेषः । ननु कारणपर्यायत्वेन प्रयोजकपदं दृष्टम् । दण्डो घटस्य प्रयोजक इति व्यवहारात् । तत्र स्वर्गादिफलं ज्योतिष्टोमादि यागस्य प्रयोजकमित्यनुपपन्नम् । न हि फलेन ज्योतिष्टोमादि जायते । प्रत्युत ज्योतिष्टोमादिना फलं जायते । तेन प्रयोजकमिति किमत्राभिप्रेतमिति शिष्यप्रश्नमनुवदति **प्रयोजकत्वं नामेति** । उत्तरमाह **अन्विति** । प्रयोजकत्वमित्यस्य अनुष्ठापकत्वमित्यर्थ इत्यध्याहृत्य योजनीयम् । प्रयोजकप्रयोज्यभावसमन्वयं करोति (९५) **दर्शादिविधिरिति** । (९६) **तुषेति** । व्रीहीणामुपरित्वचस्तुषाः । **उपवापः**

अपनयनम् । तप्ते पयसि दध्यानयतीति वाक्येनामिक्षाङ्गत्वेन विहितस्य दध्यानयनस्यनुषङ्गेण वाजिननिष्पादकत्वेऽपि तदङ्गत्वं न भवति । प्रमाणाभावात् । तेन तत्र प्रयोजकप्रयोज्यभावो मास्तु । कपालस्य तु पुरोडाशकपालेन तुषानुपवपतीति तृतीयाश्रुत्योपवापाङ्गत्वावगमात् तुषोपवापः कपालस्य प्रयोजको भवितुमर्हतीत्यधिकाशङ्कामत्राभिप्रेत्याह **तथापीति** । अङ्गत्वेन विधाने सत्यपीत्यर्थः । अङ्गत्वं प्रयोजकप्रयोज्य-भावेऽनपेक्षितम् । **अन्यार्थमुपात्तेनैव स्वोपकारसिद्धौ स्वयमप्रयोजको भवतीति** न्यायः । सोऽयं वाजिन इव तुषोपवापेऽपि तुल्य इति मनसि कृत्वाऽह **पुरोडाशार्थमिति** ।

**चोद्यत** इति । बोध्यत इत्यर्थः । **तत्रेति** । साङ्गस्य प्रदानस्य कर्तव्यत्वे सतीत्यर्थः । **प्रधानानामिति** । बहुप्रधानस्थलाभिप्रायेण बहुवचनम् । **तदिति** । तेषाम् अङ्गानां प्रधानानाञ्च क्रमः तत्क्रमः तस्य नियामकमिति । यद्वा **तदिति** पृथक्पदमव्ययं तत्रेत्यर्थकम् । किमिति क्षेपे । प्रमाणाभावादनियम इति पूर्वपक्षी मन्यते । **श्रुत्यादीनामेवेति** । एवकारः प्रमाणाभावव्यवच्छेदार्थः । गृहपतिमिति। बहुयजमानके सत्रयागे इतरेषु षोडशसु ऋत्विक्स्थानापन्नेषु यो यजमानस्थाने वर्तते स गृहपतिरित्युच्यते । (९७) **इत्यादिविधिवाक्येति** । इत्यादीनां विधिवाक्यानां पाठः तस्य क्रमात्। यवागूं पचति अग्निहोत्रं जुहोतीत्येव यदि पाठक्रमः स्यात् तर्हि पाठक्रमादेव पूर्वं पाकः, पश्चात् होम इति सिद्धेरर्थक्रमपर्यन्तमगन्तव्यं स्यात् । तस्मात् विपरीतक्रमप्रसक्तिं प्रदर्श्य निरस्यति **पाठक्रमं त्यक्त्वेति** । अग्निहोत्रं जुहोति यवागूं पचतीति पाठेन यः क्रमः प्रसक्तः प्रथमं होमः, पश्चात् यवागूपाक इति तं क्रमं त्यक्त्वेत्यर्थः । अत्र हेतुमाह **पाकात्**

**पूर्वमिति** । अत्रापि हेतुमाह **यवागूपाकस्य होमार्थत्वेनेति**। यवागूं पचतीत्यत्र द्वितीयया पाकस्य यवागूनिष्पत्त्यर्थत्वं प्रतीयते । यवाग्वाश्च यवाग्वाऽग्निहोत्रं जुहोतीति होमर्थत्वं श्रुतम् । तेन प्रोक्षणादेर्व्रीह्यादिद्वारा यागार्थत्ववत् अत्र पाकस्य यवागूद्वारा होमार्थत्वमविरुद्धम् । एवञ्च पाकनिष्पन्नया यवाग्वा होमस्य कर्तव्यत्वात् होमात्पूर्वं पाकाभावे यवाग्वभावात् तत्साध्यो होमः कर्तुं न शक्यत इति पूर्वं होमः पश्चात् पाक इति पाठगम्यः क्रमस्त्यक्तव्य इत्यर्थः । एवमत्र त्यक्तव्यतया वक्तव्यस्य पाठक्रमस्य परिज्ञानायैव मूलग्रन्थेष्वर्थक्रमादनन्तरनिरूपितमपि पाठक्रममत्र ग्रन्थकारस्ततः पूर्वं निरूपयामासेत्यपि शक्यं वक्तुम् । **तेनेति** । अर्थक्रमस्य स्वीकर्तव्यत्वेनेत्यर्थः ।

**सप्तदशपश्विति** । सप्तदश पशवो द्रव्याणि येषां ते सप्तदशपशुद्रव्यकाः । प्रजापतिर्देवता येषां ते प्रजापतिदेवताकाः । एवं बहुव्रीहिद्वयादनन्तरं सप्तदशपशद्रव्यकाश्च ते प्रजापतिदेवताकाश्चेति विशेषणोभयपदकर्मधारय समासं कृत्वा पुनः तेच ते सप्तदशयागाश्चेति विशेषणपूर्वपदकर्मधारयः । **तत्रेति** । उक्तसप्तदशयागप्रयोग इत्यर्थः । (९८) **आद्य इति** । उपाकरणं यूपे नियोजनं प्रोक्षणम् अपां पायनं जुह्वाऽञ्जनं पर्यग्निकरणं विशसनमिति पशुसंस्काराः । तेषु प्रथम इत्यर्थः। **यतः कुतश्चिदिति** । यस्मात्कस्माच्वित् पशोरित्यर्थः । **यत्र क्वचित्** यस्मिन् कस्मिंश्चित् पशौ । **येनेति** । यस्य पशोः प्रथममुपाकरणं कृतं तस्य प्रथमं नियोजनं कर्तव्यं यस्य द्वितीयमुपाकरणं कृतं तस्य द्वितीयं नियोजनं कर्तव्यं यस्य तृतीयं तस्य तृतीयमिति सप्तदशपर्यन्तं वेदितव्यम्। नन्वेवं तेनैव क्रमेण कर्तव्यमित्यत्र को हेतुः । किञ्च सप्तदशानामपि पशूनां प्रथमं उपकरण

संस्कारकर्तव्यत्वसिद्धौ तदनन्तरसंस्कारस्तैनैव क्रमेण कर्तव्य इति वक्तुं युक्तम् । तदेव तु न सिद्ध्यति । कथमिति चेत् प्रथमं सप्तदशसु पशुसु यंकञ्चिदुपादाय तस्योपाकरणादि सर्वसंस्कारसमुदायः कृत्वा तदनन्तर-मपरस्य पशोः तद्वत् सर्वसंस्कारसमुदायः तदनन्तरमपरस्य तदनन्तरमपर-स्येत्यभ्युपगन्तव्यत्वात् । अन्यथा प्राकृतक्रमविरोधप्रसङ्गात् । प्रकृतो हि दैक्षयागे एकस्य पशोरुपाकरणनियोजनप्रोक्षणादीन्यव्यवधानेन कृतानि । अत्र यदि प्रथमं सर्वेषामुपाकरणं ततः सर्वेषां नियोजनमित्येकैकः पदार्थः सर्वेषां क्रियेत तर्हि एकैकस्मिन्नपि पशौ उपाकरणनियोजनप्रोक्षणादीनां पश्वन्तरोपाकरणनियौंजनादि-भिर्व्यवधानं भवतीति प्रकृतिदृष्टमव्यवधानं बाधितं भवति । तस्मात् प्रकृतिदृष्टाव्यवधानरक्षणाय कृत्स्नसंस्कारसमुदायः पशुषु प्रत्येकं समापनीयः, नत्वेकं संस्कारं सर्वेषु पशुषु कृत्वा पुनस्तद्वत् संस्कारान्तरमिति पृच्छति । **कथमिति** । प्रमाणानुरोधेनात्र व्यवधानं सह्यमिति प्रतिपादयिष्यन् प्रकृतौ व्यवधाने प्रमाणाभावादव्यवधानमित्याह **प्रकृताविति** । **नियोजनमिति** । क्रियत इति शेषः । **अत्रत्विति** । **अयंभावः** । वाजपेयाङ्गभूतानामेषां सप्तदशानां प्राजापत्यपशूनां वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वचनेन वैश्वदेव्युत्तरकालेऽनुष्ठानविधानेन एककालिकत्वात् साहित्यमावश्यकम्। साहित्यञ्च पशूनां सहोपाकरणं सहनियोजनं सहप्रदानमित्येवंरूपम् । सह युगपदित्यर्थः । तत्र सप्तदशानामपि पशूनामेकस्मिन् क्षणे उपाकरणस्याशक्यत्वात् शास्त्रस्याशक्यार्थ विधायकत्वायोगाच्च सप्तदशसु क्षणेषु सप्तदशानां पशूनामुपाकरणं कर्तव्यम् । एवं सप्तदशक्षणात्मकमेकं कालखण्डमादाय तादृशैककालवृत्तित्वादेव सप्तदशपशूनामुपाकरणं सहानुष्ठितं भवतीति शास्त्रतात्पर्यमित्यवसीयते ।

एवं सहानुष्ठयत्वबोधकवचनबलेनैकं संस्कारं सर्वेषां कृत्वाऽपरः संस्कारस्तथा कर्तव्यः । नत्वेकस्य कृत्स्नसंस्कारकलापं कृत्वाऽपरस्य पशोः तथा करणम् । वचनप्रमितसाहित्यभङ्गापत्तेः । तदिदं पञ्चमाध्याय-द्वितीयपादप्रथमाधिकरणे द्रष्टव्यम् । इत्थं सप्तदशसु क्षणेषु सर्वेषामुपाकरणे कृतेऽष्टादशे क्षणे प्रकृतौ उपाकरणानन्तरकृतं नियोजनमुपस्थितं भवति । तस्य च प्रथममुपाकृते पशौ करणे सति प्रथमक्षणे उपाकरणम् अष्टादशे क्षणे नियोजनमिति तस्मिन् पशौ उपाकरण नियोजनयोः षोडशभिः क्षणैर्व्यवधानं भवति । एवं द्वितीयोपाकृते द्वितीयनियोजिते सति द्वितीयक्षणे उपाकरणम् एकोनविंशेक्षणे नियोजनमिति तत्रापि षोडशभिरेव क्षणैः व्यवधानं भवति । एवमुपाकरणानुष्ठानक्रमेण नियोजनकरणे सति सर्वपशुषु उपाकरण नियोजनयोः षोडशभिरेव क्षणैः व्यवधानं तुल्यं भवति । एवमकृ ।। अष्टादशेक्षणे द्वितीयोपाकृतपशौ नियोजनं कृत्वा एकोनविंशे क्षणे ।थमोपाकृतपशौ नियोजनकरणे सति प्रथमोपाकृतपशौ प्रथमक्षणे उपाकरणम् एकोनविंशक्षणे नियोजनमिति सप्तदशभिः क्षणैर्व्यवधानम् । द्वितीयोपाकृतपशौ द्वितीयक्षणे उपाकरणम् अष्टादशक्षणे नियोजनमिति पञ्चदशभिरेव क्षणैर्व्यवधानमिति वैषम्यमप्रमाणकमापद्यते । प्रथममुपाकृतो हि पशुरितरपशुभिः साहित्यसिध्यर्थं स्वस्य षोडशसु क्षणेषु न्नियोजनाकरणं सहमानोऽपि उपाकरणे सर्वेषां कृते सति ततः परं क्षणमात्रमपि नियोजनविलम्बं न सहते । एवं द्वितीयादयोऽपि षोडशक्षणविलम्बं सहन्ते नाधिकमिति येन क्रमेणोपाकरणप्रकृत्तिस्तेनैव क्रमेण नियोजनादिकं कर्तव्यमिति । **तत्रेति।** षोडशक्षणाधिकक्षणव्यवधानासहिष्णुत्वे सतीत्यर्थः ।

**औपवसथ्यमिति** । यागीया देवताः याग दिनात् पूर्वस्मिन् दिने

यजमानगृहमागत्य वसन्तीति श्रूयते। सोऽयं यजमानसमीपे वास उपवसथः। तदर्हमहः औपवसथ्यमिति। (९९) **तदपीति**। नैतद्विधायकं वचनं किञ्चिदस्ति। किन्तु साद्यस्क्रयस्य एकदिनसाध्यत्वात् पूर्वेद्युः कर्तव्याग्नीषोमीयस्थाने साहित्यं न भवितुमर्हति। आनुबन्ध्यस्थाने तु साहित्येऽग्नीषोमीयसवनीययोः प्रधानप्रत्यासत्तिर्बाधिता भवति। सवनीयस्य स्वस्थानादुत्कर्षः अग्नीषोमीयस्य स्वस्थानात् स्वानन्तरसवनीय-स्थानाच्चोत्कर्ष इत्युत्कर्षवैषम्यञ्च भवतीति, न्यायेन साहित्यस्य सवनीयस्थानकत्वसिद्धिरिति मन्तव्यम्। अत एवात्र परिष्कारे पङ्क्तियोजनमन्यथा कृतम्। **तत्रेति**। अग्नीषोमीयादिषु त्रिषु पशुष्वित्यर्थः। **सवनीयस्येत्यादि**। **अयमर्थः**। पशूनां साहित्यं नाम सहाङ्गानुष्ठानमित्युक्तम्। तेन सवनीयस्थाने साहित्यमिति सवनीयस्थाने त्रयाणामपि पशूनां संस्काराद्यनुष्ठानमित्युक्तं भवति। सवनीयस्थानञ्चाश्विन ग्रहग्ररणोत्तरकालरूपम्। तेनाश्विनग्रहग्रहणोत्तरकालेऽग्नीषोमीय-सवनीयानुबन्ध्यानां त्रयाणां पशूनामुपाकरणादौ कर्तव्ये कस्य प्रथमं करणमित्यपेक्षायां स्थानकृतोपस्थिति विशेषात् प्रथमं सवनीयस्योपाकरणं तदनन्तरमितरयोरिति स्थानकृतोऽयं क्रम इति।

**तथा दर्श** इति। इदमनुसन्धेयम्। आग्नेयस्य सान्नाय्ययागयोश्च हवींषि पक्त्वा वेद्यामासाद्य तदुत्तरकालं पञ्च प्रयाजा इज्यन्ते एषु प्रयाजेषु कृतेषु तदुपयुक्तस्य जुहूस्थस्याज्यस्य यः शिष्टोंशस्तस्य प्रतिपत्तित्वेनाग्नेयादि

प्रधानया गहविष्षु अभिघारणं विहितं प्रयाजशेषेण हवींष्यभिघारयतीति। एवमभिघारणे कर्तव्ये किं प्रथमम् आग्नेयहविषोऽभिघारणं पश्चात्सान्नाय्यहविषोरिति क्रम उत विपरीत इति संशयो भवति । तत्र प्रवृत्तिक्रमानुसरणे विपरीतः क्रम आदर्तव्य इति भाति । तथाहि - दिनद्वयसाध्ये दर्शयागे प्रथमदिने प्रातःकाले शाखाच्छेदनं वत्सापाकरणमित्यादीनि सान्नाय्ययागसम्बन्धीन्यङ्गानि क्रियन्ते। तस्मिन्नेव दिने अपररात्रे आग्नेययागसम्बन्धि निर्वापादि क्रियते । एवं प्रथमं सान्नाय्याङ्गानां पश्चाच्चाग्नेयाङ्गानां प्रवृत्तत्वात् तदनुरोधेन प्रथमं सान्नाय्यहविषोरभिघारणं पश्चादाग्नेयहविष इति। तमिमं क्रमं परित्यज्यान्यः क्रमः स्वीकर्तव्यः । प्रथमं हि आग्नेयागानुष्ठानं पश्चात् सान्नाय्ययोः । तेन मुख्यभूतयागक्रमेणाभिघारण क्रमो भवति नाङ्गान्तरप्रवृत्तिक्रमेण। अङ्गानां परस्परमधिकक्षणव्यवधान परिहारो हि प्रवृत्तिक्रमानुसरणे बीजम्। प्रकृते तदनुसरणे मुख्यस्याङ्गस्य चाधिकक्षणव्यवधानमापद्यते । तदा हि प्रथमं सान्नाय्यहविषोरभिघारणं पश्चादाग्नेयहविषः अनन्तरमाग्नेययागः तदनन्तरं सान्नाय्ययागाविति क्रमः । तत्राग्नेयहविरभिघारणस्य सान्नाय्ययागयोश्च पुनर्द्वाभ्यां पदार्थाभ्यां व्यवधानं भवतीति वैषम्यम् । अतः तत्परिहारायाग्नेयहविरभिघारणं सान्नाय्यहविरभिघारणम् आग्नेययागः सान्नाय्ययागाविति क्रमे तुल्यव्यवधानमिति मुख्यक्रमात् क्रम इति।

निरूपणे अन्यादृशक्रमादरणेऽपि पूर्वपूर्वप्रमाणापेक्षया

उत्तरोत्तरप्रमाणं दुर्बलमिति प्राबल्यदौर्बल्यकथनसौकर्याय निरूपि षडपि प्रमाणानि क्रमान्तरेण कीर्तयति (१००) **इत्येवं श्रुतीति** ॥

*इति सहजपरिमलान्वितरक्ताम्बुजकृष्णपङ्कजः प्रथितः ।*
*विख्यातवंशभूमा श्रीशैलो व्यधित सुमनसां मोदम् ॥*

*दौर्जन्यमुज्झितवतां हृदयङ्गमः सन्*
*प्रज्ञां दिशन् परिचयेन कृतेन सम्यक् ।*
*जेजीयते जगति सन्ततमुज्ज्वलाङ्गो*
*ग्रन्थोऽपि कोऽपि सुधियां कमलेक्षणोऽपि ॥*

इति मीमांसाकेसरि - मीमांसार्णव-पण्डितराजेत्यादि
बिरुदभूषितानां **श्रीशैलताताचार्याणां** कृतिषु
मीमांसापरिभाषाव्याख्यारूपः
**अक्षरार्थः** पूर्णतामाप्नोत् ।